निवाऽभवत्। यो ग्रन्थकर्तुर्मम ग्रन्थरचनाधिकाराभावेऽपि संस्कृतवाण्या गुरुचरितरचनद्वाराऽतः, मत्तः स्वविमलयशोऽवाचयत्। अत्र दृष्टान्तः। पिता पुत्रस्याऽऽस्यात् नववचः नवीनवचनमिव। किमर्थं। निजमुदे स्वसंतोषाय। स शिवो देवो दत्तात्रेयः। मुहुः इह लोके मन्मुखादेव काव्यरूपामुक्तिं। हि, निश्चयेन। वाचयति मदिच्छाभावेऽपि बलान्मां वाचालं करोति। दृष्टान्तालंकारः। 'दृष्टान्तः पुनरेतेषां भावानां प्रतिबिम्बन'मित्युक्तेः॥ शिखरिणी॥ २॥

मुग्धा जग्धा दग्धा म्लिष्टा वाऽर्भस्य वाक् पितुर्मिष्टा॥
शिष्टाल्पदोषदुष्टा दिष्टाद्यूनोऽपि सास्य किं नेष्टा ॥ ३॥

यद्यपि पूर्वग्रन्थोक्तिरतिसमीचीनाऽथापि मुग्धा, अयथार्थस्वरवर्णा। जग्धा, ग्रस्तपदाक्षरा। दग्धा, कोपाद्यावेशेन। म्लिष्टाऽविस्पष्टा वाऽर्भस्यार्भकस्य वाक् पितुर्मिष्टा न किं अपि त्विष्टैव। एवमास्तां तावद्बाल्ये। दिष्टाद्दैववशाद्यूनोऽपि तरुणस्यापि पुत्रस्य शिष्टोऽवशिष्टो योऽल्पदोषः स्खलद्दृष्ट्यादिलक्षणः तेन दुष्टाऽप्यर्भस्य पुत्रस्य वाक् पितुर्नेष्टा किं अपि तु इष्टैव। एतन्न्यायेन ममापि वाक् प्रभोरिष्टैव॥ आर्या॥ ३॥

धीशुद्ध्यै प्राक्चरित्रार्थ एष संगृह्यते स्फुटः
प्राज्ञैः प्रेक्ष्योऽत्र तत्सारो दर्पणेऽल्पे यथा मठः॥ ४॥

नन्वनवग्राह्यमहिम्नो भगवतश्चरित्रवर्णने त्वं कियानेव यत्र वेदा अपि चकिता इति चेत् 'नभः पतन्त्यात्मसमं पतत्रिण' इति न्यायमाश्रित्य निजधीपरिणामावधिवर्णनेन धीशुद्ध्यै, स्वस्यान्येषां च बुद्धिशुद्धये एष, वक्ष्यमाणत्वेन हृदि स्थितः, प्राक्चारित्रार्थः पूर्वोक्तगुरुचारित्रार्थोऽत्र मया संगृह्यते संग्रहेणाऽत्र कथ्यते। तर्हि पूर्वापेक्षयात्र काठिन्यं स्यादित्यत आह। स्फुटः न तु गूढः। तर्हि प्राक्चरितेनैव धीशुद्धिर्भवतु कुतो न्वयं पुनरभिक्रमः। अभिक्रमेऽपि कृत्स्नः पूर्वचरित्रार्थः स्फुटत्वेनात्र कथं संगृहीत इत्यत आहार्धेन। पूर्वचरितं विस्तृतं तत्सारोऽत्र ग्रन्थे प्राज्ञैः

प्रेक्ष्यः । अल्पेऽपि स्फुटत्वेन सर्वसारप्रेक्षणे दृष्टान्तः । दर्पणेऽल्पे यथा मठ इति । 'साधर्म्यं उपमाभेद' इत्युक्तेरुपमालंकारः ।। अनुष्टुप् ।। ४ ।।

**गन्धर्वपूर्या प्रथिता क्षितौ गोगन्धर्वपूर्णाऽमरजापरीता ।।**
**गन्धर्वपूर्वाऽमरमण्डिता च गन्धर्वपूस्तुल्यकुसंसृतिघ्नी ।। ५ ।।**

चरितारम्भायोपोद्घातः । क्षितौ या गन्धर्वपूर्गाणगापुरमिति प्रथिता विश्रुता । गावः प्रसिद्धाः गन्धर्वा अश्वास्तैः पूर्णा । अमरजाख्यनद्या परीता परिवेष्टिता । गन्धर्वपूर्वामरैः गन्धर्वादिदेवैः मण्डिता विभूषिता च गन्धर्वपूस्तुल्या मिथ्याभूता या कुसंसृतिः कुत्सितसंसारस्तां निहन्तीति तथा ईदृशी प्रथिताऽस्ति । 'अर्थे सत्यर्थचिन्नाश'मिति यमकालंकारः ।। इन्द्रवज्रा ।। ५ ।।

**सुचिरार्जितपातकान्तकं रुचिरागारमिदं ह्यकान्तकम् ।।**
**अचिरादखिलार्थदं पुरं शुचिराजेन विराजितं वरम् ।। ६ ।।**

पुनः कथंभूतं गाणगापुरं । सुचिरार्जितं अनेकजन्मार्जितं यत्पातकं तस्यान्तकं विनाशकम् । रुचिराणि सुन्दराण्यगाराणि गृहाणि यस्मिन् तत् । हि निश्चयेन । निवासिनां अकान्तकं दुःखवारकं । पुनश्चाचिराच्छीघ्रमेवाखिलार्थदं धर्मार्थकाममोक्षप्रदं । 'वायुः पवित्रमुच्यत' इत्यादिना ये शुचयो वाय्वग्न्यादयस्तेषां राजा परमात्मा दत्तात्रेयस्तेन विराजितमत एवेदं पुरं वरं सर्वपुरश्रेष्ठम् ।। योगिनी ।। ६ ।।

**सत्रक्रिया द्राक् सफला भवन्ति यत्र प्रियार्थाश्च नरा भवन्ति ।।**
**आपन्नदुःखाः सुखिनश्च दत्त आपन्न दुःखानि यतोऽत्र दत्तः ।।७।।**

यत्र गाणगापुरे सत्रक्रियाः इत्युपलक्षणं सर्वकर्मणां । द्राक् शीघ्रं सफलाः भवन्ति । यत्र च नराः प्रियार्थाः निवृत्तिपरा भवन्ति । यत्रापन्नदुःखाश्च सुखिनो भवन्ति । द्रागिति सर्वत्रानुकर्षः । आपत् विपत्तिः यत्र दुःखानि आध्यात्मिकादीनि न दत्ते । यतो यस्मात् कारणात् अत्र गाणगापुरे दत्तः

नृसिंहसरस्वतीरूपेणास्तीति शेषः। यत्र साक्षाद्भगवतो दत्तस्य स्थितिस्तत्र कुतो दुःखादिवार्ता किं वा केषां दुर्लभं इति भावः। यमकालंकारः। इन्द्रवज्रा ॥ ७ ॥

नरसिंहसुनामधारको नरसिंहः किमनामधारकः ॥
इति तद्दृशयेऽवधारकः प्रथितः प्राप स नामधारकः॥८॥

नरसिंह इति शोभनं नाम धारकः। अतएवाऽनामधारकोऽन्वर्थनामकः नरसिंहः किमित्यवधारकः श्रुतवान्। प्रथितः ख्यातः स नामधारकः तद्दृशये तस्य नरसिंहस्य दृशये साक्षाद्दर्शनाय प्राप। पूर्वोक्तपुरमिति शेषः ॥ योगिनी ॥ ८ ॥

सायंदेवान्नागनाथोऽथ देवरावोस्माद्गङ्गाधरोऽस्मात्स एव ॥
पूर्वे सर्वे भक्तिमन्तोऽथ तद्वत्स्यामित्याकाङ्क्षी सरस्वत्यभिख्यः॥ ९ ॥

कोऽसौ प्रसिद्ध इत्यत आह। श्रीगुरुशिष्येषु प्रसिद्धात्सायंदेवान्नागनाथो जातः। अथ तदनंतरं नागनाथाद्देवरावो जातः। अस्माद्देवरावाद्गङ्गाधरो जातः। अस्माद्गङ्गाधरात् स एव नामधारको जातः। स स्वचित्ते विचारयामास। सायंदेवादयः सर्वे पूर्वे भगवद्भक्तिमन्तो जाताः। अहं तु न तादृशः किमनेन तद्वंशजन्मना। अथाऽतः परप्रयत्नेन तद्वद्भक्तिमान् स्यां अहं भवेयं इत्याकाङ्क्षी सरस्वत्यभिख्यः सरस्वतीनामकः स नामधारकः वक्ष्यमाणमुवाचेति शेषः। शालिनी ॥ ९ ॥

मां नो वेत्स्यपि नेक्षसे न शृणुषे सर्वज्ञ साक्षिन् विभो
नोपेक्षाऽर्हति सर्व मेऽज्ञनृपवत्त्वं नासि पूर्वप्रभो ॥
किं दाता सतृडब्दवद्धितर मेऽतोऽर्थ्यं पिताम्बा गुरु-
स्त्वं रुष्टो भव माऽऽगतोऽस्मि शरणं ह्यागःक्षमां मे कुरु॥१०॥

भो सर्वज्ञ, मां न वेत्स्यपि। अपिः प्रश्ने। न वेत्सि किं। भो साक्षिन्

मां नेक्षसेऽपि । भो विभो सर्वव्यापक, करुणं दीनं मद्वचो न शृणुषे किं । ज्ञात्वा दृष्ट्वा श्रुत्वाऽप्युपेक्षा कृतेति चेद्दीनस्य मे उपेक्षा नार्हति भवतो योग्या न भवति । यद्वा हे सर्व, अर्हति प्रशंसनीये भवति मे ममोपेक्षा नोचिता। ननु त्वं मां जानासि अहं तु त्वां विशेषतो न जानामीत्यपि वक्तुं नोचितं । 'जानाति भूपमल्पो नाल्पं भूपो विजानाति' इति किंचिज्ज्ञे भूपे उचितं, न तु भवति । यतः त्वं अज्ञभूपवन्नासि । हे ज्ञेति पृथक् संबोधनं वा । हे ज्ञ सर्वज्ञ, त्वं भूपवत् किंचिज्ज्ञो नासि । संबन्धं विनाऽहं न किंचिद्दास्यामीति चेत्संबन्धं दर्शयन् संबोधयति । हे पूर्वप्रभो पूर्वेषां सायं-देवादीनां प्रभुरधिपस्तत्संबुद्धौ । पूर्वेषां वा ब्रह्मादिदेवानां प्रभो । नान्य-द्देवतान्तरं प्रार्थनीयमित्यर्थात्सूचितम् । ननु पूर्वैः सेवा कृता तथा त्वं कुर्विति चेत्तत्राह । तृषा सेवादिस्पृहया सहितः सतृट् सः दाता किं । अपि तु न दाता । यदुक्तं 'सेवामपेक्ष्य दाता न हि दाता किं तु तां विना दाते' ति । अथवा तादृशः कुत्सितो दाता किंदाता । अतोऽब्दवन्मेघवत् त्वं अनुपकारिणे मेऽर्थ्यं अर्थादनपेतं तव दर्शनं वितर देहि । सेवामपेक्ष्य दानपक्षेऽपि राजा सेवारहितायापि दासान्वयाय ददातीति सूचनायापि पूर्वप्रभो इति संबुद्धिः । न केवलं त्वं पूर्वप्रभुरपि तु मम पिता अम्बा माता गुरुश्च त्वमेव । 'पितरौ यत्र तु भिन्नौ तत्रान्यतरेण जीवनं हि शिशो' रिति न्यायोऽपि मयि नापद्यत इति भावः । नन्वपराधिनि त्वयि मम रोषोऽस्तीत्यपि न युक्तं । रुष्टो मा भव । हि निश्चयेन त्वां शरणमागतोऽस्मि मे ममाऽऽगसामपराधानां क्षमां कुरु ॥ शार्दूलविक्रीडितम् ॥ १० ॥

द्विज इति नुतिमुक्त्वाऽगात्स मोहं समोऽहं न्विति निज-भजकेभ्यः शंसमानः समानः ॥ नरहरिरथ तं चाऽऽश्वासय-त्स्वप्न एव प्रकटितनिजधाम्नाऽत्राखिलं स्वप्न एव ॥ ११ ॥

स द्विजो नामधारकः इति पूर्वोक्तां स्तुतिमुक्त्वा मोहं मूर्च्छामगात् तदा 'समोऽहं सर्वभूताना' मिति स्मृतेः । अहं समो नु । न्विति वितर्के ।

इति निजभजकेभ्यः शंसमानः कथयानः समानः सर्वसमः पूज्यो वा नरहरिः। अथ मूर्च्छाप्राप्त्यनन्तरं। तं च तमेव तादृशं नामधारकं स्वप्ने स्वप्नावस्थायामेव प्रकटितेन निजधाम्ना स्वस्वरूपेणाऽऽश्वासयत्। कोऽसौ नरहरिः। अत्र नरहरिसंज्ञके सर्वजगदधिष्ठानेऽखिलं नामरूपात्मकं जगत्स्वप्न एव स्वप्नतुल्यमिति भावः॥ मालिनी॥ ११॥

**ततः प्रबुद्धः स तदा प्रबुद्धं जगत्प्रसिद्धं स ददर्श सिद्धम्॥**
**विचिन्त्य दत्तं स मुदाऽवदत्तं कं येन दत्तं सुदृशाऽन्यदत्तम्॥१२**

ततः स्वप्नावलोकानन्तरं प्रबुद्धः स नामधारकः तदा प्रबुद्धं ज्ञानिनं जगत्प्रसिद्धं सिद्धं ददर्श। तदा दत्तं विचिन्त्य स नामधारकस्तं मुदा प्रीत्याऽवदत्। कथंभूतं तं। येन सुदृशा शोभनवीक्षणेन कं सुखं दत्तं। अन्यद् दुःखं अत्तं भक्षितं नाशितमिति यावत्॥ उपजातिः॥ १२॥

**को भवान् कुत आयाति क्वेति भाति पितेति सः॥**
**पृष्टः सिद्धोऽवदच्छुद्धो बुद्धोऽनद्धोऽजमानसः॥ १३॥**

भवान् कः जात्यादिविशिष्टः, कुतः स्थानादायाति आगच्छति, क्व वा एति गच्छति। भवान्पितेति मे प्रतिभाति, इति नामधारकेण पृष्टः शुद्धः रागादिमलरहितः, बुद्धः संजातबोधः, अतएवानद्धः अज्ञानबन्धनान्मुक्तः, अजे श्रीदत्ते आत्मनि मानसं यस्य अजो वा मानसे यस्य सः सिद्धः वक्ष्यमाणमवदत्॥ अनुष्टुप्॥ १३॥

**गुरोश्चरित्रामृतशान्ततर्षः सिद्धोऽयमीशेक्षणजातहर्षः॥**
**भूपृष्ठचारी विधिलब्धतोषः सदा गुरोरस्य च संनिकर्षः॥ १४॥**

गुरोश्चरित्रमेवामृतं तेन शान्तस्तर्षः कामो यस्य सः। ईशस्य श्रीदत्तस्येक्षणेन जातो हर्षो यस्य सः। विधिलब्धेन यदृच्छाप्राप्तेनान्नवसनादिना तोषो यस्य सः। ईदृशोऽयं सिद्ध एतन्नामकः। लोकानुग्रहार्थं भूपृष्ठचारी अस्ति। अस्य मम सदा गुरोः श्रीदत्तात्रेयस्य संनिकर्षः सांनिध्यमस्ति॥ उपजातिः॥ १४॥

**तिष्ये गन्धर्वस्थश्चिन्तामणिरिव स नो गुरुर्द्विशयः ॥**
**सभ्यो माधवतनयो योऽम्बागर्भाशयोदयोऽस्त्यभयः॥१५॥**

तिष्ये कलौ । गन्धर्वस्थः गाणगापुरस्थः । पक्षेऽश्वस्थः । उभयत्रापि चिन्तामणिरिव । द्विशयः द्विभुजः द्वैमातुरो वा । सभ्यः पूज्यः माधवविप्रतनयः । पक्षे सभ्यश्चासौ उमाधवः शंकरश्च तस्य तनयः । योऽम्बा एतन्नामिका ब्राह्मणी पक्षे पार्वती तस्याः गर्भाशयात् उदयोऽवतारो यस्य सः । अभयः भयनिवर्तकः । स नो गुरुरस्ति ॥ अनुमानालंकारः ॥१५॥

**नामधारक उवाच नो गुरुः सोऽपि कष्टमसुखं च नो गुरु ॥**
**वारयत्यपि कथं भवाम्बुधेस्तारयत्यपि तथा दयाम्बुधे ॥१६॥**

तच्छ्रुत्वा नामधारक उवाच । यस्त्वयोक्तः सोऽपि नो गुरुः गुरु कष्टं असुखं च कथं नो वारयत्यपि कुतो न निवारयति । हे दयाम्बुधे, अतितुच्छं ऐहिकं दुःखं यदि न निवारयति तदा अवितथात् अनृतात् भवाम्बुधेः सकाशात् कथं तारयति ॥ रथोद्धता ॥ १६ ॥

**उवाच सिद्धः शृणु वाचमद्धा त्वं द्वैतविद्धात्मक इत्यबोद्धा ॥**
**श्रद्धाविहीनश्च मुधा सुदीनः सिद्धाधिपे दोषमु मा निधा नः॥१७॥**

सिद्ध उवाच मे वाचं अद्धा सत्यं शृणु । त्वं द्वैतविद्धात्मकः संशयाविष्टचित्तोऽस्यतः अबोद्धा अज्ञः । पुनश्च श्रद्धाविहीनः मुधा व्यर्थं सुतरां दीनः ईदृशस्य नाशोऽवश्यंभावी ।'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । नायं लोकोऽस्ति न परो न सुखं संशयात्मन' इति स्मृतेः अतएव नोऽस्माकं सिद्धाधिपे मुधा दोषं मा निधाः मा निधेहि ॥ उपजातिः॥१७॥

**रुष्टे गुरावस्य न कोऽपि पाता तुष्टे गुरावस्य न कोऽपि हन्ता ॥**
**इत्यब्जयोनिः कलये शशंस स किं न दयात् सविमर्श शंस ॥१८॥**

गुरौ रुष्टे सति कोपपात्रभूतस्याऽस्य कोऽपि पाता न । गुरौ तुष्टे चास्य कोऽपि न हन्तेति ब्रह्मवैवर्तपुराणे कलिप्रस्थापनसमयेऽब्जयोनिर्ब्रह्मा कलये

शशंस कथयामास। स निग्रहानुग्रहक्षमो गुरुः किं न देयात् अपि तु सर्वमेव, देयान्न वा देयात् हे सविमर्श संशयाविष्ट नामधारक, इदं शंसा प्रतिपाद्य ॥ उपजातिः ॥ १८ ॥

**काश्यां कष्टेन चेष्टार्पणत उत मुदा तं विशिष्टैष्टजुष्टं पृष्ट्वा पृष्ट्वाऽपि रुष्टं स्वगुरुमविरतं प्रेष्ठमेतं गरिष्ठम् ॥ मिष्टान्नाद्यैश्च तुष्ट्वा वरदहरिहरौ दीपकोऽतीत्य वेदधर्माख्यात्स प्रकृष्टर्द्धिमलभदुभयीमित्यवादीद्विधाता ॥ १९ ॥**

अत्रार्थेऽयमितिहासः—काश्यां काशीक्षेत्रे कम्बलाश्वतरसंनिधौ दीपक एतन्नामकः शिष्यः विशिष्टैरिष्टैश्च जुष्टं सेवितं गरिष्ठं गुरुतरं प्रेष्ठं प्रियतमं रुष्टमपि तमेतं गोदातीरवासिनं वेदधर्माख्यं स्वगुरुं मुदाऽविरतं अनिशं किमभीष्टमिति पृष्ट्वा पृष्ट्वा कष्टेन उत चेष्टार्पणतः भिक्षितैर्मिष्टान्नाद्यैः चकाराद्गलत्कुष्ठाभिभूतस्य अन्धस्य गुरोर्दंशादिवारणैः पूयमलमूत्रादिक्षालनैः सेवया च तं तुष्ट्वा वरदौ च तौ हरिहरौ विष्णुविश्वेश्वरौ अतीत्यातिक्रम्य वेदधर्माख्याद्गुरोः उभयीमैहिकीमामुष्मिकीं च प्रकृष्टर्द्धिं समृद्धिं अलभदिति विधाता ब्रह्मा कलिमवादीत् गुरुभक्तपीडानिवारणार्थं ॥ स्रग्धरा ॥१९॥

**सत्त्वावृतो गुरुस्नेहभरितोऽस्ततमा द्युमान् ॥**
**दीपको दीपक इव दिदीपे लोक उत्तमः ॥ २० ॥**

सत्त्वगुणेनावृतः गुरुविषयकस्नेहेन प्रेम्णा भरितः। पक्षे बहुतैलपूर्णः। अस्तं निरस्तं तमोऽज्ञानं पक्षे ध्वान्तं येन सः। द्युमान् तपसा पक्षे तेजसा देदीप्यमानः। ईदृग्दीपकः दीपकः प्रदीप इवोत्तमः लोके दिदीपे ॥ अनुष्टुप् ॥ २० ॥

**लौकिकस्य तु गुरोर्महिमैवं किं पुनस्त्रिवपुषोऽस्य हि मैवम् ॥**
**कुर्वशेषविदि नूनमसूयां यं ह्यजीजनदपेरनसूया ॥ २१ ॥**

लौकिकस्य तु गुरोरेवं महिमा। किं पुनरस्य त्रिवपुषस्त्रिमूर्तेर्दत्तात्रेयस्य

महिमा वक्तव्यः । हीति प्रसिद्धम् । अतः अशेषविदि सर्वज्ञे श्रीदत्ते नूनं निश्चयेन असूयां मा कुरु । असूया नाम गुणेष्वपि दोषारोपः । कोऽसौ यं हि ऋषेरत्रेः सकाशादनसूयाऽजीजनत् ॥ रथोद्धता ॥ २१ ॥

**अतनुः सतनुः कुत आस तनुस्त्रितनुर्नृतनुः कथमत्रिजनुः ॥**
**इति पृष्ट उवाच स तच्चरणं मतिजुष्टमवेक्ष्य जगच्छरणम् ॥२२॥**

त्रितनुः सच्चिदानन्दरूपः मायाशबलो वा त्रिगुणात्मकः तनोतीति तनुर्जगद्विस्तारक ईश्वरः स्वयं अतनुः सन् सतनुः साकारः तथापि नृतनुः कुतो हेतोरास । अथापि कथं अत्रिजनुरत्रिपुत्रोऽभवत् इति नामधारकेण पृष्टः स सिद्धः जगच्छरणं विश्वरक्षकं मतिजुष्टं बुद्धिवृत्तिव्याप्त्या सेवितं तच्चरणं श्रीदत्तात्रेयपदं अवेक्ष्य विचिन्त्य वक्ष्यमाणमुवाच ॥ तोटक-वृत्तम् ॥ २२ ॥

**लीलयैक इह भाति स स्वया मायया पुरुतनुर्ह्यमायया ॥**
**नैव मुह्यति यदर्चको द्विज स्वैरगः स वरदानतो द्विजः ॥२३॥**

स्वयमेकोऽपि लीलयेह जगति स्वया सत्वप्रधानया माययोपाधिभूतया प्रकृत्याख्यशक्त्या पुरुतनुः बहुरूपो भाति । हीति श्रुतिप्रसिद्धम् । 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेः । अमाययाऽकपटया, भक्त्येत्य-ध्याहर्तव्यम् । यदर्चकः यत्पूजको भक्तः न मुह्यति देहादावात्माध्यासं न करोति । हे द्विज नामधारक, स्वैरगः स्वच्छन्दगामी स ईश्वरः वरदानतः वरदानाद्धेतोः द्विजः ब्राह्मणोऽत्रिपुत्रोऽभूत् । साकारत्वे नृजन्मत्वेऽत्रिपुत्रत्वे च वरदानमेव मुख्यकारणम् स्वार्चनादिना लोकमोहनिरसनाद्यवान्तर-कारणम् ॥ रथोद्धता ॥ २३ ॥

**साऽसूयात्मीयशक्तीरितकहरिहराख्याऽतिथिभ्योऽनसूया**
**तत्कामा याप्तकामा परिहृतवसनान्नं ददौ बालदृष्ट्या ॥**
**बाला जातास्तदा ते सपदि सुवनितातीर्थविख्यापकास्त-**
**द्वत्सोत्थौ वत्सलत्वाद्रसमपि ददतुर्लोचनाभ्यां च साकम् ॥२४॥**

तदेवाह । असूयासहिताः सासूयास्ताश्च ता आत्मीयशक्तयः सावित्रीलक्ष्मीपार्वत्यः ताभिरीरिताः प्रेरिताश्च ते कहरिहराख्या ब्रह्मविष्णुशिवाख्या अतिथयोऽभ्यागताः तेभ्यो, नग्ना भूत्वा भवती भिक्षां ददात्विति याचकेभ्यः स्वयमाप्तकामाऽपि तत्कामाऽतिथिकामाऽनसूया तदाऽमी मम बाला इति बालदृष्ट्या परिहृतवसना सती अन्नं ददौ । तदा ते नारीतीर्थं पतिव्रतेति सुवनितातीर्थविख्यापकास्ते देवाः सपदि तत्क्षणे बाला जाताः । तदा तद्वत्सोत्थौ अनसूयास्तनौ वत्सलत्वाद्वात्सल्येन तेभ्यो बालेभ्यः लोचनाभ्यां साकं रसमपि ददतुः । स्तनौ रसं दुग्धं नेत्रे च रसं प्रेमाश्रु ददतुरित्यर्थः । अनसूययाऽऽनन्दाश्रुपातपूर्वकं तेभ्यो दुग्धं दत्तमिति भावः ॥ स्रग्धरा ॥ २४ ॥

**अथ सा विभून्सुयशसा पयसा शमिताशिपोऽत्रिदयिता शयितान् ॥ प्रमितात्मपालकहितान्प्रमिताक्षरगीति शायितवती वरगीः ॥ २५ ॥**

वरा गीर्वाणी यस्याः साऽत्रिदयिताऽनसूया शोभनं यशः कीर्तिर्यस्य तादृशेन पयसा दुग्धेन शमिता आशिषः कामा येषां तान् प्रमितो बालशयनक्षमो योऽल्प आत्मपालकस्तस्मिन् हितान् निहितान् शयितान् विभून् ब्रह्मविष्णुमहेश्वरान् । प्रमिताक्षरा गीतिर्यथा भवति तथा शायितवती । मुद्रालंकारः । 'सूच्यार्थसूचनान्मुद्रा प्रकृतार्थपरैः पदैः' इति ॥ प्रमिताक्षरा ॥ २५ ॥

**पालकाहितसुबालकालकालोचनात्कुटिललोचना न सा ॥**
**सद्दृशेर्न हि विपर्ययोऽमताऽसद्दृशिस्तु कुटिलाऽपि**
**चादृता ॥ २६ ॥**

पालके आहिता निहिताश्च ते सुबालकाश्च तेषां अलकानां कुटिलकेशानामालोचनात् साऽनसूया कुटिललोचना न जाता । हि यस्मात्सद्दृशे-

विषमेऽपि विपर्ययो न। असद्दृशिः तुशब्दो वैलक्षण्यार्थः। आदृताऽन्विताऽपि कुटिला अतएवाऽमता सतामिति शेषः ॥ रथोद्धता ॥ २६ ॥

**श्रुत्वोद्गीतं गेहमाप्तस्तदाऽत्रिर्ज्ञात्वा सर्वं तान्स तुष्टाव सत्री ॥ पुत्रीभूता नौ भवन्तोऽद्य दिष्ट्या सृष्ट्याद्याः स्वो वोऽद्य धन्यौ सुदृष्ट्या ॥ २७ ॥**

सत्री गृहपतिस्तदा गेहमाप्त आगतः सोऽत्रिः उद्गीतं उच्चैर्गीतं श्रुत्वा ज्ञानदृष्ट्या सर्वं ज्ञात्वा तान् तुष्टाव। भो ब्रह्मविष्णुमहेश्वराः, भवन्तो नावावयोः पुत्रीभूताः अपुत्रा अपि पुत्रत्वं प्राप्ताः एतदद्य दिष्ट्या शोभनं जातम्। भो सृष्ट्याद्याः जगदुत्पत्तिस्थितिलयहेतवः, अद्य वः सुदृष्ट्या आवां धन्यौ स्वः ॥ शालिनी ॥ २७ ॥

**यो विश्वं सृजति च पाति हन्त्यधीशो यो विश्वं विशति च वीक्षते त्र्यधीशः ॥ योऽध्यक्षो गुणरहितोऽप्यजो गुणात्मा याऽज्ञेयस्त्वमसि परा गतिः स आत्मा ॥ २८ ॥**

सृष्ट्याद्या इत्यादेर्विवरणमिदं। योऽधीशो नियन्ता विश्वं सृजति पाति रक्षति हन्त्युपसंहरति च। यस्त्र्यधीशस्त्रिगुणमायामृगीनर्तकः जीवरूपेण विश्वं विशति साक्षित्वेन वीक्षते च। योऽजो गुणरहितोऽप्यध्यक्षो गुणात्माभूत्। यश्च प्रत्यक्षादिप्रमाणैरज्ञेयः स त्वं आत्माऽन्तर्यामी परा पुनरावृत्तिरहिता गतिश्चासि ॥ प्रहर्षिणी ॥ २८ ॥

**वरं वृणीष्वेत्युदितोऽथ स स्तुतैः परंतपः सत्यनुमोदितोऽमृतैः ॥ नुतं सुतं वव्र इमे तथेति तं मतं जगुर्जग्मुरथो यथागतम् ॥ २९ ॥**

अथाऽत्रिस्तवानन्तरं अत्रिणा स्तुतैर्देवैर्वरं वृणीष्वेति उदितः भाषितः स परान् कामादिशत्रून् तापयतीति परंतपः, पुत्र एव वरणीय इति सत्याऽनसूययाऽनुमोदितोऽत्रिः अमृतैर्ब्रह्मादिदेवैर्नुतं स्तुतं सुतं वव्रे आचकाङ्क्ष। इमे देवाः मतं मान्यं तमत्रिं तथेति जगुः। अथो वरदानानन्तरं यथागतं स्वं स्वं लोकं जग्मुः ॥ वंशस्थम् ॥ २९ ॥

साऽदादत्रेर्द्युमत्तेज आधाद्गर्भमथो द्विज ॥
अजानसूत जगति गतिदा इह येऽत्रिजाः ॥ ३० ॥

साऽनसूया अत्रेः सकाशात् ईशाश्रितत्वात् द्युमत्प्रकाशशीलं तेजो वीर्यमादाज्जग्राह । हे द्विज नामधारक, गर्भमाधाद्दधौ । अथो काले दशमे मासि अजान्निर्विकारानपि तानसूत । के ते । ये इह जगति गतिदाः अत्रिजाः चन्द्रश्रीदत्तदुर्वासःसंज्ञाः स्युः ॥ अनुष्टुप् ॥ ३० ॥

मार्गे मार्गप्रदो मार्गशीर्षेऽभूच्छ्रुतिमार्गितः ॥
सौम्यः सौम्यदिने पूर्णः पूर्णमास्यां निशामुखे ॥ ३१ ॥

भक्तानां मार्गप्रदोऽपि दत्तः मार्गे मासि अभूत् । श्रुतिमार्गितोऽपि मृगशीर्षमेव मार्गशीर्षं तन्नामके नक्षत्रेऽभूत् । सौम्योऽपि सौम्यदिने बुधवासरेऽभूत् । पूर्णोऽपि पूर्णमास्यां निशामुखे प्रदोषेऽभूत् प्रादुर्बभूव ॥ अनुष्टुप् ॥ ३१ ॥

दत्तो मया तेऽहमितीह दत्तः पूर्वोऽपरश्चन्दनतश्च चन्द्रः॥
दुर्वासआख्यः प्रथितस्तृतीयः साक्षात्प्रभुर्दत्त इहाद्वितीयः॥३२॥

मया सर्वात्मना विष्णुना तेऽत्रयेऽहं दत्त इति दानादात्मदानात् पूर्व आद्यो दत्तोऽभूत् । चन्दनत आह्लादनादपरश्च ब्रह्मांशश्चन्द्रोऽभूत् । तृतीयः शंकरांशः दुर्वासआख्यः प्रथितः । इहैषां मध्येऽद्वितीयो दत्तः साक्षात्प्रभुर्भगवानेव ॥ उपजातिः ॥ ३२ ॥

यद्वर्जुनालर्कमुखोद्धृदाद्यो वंशौषधीस्वृद्धिकृदिन्दुरम्यः ॥
तप्ताम्बरीषाक्ष इवाम्बरीषं शप्त्वाऽप्यजं निन्य उतान्यथात्वम् ३३

यदुर्ययातिपुत्रः । अर्जुनः कार्तवीर्यः । अलर्को मदालसासुतः । तन्मुखांस्तदादीनुद्धरति तथाभूत आद्यः श्रीदत्तः । वंशस्य ओषधीनां च शोभनामृद्धिं वृद्धिं करोतीति तथाऽऽद्यः अम्मय इन्दुश्चन्द्रः । तप्तेऽम्बरीषे भ्राष्ट्रे इवाक्षिणी यस्य स क्रोधनो दुर्वासाः स्वभोजनात् पूर्वं पीतोदकं

अम्बरीषं राजर्षि शप्त्वा अजं जन्मादिरहितमपि विष्णुं अन्यथात्वं जन्मादिभाक्त्वं उतापि निन्ये ॥ इन्द्रवज्रा ॥ ३३ ॥

**नवसुधा वसुधातल आहृताऽद्य भवता भवतापहृता सता ॥**
**इयमथाऽन्यकथां कथयेत्ययं द्विजनुतो विरतोऽप्यवदद्व्ययम् ३४**

एवमुक्त्वा सिद्धे विरते सति नामधारकः पुनः पप्रच्छ। अद्य सता साधुना भवतापहृता भवता वसुधातले कथारूपेयं नवसुधाऽभिनवामृतं आहृता आनीता। अथान्यकथां कथयेति द्विजेन नामधारकेण नुतः स्तुतः विरतोऽपि सिद्धः विविधा अयाः शुभावहविधयो यस्मिन् तादृशं चरितं अवदत् ॥ द्रुतविलम्बितम् ॥ ३४ ॥

**सकलेश्वरे दिवमिते सकले सकले प्रवेशनमिहास कलेः ॥**
**कुतलेऽप्यवतारदृषिः सुकुले विकलेंऽहसा सति जने सकले॥३५॥**

कलया बलभद्रेण सहितः सकलस्तस्मिन् सकलेश्वरे कृष्णे दिवं वैकुण्ठं इते गते सति सकले संपूर्णे इह कुतले भूतले कलेः प्रवेशनं आस तदा सकले जने अंहसा कालेन विकले सति ऋषिरपि श्रीदत्तोऽपि सुकुलेऽवातरत् ॥ प्रमिताक्षरा ॥ ३५ ॥

**प्राच्यदेशेऽत्रिजस्तारवाच्य एत्य स्म याचते ॥**
**श्राद्धाहेऽन्नं द्विजस्य प्राक् श्राद्धाद्गेहमदीनवाक् ॥३६॥**

अदीनवाक् प्रौढभाषणः तारवाच्य ओंकारवाच्यः अत्रिजः श्रीदत्तः प्राच्यदेशे पाञ्चालनगरे राजाख्यस्य द्विजस्य गेहमेत्यागत्य श्राद्धाहे श्राद्धात्प्राक् अन्नं याचते स्म ॥ अनुष्टुप् ॥ ३६ ॥

**सुमतिर्नाम्नाऽस्य सती सुमतिः सुदती कृत्वाऽतिथये सुनतिम् ॥**
**यशसाऽऽनर्च प्रेम्णा यशसा सरसाऽतो द्यौर्यासा महसा॥३७॥**

शोभना दन्ता यस्याः सा सुदती सुष्ठु मतिर्यस्याः साऽस्य विप्रस्य सती नाम्नाऽपि सुमतिः साऽतिथये श्रीदत्ताय सुनतिं उत्तमप्रणतिं कृत्वा श्राद्धात् पूर्वमपि प्रेम्णा यशसा श्राद्धीयेनान्नेन आनर्च पूजयामास। नन्वनुचित-

मिदमित्यत आह। अतोऽन्नदानाद्रसैः पातालैः सहिता सरसा द्यौः स्वर्गः महसा भ्राजता यशसा कीर्त्या व्याप्ताऽत उचितं कृतम् ॥ त्रिष्टुप्॥३७॥

**कुपुत्रदुःखं परिहर्तुमस्याः सुपुत्रतां दत्त इतः सदस्याः ॥**
**श्रीपादमाहुस्तमु योऽर्च्यवर्यः श्रीपा दयार्द्रेक्षणजीवितार्यः॥३८॥**

एकोऽन्धोऽपरः पङ्गुः पुत्र ईदृक्कुपुत्रदुःखं परिहर्तुं दत्तोऽस्याः ब्राह्मण्याः सुपुत्रतां इतः प्राप्तः। तदा सदस्याः विधिदर्शिनः ब्राह्मणास्तं श्रीपादं आहुः। कोऽसौ। योऽर्च्येषु देवेषु वर्यः मुख्यः श्रीपाः श्रीवल्लभः। दयार्द्रेक्षणेन जीवितः आर्यः चोरहतब्राह्मणो येन तं श्रीपादमाहुरिति ॥ उपजातिः ॥ ३८ ॥

**व्रात्योऽपि योऽव्रात्य इवात्र वेदवेद्योऽप्यखेदं खलु वेद वेदम् ॥**
**कलाधराभः सकलाः कलाश्च विद्याधरार्च्योऽपि च सर्वविद्याः ३९**

स्वतः शुद्धत्वात् संस्कर्तुरभावाच्च विष्णुर्व्रात्योऽपि योऽत्रावतारेऽव्रात्यः संस्कृत इवाभूत्। खलु निश्चयेन वेदवेद्योऽपि वेदं अखेदं यथा तथा वेद। कलाधराभश्चन्द्रकांतिः सकलाः कलाश्च वेद विद्याधरैर्देवैरर्च्योऽपि सर्वविद्याः वेद ॥ उपजातिः ॥ ३९ ॥

**शुशुभे त्रिवृतः श्रीमान् सुशुभेलः स बुद्धिमान् ॥**
**या त्वस्य वाक् स्वतो मिष्टा किमु श्रेष्ठाऽथ शास्त्रतः॥४०॥**

मेखलया त्रिवृतः श्रीमान् शोभावान् सुशुभा इला वाक् यस्य सः बुद्धिमान् शुशुभे। या तु अस्य वाक् स्वतः मिष्टा अथ शास्त्रतः बहु-मिष्टेति किमु वक्तव्यम्। 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति काव्यार्थापत्त्यलंकारः ॥ अनुष्टुप् ॥ ४० ॥

**आजन्मात्मजसंस्कारं कर्तुकामौ मुदाऽन्वहम् ॥**
**तातौ गणयतो वारानियं हि प्रकृतिस्तयोः ॥ ४१ ॥**

स्फुटार्थः। अत्र छन्दोनुरोधेन तातावित्युक्तमित्यत्र पितराविति ग्राह्यम्। 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयो' रित्यर्थान्तरन्यासालंकारः ॥अनुष्टुप् ॥ ४१ ॥

श्रीपाद आनन्दभरो जगाद श्रीवेदसद्वादविदस्तवादः ॥
योगश्रियं तात वृणेऽम्ब मान्यां भोगश्रियं नैव कदाऽप्यमान्याम् ॥ ४२ ॥

श्रीमांश्चासौ वेदसद्वादश्च तं वेत्तीति तथा अस्तो निरस्तो वादिनां वादो येन सः आनन्दभरः श्रीपादः पितरौ जगाद । भो तात, भो अम्ब, मान्यां योगश्रियमहं वृणे । अमान्यां भोगश्रियं कदापि नैव वृणे । 'श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ' इति श्रुत्युक्तत्वात् ॥ उपजातिः ॥ ४२ ॥

उक्त्वा तदेति विरराम स धर्मसेतुः श्रुत्वा पिताऽस्य वचनं द्विजवंशकेतुः ॥ किं प्रव्रजिष्यति सुतोऽयमितीतकम्प्रो विप्रोऽप्यकम्पत विनाऽनिलमेकपुत्रः ॥ ४३ ॥

स धर्मसेतुः श्रीपादस्तदा इत्युक्त्वा विरराम । द्विजवंशकेतुः पिताऽस्य श्रीपादस्य वचनं श्रुत्वा अयं सुतः प्रव्राजिष्यति किमिति इतं गतं कम्प्रं यस्य स राजाख्यविप्रोऽनिलं वायुं विनाप्यकम्पत । 'कारणेन विना कार्योत्पत्तिः' इति विभावनालंकारः ॥ सिंहोन्नता ॥ ४३ ॥

वाचा मोचातिरसया हर्षदः सोऽप्यमर्षदः ॥
इति मत्वाऽब्रवीत्पुत्रमम्बा निम्बातितिक्तगुम् ॥ ४४ ॥

मोचा पक्वरम्भाफलं ततोऽतिरसया वाचा पूर्वं हर्षदोऽप्यद्यामर्षद इति मत्वाऽम्बा निम्बादतितिक्ता गौर्वाग्यस्य तं पुत्रं अब्रवीत् ॥ अनुष्टुप् ॥ ४४ ॥

त्वमेकपुत्रोऽस्यत एधि गेही यजाध्वरैर्यैश्च कृतीह देही ॥
कृत्वाऽसुपुत्रः पितृसांपरायं व्रजाऽन्यथा प्राप्स्यसि चान्तरायम् ॥ ४५ ॥

एकोऽन्धोऽन्यः पङ्गुश्चातो हे श्रीपाद, त्वमेकपुत्रोऽसि अतः गेही गृहस्थाश्रमी एधि भव । लोण्मध्यमैकवचनम् । अध्वरैः देवान्यज च ।

इह लोके यैरध्वरैः गेही कृती कृतकृत्यो भवति। तर्हि प्रव्रज्या कदाऽऽदेयेत्यत आह। ' ऋणत्रयमपाकृत्य मनो मोक्षे निवेशये ' दिति स्मृतेः पित्रोः सांपरायं कृत्वा आप्ता लब्धाः पुत्रा येन स तथाविधः सन् व्रज प्रव्रज। अन्यथा ऋणानपाकरणेऽन्तरायं विघ्नं पुनरावृत्तिलक्षणं आप्स्यसि। च एवार्थे॥ उपजातिः॥ ४५॥

**श्रीपदाह कति लालिताः सुता नापि मेम्ब वनिता मता वृताः॥**
**ते क्व ताः क्व जननि क्व चाप्यहं पान्थसंगम इवैष संगमः॥४६॥**

लोकगतिमनुसृत्य श्रीपत् आह। हे अम्ब, मया पूर्वं कति सुताः न लालिताः। मता मान्या वनिताः मे मया न वृताः अपि अपि तु वृताः। हे जननि, ते सुताः क्व। ताः वनिताः क्व। अहमपि चाद्य क्व। एष पुत्रदारादिसंगमः पान्थसंगम इव क्षणभङ्गुरः॥ रथोद्धता॥ ४६॥

**सांपरायाधिलाभोऽम्ब ते न्यासतः सद्गतिर्मेऽप्यतः काऽऽप्तिरन्या सतः॥ इत्युदीर्याग्रजौ स्वक्षिपादौ तदा संविधायाऽऽह सेव्यौ गुरू वां सदा॥ ४७॥**

हे अम्ब, न्यासतः मम संन्यासात्ते सांपरायाधिलाभः। ' पुंजन्म लभते माते ' ति स्मृतेः। अतः संन्यासात् मे ममाऽऽप्तिः सद्गतिः असतः मिथ्याभूतात् संसारात् अतोऽन्या का आप्तिः प्राप्तिः। कापि नेत्यर्थः। इति उदीर्याभाष्य तदा अग्रजौ शोभनाक्षिपादौ संविधाय कृत्वा तौ आह। हे अग्रजौ, सदा वां गुरू पितरौ सेव्यौ॥ स्रग्विणी॥ ४७॥

**पुत्रैः पिताऽर्च्यो हि गृहिपुत्रदेवः श्रुतो यतः॥**
**मातृदेवो भवेत्यादिश्रुतेर्माताऽधिका ततः॥ ४८॥**

पुत्रैः पिताऽर्च्यः पूज्यः। हि यस्माद् गृहिणः पुत्रस्य देवः पिता श्रुतः। ब्रह्मचारिणो गुर्वधीनत्वाद्यतेः संबन्धविरहत्वात् गृहिणा पितरौ सेव्यौ। अत्रापि विशेषः। यतः 'मातृदेवो भव पितृदेवो भवे' त्यादिश्रुतेः मातृ-

पदस्य प्रथमोच्चारितत्वात्ततः पितुर्माताऽधिका । 'पितुर्माता गरीयसी'ति श्रवणात् ।। अनुष्टुप् ।। ४८ ।।

**स्वरूपं दर्शयित्वाऽम्बामाश्वास्य विजहार सः ।।**
**गामटन्नेत्य गोकर्णं जनशोकं जहार सः ।। ४९ ।।**

पूर्वस्मरणार्थं अवधूतं स्वरूपं दर्शयित्वा मा भीरित्यम्बामाश्वास्य स श्रीपादः विजहार सर्वं संन्यस्य निर्गतः । गां भूमिं पर्यटन् गोकर्णं क्षेत्रमेत्य स श्रीपादः जनशोकं जहार आत्मज्ञानप्रदानेन शोकं हृतवान् । 'तरति शोकमात्मविदि'ति श्रुतेः ।। अनुष्टुप् ।। ४९ ।।

**स्वं लिङ्गं दत्तमीशा निशिचरपतये गीतहर्षाद्गणेशा व्याजाद्विष्ण्वाज्ञया तन्निहितमिह पुराऽभून्महाबल्यभिख्यम् ।। क्षेत्रं गोकर्णकं चान्वहमिह हि सह स्वैरिहास्तेऽत्र मुक्ता चण्डालीत्याह मित्रसहनरपतये गौतमस्तद्धि सोऽगात् ।। ५० ।।**

किं तद्गोकर्णमित्यत आह ।ईशा शिवेन स्वं लिङ्गं आत्मालिङ्गं निशिचरपतये रावणाय तत्कृतगीतहर्षाद्दत्तम् । ततोऽनर्थं मत्वा विष्ण्वाज्ञया गणेशा गणेशेनेह क्षेत्रे व्याजाद्ब्रह्मचारिवेषेण पुरा तल्लिङ्गं निहितं स्थापितं तद्रावणेनोद्धृतमपि नोत्थितं। ततः महाबल्यभिख्यं महाबलेश्वरसंज्ञकमभूत् । तच्चोत्पाटनसमये गोकर्णाकारं जातं ततः कारणाच्च तत्क्षेत्रं गोकर्णकं गोकर्णनामकमभूत् । इह हि क्षेत्रे स्वैः परिवारैः सह इः कामः तं हन्तीति इहा कामारिः शिवोऽन्वहं संततं आस्ते । अत्र क्षेत्रे महापापा चण्डाली अज्ञानतोऽपि कृतबिल्वपत्रसमर्पणेन मुक्तेति वासिष्ठशापात्ब्रह्मराक्षसावस्थाकृतब्रह्महत्यादोषदुष्टाय मित्रसहनृपतये गौतमऋषिराह एवंभूतं तत्क्षेत्रं स हि श्रीपादोऽगात् ।। स्रग्धरा ।। ५० ।।

**अपर्णापस्य तत्क्षेत्रमपर्णा यन्निवासिनः ।।**
**गोकर्णाख्ये वसत्यब्दं गोकर्णाकृतिलिङ्गभाक् ।। ५१ ।।**

अपर्णापस्य गौरीरमणस्य तत्क्षेत्रमस्ति । यन्निवासिनः अपर्णा ऋण-त्रयमुक्ता भवन्ति तस्मिन् गोकर्णाख्ये क्षेत्रे गोकर्णाकृतिलिङ्गं भजतीति तथा श्रीपादस्त्र्यब्दं अवसत् ॥ अनुष्टुप् ॥ ५१ ॥

**स विघने गगने गमने गुरुर्मतिमतीव नतीकृतगोतरुः॥ सुख-करोऽप्यकरोदकरोगहृद्द्रुतविलम्बितगोऽखिलगोऽघहृत् ।५२।**

अखिलगः सर्वव्यापी अघहृत् पापहरः । भक्तानां सुखं करोतीति तथा अकं दुखं रोगं व्याधिं च हरतीति तथा कार्यतारतम्येन द्रुतविल-म्बितं च गच्छतीति तथा । भक्ताभीष्टदानेन स्वाग्रतः अतीव नतीकृतः गोतरुः स्वर्गद्रुमः कल्पवृक्षो येन सः गुरुः श्रीपादः गगने विघने जाते सति गमने कृष्णातीरगमने मतिं अकरोत् ॥ द्रुतविलम्बितम् ॥ ५२ ॥

**कृष्णातीरं ययौ भक्ततृष्णाहृच्छ्रीपदस्ततः ॥**
**ययौ कुरुपुरं तारं सुयौवनतनूद्वहः ॥ ५३ ॥**

भक्ततृष्णाहृत् श्रीपदः ततो गोकर्णात् कृष्णातीरं ययौ । शोभनं यौवनं यस्यां सा सुयौवना सा चासौ तनुश्च तां उद्वहति बिभर्तीति तथाभूतः श्रीपादः ततोऽग्रतः तारयतीति तारं मोक्षदं कुरुगड्डीतिसंज्ञकं कुरुपुरं ययौ ॥ अनुष्टुप् ॥ ५३ ॥

**स्वयं तीर्थरूपोऽपि तीर्थप्रकाशं करिष्यन्स्वगत्या जनानु-द्धरिष्यन् ॥ स सस्नौ सुरादेः करोति स्म तृप्तिं सुरर्ष्यादिवर्गः करोत्यस्य तृप्तिम् ॥ ५४ ॥**

स्वयं श्रीपादः तीर्थरूपोऽपि लोके तीर्थप्रकाशं कर्तुमिच्छति करिष्य-तीति करिष्यन् तथा स्वगत्या जनान् उद्धरिष्यन् स श्रीपादः श्रीकृष्णा-तीर्थे सस्नौ स्नानं कृतवान् । सुरर्ष्यादिवर्गः अस्य श्रीपादस्य तृप्तिं वन्दना-दिभिः करोति स श्रीपादः सुरादेस्तृप्तिं तर्पणं करोति स्म । ' लट् स्मे ' इति भूतार्थे लट् ॥ भुजंगप्रयातम् ॥ ५४ ॥

**रेजे राजेव यतिः क्षितितलभद्रासनः शशिच्छत्रः ॥**
**दिग्धृतयशःप्रकीर्णः स्वच्छन्दगतिः क्षमेट् समानश्च॥५५॥**

क्षितितलमेव भद्रासनं सिंहासनं यस्य सः । पक्षे क्षितितले सप्तद्वीपक्षितिपृष्ठे भद्रासनं यस्य सः । शशी चन्द्र एव छत्रं यस्य सः । पक्षे शशीव छत्रं यस्य सः । दिग्भिर्धृतानि यशांसि एव प्रकीर्णानि चामराणि यस्य सः । स्वच्छन्दगतिः स्वैरगतिः । पक्षे अव्याहतगतिः । क्षमा क्षान्तिः । पक्षे भूमिः तस्या ईट् स्वामी । समानः सर्वभूतसमः । पक्षे मानः प्रजादत्तपूजा तेन सहितः समानः । एवं राजेव यतिः श्रीपादः रेजे ॥ आर्या ॥ ५५ ॥

**विश्वस्ता वनितार्दिता सकुसुता मर्तुं नदीमागता काचित्तां तु गतागतापहृदयं सद्भाषितैः सांत्वयन्॥ आवन्तेयकचन्द्रसेनमणिसन्मन्दप्रदोषव्रताख्यानैस्तत्कुसुतं व्यधाद् बुधमदादिष्टं वरं श्रीवरः ॥ ५६ ॥**

अवतारान्तरपातनिका । विश्वस्ता विधवाऽत एवार्दिता पीडिता काचिद्ब्राह्मणी सकुसुता कुपुत्रसहिता सती मर्तुं नदीं कृष्णां आगता प्राप्ता । गतागतापहृत् जन्ममरणापहर्ताऽयं श्रीपादः आवन्तेयकचन्द्रसेनमणिसन्मन्दप्रदोषव्रताख्यानैः तद्रूपैः सद्भाषितैः तां तु सांत्वयन् तत्कुसुतं बुधं पण्डितं व्यधाच्चकार । पुनश्च श्रीवरः श्रीपादः श्रीवल्लभः तस्यै इष्टं जन्मान्तरे स्वसदृशपुत्रप्राप्तिरूपं वरं अदाद्दत्तवान् ॥ शार्दूलविक्रीडितम्॥५६॥

**स यतिरथ भवान्तरेऽपि तस्यै निजसदृशोत्तमपुत्रलब्धयेऽजः॥ अकथयदभयं शनिप्रदोषव्रतमथ सापि च तं जगौ दयालुम् ५७**

अजो निर्विकारः स यतिः श्रीपादः । अथ भवान्तरेऽपि तस्यै ब्राह्मण्यै स्वसदृशोत्तमपुत्रलब्धयेऽभयं भयनिवर्तकं शनिप्रदोषव्रतमकथयत् अथ च सापि ब्राह्मणी दयालुं तं जगौ ॥ पुष्पिताग्रा ॥ ५७ ॥

**भवत्तोऽभवत्तोकरक्षाऽकरक्षा नमस्ते नमस्ते प्रसीद प्रसीद॥ स्मरामि स्मरामित्रपादं त्रपादं न मन्ये त्वदन्येशितारं सुतारम्५८**

भवत्तस्त्वत्तः सकाशादद्य तोकस्य मूर्खपुत्रस्य रक्षा रक्षणमभवत्। अकस्य दुःखस्य रक्षा नाश इत्यर्थः। अभवत्। तस्मान्नमस्ते नमस्ते प्रसीद प्रसीद। आदराद्द्विरुक्तिः। त्रपादं लज्जाहरं स्मरामित्रपादं स्मरारिपदं भवदुक्तप्रकारेण शनिप्रदोपे सर्वदा वा स्मरामि। सुतारं सुतारकं त्वदन्येशितारं त्वत्तोऽन्यमीशं न मन्ये॥ भुजंगप्रयातम्॥५८॥

**अणोरणिम्ने महतो महिम्ने श्रीपादनाम्ने परतत्त्वसीम्ने॥ नमोऽस्तु भूम्नेऽमितसन्महिम्ने सच्चित्कधाम्ने दितमोहदाम्ने५९**

अणोरणिम्ने सूक्ष्मात्सूक्ष्मतराय। महत आकाशादेरपि महिम्ने। परतत्त्वस्य सीम्ने सीमाभूताय। भूम्ने व्यापकाय। अमितः सन्महिमा यस्य तस्मै। सच्चित्कधाम्ने सच्चिदानन्दरूपाय। दितं कृत्तं मोहरूपि दाम येन तस्मै। श्रीपादनाम्ने श्रीदत्तात्रेयाय नमोऽस्तु॥ उपजातिः॥५९॥

**स्तुत्वेति साऽभ्यनुज्ञाता नत्वेशं गृहमागता॥**
**त्यक्त्वेहां भेज इतरां कृत्वेशव्रतमादरात्॥ ६०॥**

सा ब्राह्मणी ईशं श्रीपादं इति स्तुत्वा नत्वा श्रीपादेन त्वं गृहं गच्छेत्यभ्यनुज्ञाता सती गृहमागता आदरादीशव्रतं कृत्वा इतरां ईहां इच्छां त्यक्त्वा भेजे श्रीपादमिति शेषः॥ अनुष्टुप्॥ ६०॥

**ततः प्रेत्य साऽम्बाऽभवद्विप्रकन्या प्रभुः सोऽप्यदृश्योऽभवद्यो वदान्यः॥ स्वतुल्याङ्ग्यभावात्स्वसत्यत्वसिद्ध्यै स्थितोऽत्रापि गुप्तोऽपि भक्तेष्टसिद्ध्यै॥ ६१॥**

ततः सा ब्राह्मणी प्रेत्य अम्बाख्या विप्रकन्या अभवत्। यः वदान्यः सोऽपि श्रीपादः अदृश्योऽभवत्। किमर्थं। स्वतुल्यश्चासौ अङ्गी देहधारी च तस्याभावात् स्वसत्यत्वसिद्ध्यै गुप्तोऽभूत्। गुप्तो भूत्वापि भक्तेष्टसिद्धये अत्रापि कुरुपुरेऽपि स्थितः। भुजंगप्रयातम्॥ ६१॥

**लब्धसंकल्पितेष्टार्थं द्विजं यान्तं गुरुं प्रति ॥**
**व्याजमैत्र्याऽनुगाः कंचिज्जघ्नुश्चोरा हि निर्जने ॥६२॥**

लब्धः संकल्पितेष्टार्थो यस्मात्तं गुरुं प्रति यान्तं कंचिद् द्विजं चोराः व्याजमैत्र्याऽनुगाः सन्तः निर्जने प्रदेशे हि निश्चयेन जघ्नुः ॥ अनुष्टुप् ॥ ६२ ॥

**सद्यो विद्योतितस्तत्र शंकरः किंकरार्तिहा ॥**
**महसा तरसाऽऽगत्य श्रीपदो विपदोऽहरत् ॥ ६३ ॥**

किंकरार्तिहा भक्तपीडाहरः श्रीपादः तत्र देशे सद्यः सपदि विद्योतितः प्रकटितोऽभूत् । श्रीपदः श्रीपादः तरसा वेगेन सहसा मृतं ब्राह्मणमागत्य तस्य विपदोऽहरत् ॥ अनुष्टुप् ॥ ६३ ॥

**यन्मूर्ध्न्यभान्निर्मलचन्द्रहासस्तेनोज्झितो दस्युषु चन्द्रहासः ॥**
**क्षणेन सर्वानकरोद्गतासून्स्मृत्याऽऽत्मतां योऽनयदुद्गतासून् ॥६४**

यस्य मूर्ध्नि निर्मलचन्द्रहासः अभात् । तेन श्रीपादेन दस्युषु चोरेषु वधार्थं चन्द्रहासः खड्गः उज्झितः त्यक्तः । क्षणेन सर्वान् चोरान् गतासून् मृतानकरोत् । योऽन्तकाले स्मृत्या स्वस्मरणेन आत्मतां सायुज्यतां नयति । एतेन चोरा अपि मुक्ता इति ध्वनितम् । उपजातिः ॥ ६४ ॥

**एकस्तत्रागतश्चोरः शरणं करुणं जगौ ॥**
**तस्करोऽहं नहि भवान्तस्करो भास्करोऽपि सन् ॥६५॥**

तत्र तेषां मध्ये एकश्चोरः श्रीपादं शरणमागतः करुणं दीनं यथा तथा जगौ । अहं तस्करो न हि । अतो भवता न हन्तव्यः । भवान् भास्करः स्वयंप्रकाशमानोऽपि सन् तस्कर एव । व्याजोक्तिरलंकारः ॥ अनुष्टुप् ॥ ६५ ॥

**महाचोरो हि भगवान्विर्लीयान्तर्विशन् द्युमान् ॥**
**रहस्यमप्यघं धीमान्सर्वं हरति नो भवान् ॥ ६६ ॥**

तदेवोपपादयति। हि यस्माद्भगवान् षड्गुणैश्वर्यसंपन्नोऽपि महाचोरः। इतरे तु कुटुम्बभरणार्थं चौर्यकर्तारः न तथा भवान्। चौर्यमाह। द्युमान् अपि प्रकाशशीलोऽपि भवान् विलीयाऽन्तर्विशन् हृदयं प्रविष्टः सन् धीमान् चौर्यकुशलः। भवान् रहस्यं गुप्तं सर्वं अघं हरति। अत्र निन्दया स्तुतेरवगमाद्व्याजस्तुतिः। 'उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः' ॥ अनुष्टुप् ॥ ६६ ॥

जन्मप्रभृति न स्तेयं ज्ञातं सुकृतमार्जितम् ॥
तेन धर्मेण भगवन्नुद्धृतोऽस्मि न संशयः ॥ ६७ ॥

स्फुटार्थः ॥ अनुष्टुप् ॥ ६७ ॥

पदान्मुखाच्च भवतो गङ्गा धर्मश्च निर्गतः ॥
गङ्गा मज्जयति स्पष्टं धर्म उद्धरति स्फुटम् ॥ ६८ ॥

स्फुटार्थः ॥ व्यतिरेकालंकारः ॥ अनुष्टुप् ॥ ६८ ॥

क्वाहं मन्दमतिः क्वेमे त्वद्गुणा भूकणाधिकाः॥
तथापि गुणवर्धिन्या दयया तेऽर्हताऽऽगता ॥ ६९ ॥

अहं मन्दमतिः क्व। भूकणेभ्योऽधिकास्त्वद्गुणाः क्व। एवं खलु तथापि गुणवर्धिन्या ते दयया मां प्रति अर्हता योग्यता आगता गुणवर्णनसामर्थ्यं प्राप्तम्। अनुमानालंकारः ॥ अनुष्टुप् ॥ ६९ ॥

श्रीपादोऽपि सकारुण्यां पुण्यामाकर्ण्य तद्गिरम् ॥
दत्त्वाऽभयं ह्यभयकृदजो द्विजमजीवयत् ॥ ७० ॥

अभयकृत् अजः श्रीपादोऽपि सकारुण्यां पुण्यां तस्य गिरं आकर्ण्य श्रुत्वाऽभयं दत्त्वा चोरायेति शेषः। मृतं द्विजं अजीवयत् ॥अनुष्टुप्॥ ७०॥

हततस्करशोणितशोणनिभे सति पूषणि सन्मणिवद्ध्रुदिते ॥
प्रभुरन्तरधाद्दसुधाविबुधः स च बुद्धवदुत्थित ईशदृशा ॥ ७१ ॥

हततस्करशोणितशोणनिभेऽतिरक्ते सन्मणिवन्माणिक्यवत् पूषणि सूर्ये

हि निश्चयेन उदिते सति प्रभुः श्रीपादोऽन्तरधात्। स च वसुधाविबुधः भूसुरः विप्रः ईशदृशा बुद्धवत् सुप्तोत्थितवदुत्थितः ॥ तोटकम् ॥ ७१ ॥

**हृतशेषैर्मुखात्सर्वं श्रुत्वा नत्वाऽस्तुवद्द्विजः ॥**
**हरिं हरे कुतश्चोरगोचरोऽभून्न मे कुतः ॥ ७२ ॥**

स्फुटः ॥ अनुष्टुप् ॥ ७२ ॥

**कस्तेऽर्हतीहितं वक्तुं ब्रह्माद्या अपि मोहिताः ॥**
**कृतं मे सुहितं तात स्ववित्तस्य निमित्ततः ॥ ७३ ॥**

ईहितं चेष्टितम्। स्पष्टमन्यत् ॥ अनुष्टुप् ॥ ७३ ॥

**त्वां विनेतरमदभ्रमुदारं नेक्ष ईण्न सममभ्रमुदारम् ॥**
**मन्य एष मितदो ह्यतिकामं त्वं ददासि च करोष्यतिकामम् ७४**

हे ईट् श्रीपाद, त्वां विना अदभ्रं उदारं दानशौण्डं नेक्षे। अभ्रमुः दाराः यस्य स मेघराजस्तं त्वया समं न मन्ये। कुतः एषः मितं परिमितं ददातीति तथा। त्वं तु अतिकामं कामं अतिक्रम्याधिकं ददासि। पुनश्चातिकामं निष्कामं करोषि ॥ स्वागता ॥ ७४ ॥

**शतमुखमुखाः स्तोतुं यं त्वां प्रवृत्तधियोऽपि ते विमुखविमुखा ह्रीता जाता अपीदमवेक्ष्य ते ॥ सुगुण गुणनां कर्तुं वर्ते सुमन्दमतिर्द्युमन्नहह कलये पाणिभ्यां किं कलानिधिमाधिहन् ॥ ७५ ॥**

शोभना गुणा यस्य तत्संबुद्धौ हे सुगुण, शतमुखमुखाः शेषाद्याः यं च त्वां स्तोतुं प्रवृत्तधियोऽपि ते विमुखेभ्यो विमुखा अतीव पराङ्मुखा जाताः इदमप्यवेक्ष्य शाश्वतो ज्ञात्वा सुमन्दमतिरहं ते गुणनां, यद्वा ते सुगुणगुणनां कर्तुं वर्ते प्रवृत्तोऽस्मि। हे द्युमन्, अहहेत्यद्भुते। हे आधिहन्, आधिहर, पाणिभ्यां स्वकराभ्यां कलानिधिं अत्युच्चदेशस्थं चन्द्रं कलये किम्। निदर्शनालंकारः ॥ हरिणी ॥ ७५ ॥

**द्विज इति नुतिमुक्त्वा तत्पुरं प्राप्य चक्रे द्विजभुजिमथ निन्ये श्रीपदस्तं पदं स्वम् ॥ अकलि कलिमलघ्नं येन चित्रं चरित्रं सजलजलदनीलः श्रीपदः श्रीप्रदो नः ॥ ७६ ॥**

द्विजः इति उक्तप्रकारेण नुतिं स्तुतिं उक्त्वा तत्पुरं (कुरुगड्डीं) प्राप्य द्विजभुजिं संकल्पितं ब्राह्मणभोजनं चक्रे। अथ श्रीपदः तं विप्रं स्वपदं सायुज्यं निन्ये। येन कलिमलघ्नं पापहरं चित्रं चरित्रं अकलि कृतम्। सजलजलदनीलः स श्रीपदः नोऽस्मभ्यं श्रीप्रदोऽस्तु ॥ मालिनी ॥ ७६ ॥

**या पूर्वोक्ता द्विजसुवनिता विप्रकन्याऽथ जाता साम्बा साऽम्बार्चनसुनिरता माधवस्याऽऽस कान्ता ॥ विप्रस्योभौ मतिगुणलसद्रूपलक्ष्मस्वभावौ प्रेम्णा बद्धात्मनयनधियौ चक्रवत्सुस्वभावौ ॥ ७७ ॥**

या पूर्वोक्ता द्विजसुवनिता साऽथ विप्रकन्या जाता। सा च साम्बार्चने सुतरां निरता माधवस्य विप्रस्य कान्ता पत्नी अम्बानामिका जाता। उभौ अम्बामाधवौ मतिगुणलसद्रूपलक्ष्मस्वभावौ अभूताम्। अत एव प्रेम्णा परस्परं बद्धः आत्मा मनश्च नयने नेत्रे च धीर्मतिश्च याभ्यां तौ चक्रवत् चक्रवाकवत्सुस्वभावौ आसतुः ॥ मन्दाक्रान्ता ॥ ७७ ॥

**तौ सुस्वरौ सुवसनौ सुमुखौ सुवृत्तौ सव्रीडहावसुखवीक्षणहृष्टचित्तौ ॥ तुच्छीकृतत्रिदशनर्मसुखौ सुगात्रौ देवाविवासतुरुभावपि भद्रपात्रौ ॥ ७८ ॥**

शोभनः स्वरो ययोस्तौ। सुष्ठु वसनानि वस्त्राणि ययोस्तौ। सुष्ठु मुखं ययोस्तौ। शोभनं वृत्तं ययोस्तौ। व्रीडया लज्जया सहितो हावः सव्रीडहावः तेन सुखवीक्षणेन च हृष्टं चित्तं ययोस्तौ। तुच्छीकृतं त्रिदशनर्मसुखं याभ्यां तौ शोभने गात्रे ययोस्तौ। उभावपि भद्रपात्रौ मङ्गलयोग्यौ देवौ इव आसतुः ॥ सिंहोन्नता ॥ ७८ ॥

**अथ साऽमृतभागिनी परा परमानन्दभरादरा वरात् ॥**
**निदधौ परतेज उत्तमं वरदानाच्छुशुभेऽपि सत्तमम् ॥ ७९ ॥**

अथ परा सर्वोत्कृष्टा । परमानन्दभरे आदरो यस्याः सा अमृत-भागिनी अमृतं रतिसुखम् । 'प्रजातिरमृतमानन्द इत्युपस्थः' इति श्रुतेः । ईदृशी साम्बा श्रीपादस्य वरदानात् ईशाश्रयत्वादुत्तमं अलौकिकं परतेजः उत्कृष्टवीर्यं निदधौ । ततः सापि सत्तमं अतिशोभनं यथा तथा शुशुभे ॥ योगिनी ॥ ७९ ॥

**द्वैतवादे प्रवृत्ते तत्कुचयोरिव वादिनोः ॥**
**भ्रूणोऽधात्तन्मुखे नैल्यं माध्यमे चापि गौरवम् ॥८० ॥**

द्वैतवादोऽस्ति ययोः अतः वादिनौ तयोस्तत्कुचयोरिवाऽम्बास्तनयो-रिव द्वैतवादे प्रवृत्ते सति भ्रूणो गर्भस्तयोः कुचयोर्मुखे चूचुके पक्षे तयोर्वादिनोर्मुखे तुण्डे नैल्यं कालिमां अधात् । च माध्यमे उदरे शून्य-वादिनि च गौरवं गुरुत्वं अधात् एतेन गर्भिणीचिह्नं ज्ञाप्यते । यदाह वाग्भट्टः 'क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचनम् । जृम्भा प्रसेकः सदनं रोमराज्याःप्रकाशनम् ।अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुका' विति। अनुष्टुप् ॥ ८० ॥

**सर्वगोऽपि खलु गर्भगोऽभवन्निष्कलोऽपि सकलोपमोऽभवः ॥ मायिकोपमचरित्र ईश्वरे नात्र चित्रमतिमायिके परे ॥ ८१ ॥**

सर्वगः सर्वव्यापकोऽपि गर्भगोऽभवत् । भवत्यस्मादिति भवः अभवः भवनिवर्तको वा निष्कलोऽपि कलाभिः षोडशकलाभिः सहितः सकलो जीव उपमा यस्य तथाविधोऽभवत् । परेऽसङ्गे मायिकोपमचरित्रे अतिमायिकेऽत्रेश्वरे इदं चित्रमाश्चर्यं न ॥ रथोद्धता ॥ ८१ ॥

**हृदयद्वययोगतः स्मृतं दयनीयं खलु दोहदं मतम् ॥ अह-हाऽत्र विचित्रमूह्यतेऽहृदयोऽजोऽप्ययथावदीक्ष्यते ॥ ८२ ॥**

मातुर्गर्भस्य चेति हृदयद्वययोगतः मतं मान्यं दयनीयं दयापात्रं दोहदं स्मृतं खलु। अहहेत्यद्भुते। अत्र प्रस्तुते विचित्रं ऊह्यते तर्क्यते। किं तत्। 'स वा एष महानज आत्मा, अप्राणो ह्यमनाः शुभ्रः' इत्यादिश्रुतेः। अजोऽहृदयोऽपि अयथावदीक्ष्यते लोकैरिति शेषः॥ ॥ योगिनी ॥ ८२ ॥

**महाभूतं भूतं तदहमिह बाह्यान्तरगतं मतं ब्रह्मादीनामनिशमसकृच्चेष्टयति यत् ॥ यतो भीता जाताः पवनमुखदेवाः प्रचलिता विरूपं सर्वादं यदिति वदति स्म द्विजसती ॥ ८३ ॥**

अहृदयस्य दोहदज्ञापनं अजस्य जन्म चाहाष्टभिः—वाचालां तां मत्वा भूतावेशबुध्या लोकैः कस्त्वमिति पृष्टा द्विजसती अम्बा इति वदति स्म। इतीति किम्। अहं भूतं किं पिशाचः। न। महाभूतं कालत्रयानवच्छिन्नम्। कुत्रत्यं अश्वत्थस्थं त्वम्। न। इह जगति सर्वप्राणिनां बाह्यान्तरगतम्। 'स बाह्याभ्यन्तरो ह्यजः' इति श्रुतेः। अत एव ब्रह्मादीनामपि मतं मान्यम्। कुतोऽमूं चेष्टयसीति चेन्न। केवलं इमामेव किं अनिशं ब्रह्मादीनामपि असकृद्वारंवारं यच्चेष्टयति तदहम्। 'अन्तः प्रविष्टः शास्ता जनानामि'ति श्रुतेः। त्वं सत्वरं गच्छ ब्राह्मणस्त्वां बध्नातीति चेत्तस्मादहं न बिभेमि यतो मत्तः पवनमुखदेवाः भीता जाताः अतएव नियमेन स्वस्वकार्येषु प्रचलिताः। तथा च श्रुतिः। 'भीषास्माद्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इति। तर्हि तव रूपं कीदृशम्। विरूपं भयानकरूपम्। 'महद्भयं वज्रमुद्यतमि'ति श्रुतेः। यद्वा विगतं रूपं यस्य तत्। 'न तस्य प्रतिमा अस्ती'त्यादिश्रुतेः। तर्हि किं बलिमादाय त्वं गच्छसीत्यत आह। तर्हि को बलिदाता। अहं तु सर्वादं सर्वभक्षकम्। श्रुतिश्च 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनमि'ति श्रुतेः। ईदृक् यत्तदहं ब्रह्मेति भावः॥ शिखरिणी ॥ ८३ ॥

क्षणलवचपलं किलायुरेषा तनुरस्थ्यामिषमांसयुङ्मलाढ्या ॥
चलदलजलबिन्दुवच्छ्रियस्ता मृगसलिलैस्तुलितं त्विहार्थजातम्

तर्हि किं तवापेक्षितं वैराग्यमिति चतुर्भिराह–आयुर्जीवितकालः क्षणलवचपलं किल। एषा दृश्या तनुः अस्थ्यामिषमांसयुग् बहिः अन्तस्तु मलाढया विष्ठामूत्रश्लेष्मादिपूर्णेत्यर्थः। ताः श्रियः संपत्तयः चलदलबिन्दुवत्क्षणभङ्गुराः। इह तु अर्थजातं द्रव्यराशिः मृगसलिलैस्तुलितम् ॥ पुष्पिताग्रा ॥ ८४ ॥

योगामृतं क्व क्व गलल्लालस्त्रीमुखचुम्बनम् ॥
क्व समाधिः क्व व्यवायो मोहो जडधियामयम्॥ ८५ ॥

भवतु नाम तथा संसारे तु अपूर्वं स्त्रीसुखं लभ्यत इत्यत आह–चन्द्रमण्डलभेदनाल्लभ्यं योगामृतं क्व। गलन्ती लाला यस्मिन् तच्च तत्स्त्रीमुखं च तस्य चुम्बनं क्व। धर्ममेघाख्यासंप्रज्ञातसमाधिः क्व। क्षणलवविरसो व्यवायो मैथुनं क्व। तर्हि सर्वे तदर्थं कुतो यतन्त इत्यत आह। जडधियां अयं स्त्रीसंभोगलक्षणो मोह एव ॥ अनुष्टुप् ॥ ८५ ॥

शमदमसमबन्धुतात्युदारा न न भुवने विरतीतरा हि दाराः ॥
न्यसनसमसुधाशनं न चान्यन्न च सुवृषो ह्यभयार्पणात्तथान्यः॥

तर्हि तव किमभीष्टं तदाह द्वाभ्याम्। अत्युदारा शमदमसमबन्धुता न। भुवने विरत्या इतरा दाराः न हि। न्यसनसमं संन्यासतुल्यं सुधाशनं अन्यन्न। तथा अभयार्पणादन्यः सुवृष उत्तमधर्मो न। पुष्पिताग्रा ॥८६॥

सुधाऽपमानो विषमेव मानो भिक्षासमानं न च सोमपानम् ॥
तदेव मेऽभीष्टतरं परं नो हृदाऽपि काङ्क्षे कुसुखं न वीक्षे ८७

परकृतोऽपमानः सुधाऽमृतम्। मानो विषमेव। परिणामेऽनर्थकरत्वात्। माधुकरीभिक्षासमानं सोमपानं न तदेव मेऽभीष्टतरम्। हृदा मनसाप्यन्यन्नो काङ्क्षे। कुसुखं विषयसुखं नेक्षे ॥ उपजातिः ॥ ८७ ॥

एवं ब्रुवन्ती सुदती सती सा न साधु मन्येऽन्यदुदारहासा ॥
वासालयं भासयती स्वभासा न साध्वसं स्म क्व च वीक्षते सा ८८

एवं उक्तप्रकारेण ब्रुवन्ती सुदती उदारहासा साऽम्बा उक्तादन्यत्साधु न मन्ये एवं ब्रुवन्ती निवासालयं गर्भागततेजसा भासयन्ती बभूवेति शेषः। साऽम्बा साध्वसं भयं द्वितीयाभिनिवेशजं क्व च देहादन्यतो वा न वीक्षते ॥ उपजातिः ॥ ८८ ॥

विज्ञाय लोका इति दोहदेहां तां वीक्ष्य विद्योतितचारुदेहाम् ॥
विसस्मिरेऽथ व्यकरोद्धवश्च क्रिया अभूत्तत्र वरोद्भवश्च ॥ ८९ ॥

लोका इत्युक्तप्रकारेण दोहदस्येहां इच्छां चेष्टां वा विज्ञाय विद्योतितश्चारुदेहो यस्यास्तां अम्बां वीक्ष्य विसस्मिरे। अथ काले चतुर्थादिमासे धवो माधवः क्रियाः पुंसवनादिकाः व्यकरोत्। तत्र च तासु क्रियासु वरोद्भवः महोत्सवोऽभूत् ॥ उपजातिः ॥ ८९ ॥

अभ्रभ्रगेष्टखगसूचितसिद्धिपूर्वप्रव्रज्यकेऽथ समयेऽनपरोऽनपूर्वः ॥
स व्याहरन्प्रणवमाविरभूदजातो जातोऽविता य इह भक्तिमताम्-
मजातः ॥ ९० ॥

अथ समये दशमे मासि। कथंभूते समये। अभ्रं सूर्यं गच्छन्तीति अभ्रगाः तथा न भवन्ति तेऽभ्रभ्रगा अनस्तंगतास्ते च ते इष्टखगा इष्टग्रहाश्च तैः सूचिता सिद्धिपूर्वा प्रव्रज्या यस्मिन् तस्मिन् अनपूर्वः अनपरः अजातो जन्मादिरहितो भगवान् प्रणवं व्याहरन्नाविर्बभूव न तु जज्ञे। कोऽसौ। यः इह लोके भक्तिमतां अजातो जायातः अविता स भगवान् दत्तात्रेयो जातः ॥ वसन्ततिलका ॥ ९० ॥

निरञ्जनेऽस्मिन्पूर्णेऽतिशयाधानमलक्षती ॥
न स्तोऽथापि व्यधात्तातः संस्कारं बुद्धिमान्द्यतः ॥ ९१ ॥

संस्कारश्चातिशयाधानेन मलापाकरणेन च भवति यथा पत्न्याज्यावेक्षणम्। आदर्शे च घर्षणेनागन्तुकमलक्षालनं न तथा अत्र निरञ्जन-

त्वात्पूर्णत्वाच्चातिशयाधानमलक्षती न स्तः । अथापि तातः माधवः बुद्धिमान्यतः जातकर्मादिसंस्कारं व्यधाव्द्यकरोत् ॥ अनुष्टुप् ॥ ९१ ॥

**स च सुतो नृहरीत्यभिधानतः सुविधितो जनकेन च संस्कृतः॥**
**प्रववृधे क्रमतो जनरञ्जनः स तु धिया स्म न वक्ति निरञ्जनः९२**

स च सुतः जनकेन माधवेन सुविधितः नामकर्मसंस्कारविधिनाऽभिधानतः नरहरिरिति संस्कृतः अभूत् । स तु जनरञ्जनः सन् क्रमतोऽनुक्रमेण प्रववृधे । निर्गतं अञ्जनं मायावरणं यस्य स बालधिया न वक्ति स्म बुद्धिपूर्वकं मूकोऽभूत् ॥ द्रुतविलम्बितम् ॥ ९२ ॥

**नानोपाया ये कृतास्ते वृथैव जातास्तातौ दुःखितौ तौ मुधैव ॥**
**मूकं वाचालं करोतीह यत्तु ज्ञं तन्मूकं मेनिरे ब्रह्मवस्तु ॥९३॥**

मूकत्वपरिहारार्थं पितृभ्यां ये नानोपायाः कृतास्ते वृथैव जाताः । ततस्तातौ पितरौ मुधा व्यर्थमेव दुःखितौ जातौ । व्यर्थत्वमाह । इह लोके यत् मूकं वाचालं करोति ज्ञं सर्वज्ञं तद् ब्रह्मवस्तु मूकं मेनिरे । लोका इति शेषः ॥ शालिनी ॥ ९३ ॥

**खिन्नौ वीक्ष्य गुरू व्रतोत्तरमहं वक्ष्ये तदेत्यात्मजः संज्ञाप्याथ स तन्मुदे च कनकं लोहस्य चक्रे द्विजः ॥ पारस्कारगिराऽकरोदुपनयं भिक्षां ययाचे तदा वेदानप्यवदद्वटुः पटुगिराऽहं प्रव्रजिष्ये गुरू ॥ ९४ ॥**

तदा खिन्नौ गुरू पितरौ वीक्ष्य आत्मजः श्रीपादः व्रतोत्तरमहं वक्ष्ये इति संज्ञाप्य संज्ञया दर्शयित्वा तन्मुदे च लोहस्य कनकं स्वर्णं चक्रे । तदा विश्वस्तो द्विजो माधवः पारस्कारगिरा स्वगृह्योक्तानुसारेण तस्योपनयं मौञ्जीबन्धनमकरोत् । तदा बटुर्भिक्षां ययाचे । पटुगिरा वेदानप्यवदत् । भो गुरू पितरौ, अहं प्रव्राजिष्ये सर्वं संन्यस्य गच्छामीत्यप्यवदत् । माध्यंदिनीयशाखाध्यायित्वात् पारस्करगिरेत्युक्तिः । उपाकरणोत्तरं वेदारम्भ इति तु बह्वृचां नियमो न याजुषाणाम् ॥ शालिनी॥९४॥

**तदा माता वाताहतसुकदलीवाऽपतदमुं समुत्थाप्य प्राहाऽ-हहह सुत नाऽयं क्रम उत ॥ पतस्येतेनाऽतो वरय रमणीं भो भव गृही नहीतः पातस्ते परमहितमेतच्छ्रुतिमतम् ॥ ९५ ॥**

एवं श्रुत्वा तदा माता क्षणं वाताहतसुकदलीव अपतत्। क्षणादुत्थाय चामुं पुत्रं समुत्थाप्य स्वकटौ निधाय वक्ष्यमाणं प्राह। अहहेति खेदे हेति पादपूरणे। भो सुत, अयं संन्यासस्य क्रमो न, प्रत्युत एतेन पतसि। अतः रमणीं सदृशीं बुद्धिरूपशीललक्षणसंपन्नां भार्यां वरय। भो सुत, त्वं गृही भव। इतो गार्हस्थ्यात्ते पातो न हि। यतः एतच्छ्रुति-मतं परमहितं ॥ शिखरिणी ॥ ९५ ॥

**संस्कारैः संस्कृतोऽन्तःशुचिरिह लभते साधनानीतरो नो तस्मात्त्वं सद्वितीयो भव भवहतये देवपित्रर्चकः स्याः ॥ कालोप्तं बीजमुच्चैः फलति सुत तथोद्वाहनादि स्वकाले कार्यं पूर्वेऽपि सर्वे पितर इदमहो तात हीच्छन्ति नित्यम् ॥ ९६ ॥**

'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति स्मृतेः कर्माधि-कारार्थं संस्काराः। 'येषां चत्वारिंशत्संस्कारास्ते ब्रह्मणः सरूपतां सलोकतां जयन्ती'ति श्रुतेः। 'पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः। ते पवित्राश्च योग्याः स्यु'रिति स्मृतेश्च। संस्कारैः संस्कृतस्ततोऽन्तः-शुचिः शुद्धान्तःकरणः शमादिसाधनानि लभते। इतरोऽसंस्कृतो नो लभते तस्मात्त्वं द्वितीयया भार्यया सहितो भव। ऋणापाकृतये च देवपित्रर्चकः स्याः भव। काले उप्तं बीजं उच्चैः फलति। हे सुत, तथा उद्वाहादि कर्म स्वकाले कार्यम्। अहो तात पुत्र, सर्वे पूर्वे पूर्वजाः पितरोऽपि हि निश्चयेनेदं गार्हस्थ्यं नित्यमिच्छन्ति ॥ स्रग्धरा ॥ ९६ ॥

**स प्राहाऽम्ब विवेकिनो न नियमोऽयं दुस्तरे नश्वरे संसारे सति सारवर्जित इतो मातः पितः किं सुखम् ॥ दुःखं दार-**

**परिग्रहोऽप्यधनता चेत्क्लेशिताऽशान्तताऽऽढ्यस्याऽप्यन्वगकं स्वसंक्षयमुखं नाकोऽपि चैवंविधः ॥ ९७ ॥**

स बालः प्राह हे अम्ब, त्वदुक्तोऽयं नियमः मादृशो विवेकिनो न। 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति श्रुतेः। भो मातः, भो पितः, सारवर्जिते असति तुच्छे दुस्तरे नश्वरे संसारे इतः संन्यासादन्यत् किं सुखम्। न किमपि। यद्वा कुत्सितं सुखं किंसुखं। दारपरिग्रहोऽपि दुःखमेव। तथापि अधनता दरिद्रता चेत् क्लेशिता। आढ्यस्य धनिनोऽप्यन्वक् अनुपदं अशान्तता पुनश्च स्वस्य द्रव्यस्य सम्यक् क्षयमुखं नाशव्ययादिकं अन्वगनुपदं अकं दुःखमेव। भवतु नाम तथा। स्वर्गसिध्द्यर्थं सर्वमपि संसारदुःखं सोढव्यमित्यत आह। नाकः स्वर्गोऽपि च एवंविधो दुःखदः ॥ शार्दूलविक्रीडितम् ॥ ९७ ॥

**यज्ञे सामग्र्यभावे तु कृषिवदफलं चेत्सुसिद्धोऽपि चान्ते पातः स्वर्गात्तदाज्ञां वितर हि विरतः प्रव्रजाम्येकपुत्रे ॥**
**मद्ध्यानात्त्वं तरिष्यस्यपि झटिति सुतास्ते भविष्यन्त्यपीत्थं प्रोक्त्वाऽस्यै दर्शयित्वा प्रथमतनुमदात्प्राक्स्मृतिं च त्र्यधीशः ९८**

तदेवोपपादयति–यज्ञे देशकालमन्त्रर्त्विग्दक्षिणादिसामग्र्या अभावे तु कृषिवत् अफलं फलाभावः स्यात्। प्रत्यवायाकुलः प्रतिपदगहनोऽपि यज्ञः कथंचित्सुसिद्धश्चेत्तर्हि अन्ते स्वर्गादपि पातः। 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतेः। 'क्षीणे पुण्ये मर्त्यलोकं विशन्ती'ति स्मृतेश्च। 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतामि' त्यादिश्रुतिः प्राशस्त्यार्थैव। तत्तस्मात् हे एकपुत्रे मातः, प्रव्रज्यार्थमाज्ञां मे वितर देहि। विरतोऽहं प्रव्रजामि। तर्हि मम का गतिरित्यत आह। मद्ध्यानात्त्वं तरिष्यसि झटिति ते सुता अपि भविष्यन्ति इत्थं प्रोक्त्वाऽपि विश्वासार्थं तस्यै प्रथमतनुं रूपं दर्शयित्वा त्र्यधीशः तां स्मृतिं चादात् ॥ स्रग्धरा ॥ ९८ ॥

**जननी नवनीतकोमलं नवनीहारभमस्य सोज्ज्वलम् ॥**
**परिरभ्य वपुर्मुमोद सा यदु मातुर्हि सुचन्द्रशीतलम्॥ ९९॥**

नवनीहारभं शुभ्रं सोज्ज्वलं कान्तिमत् नवनीतकोमलं अतिमृदुलं अस्य पुत्रस्य वपुः परिरभ्याऽऽलिङ्ग्य साऽम्बा जननी मुमोद। हि यस्मात् यदु यदेव पुत्रालिङ्गनं मातुः सुचन्द्रः कर्पूरः पूर्णचन्द्रो वा तद्वच्छीतलं भाति ॥ 'अर्थस्य काव्यलिङ्गसमर्थनं' इति काव्यलिङ्गमलंकारः॥ योगिनी ॥ ९९ ॥

**सा प्राहैकसुतं विलोक्य खलु ते दास्याम्यनुज्ञां भवांश्छ्रीपात्सत्यवचास्त्वया सुकृपया गोत्रद्वयं पावितम् ॥ ओमित्युक्तवताऽवतारसुभृता तस्याः स्मृतिर्लोपिता धृत्वा गर्भमसूत साऽपि च सुतौ नित्यं सुताह्लादिता ॥ १०० ॥**

साऽम्बा प्राह एकसुतं विलोक्य तेऽनुज्ञां दास्ये खलु। भवान् सत्यवचाः श्रीपादोऽस्ति। त्वया सुकृपया मातुः पितुश्चेति गोत्रद्वयं पावितम्। तदा ॐ तथाऽङ्गीकरोमीत्युक्तवता। अवतारसुभृताऽवतारधारिणा भगवता पूर्वदत्ता तस्याः स्मृतिर्लोपिता। नित्यं सुतेन भगवताऽऽह्लादिता साऽम्बाऽपि च गर्भं धृत्वा यमौ सुतौ असूत ॥ शार्दूलविक्रीडितम् ॥ १०० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वासुदेवानन्दसरस्वतीविरचित-
श्रीगुरुचरितकाव्यप्रथमसर्गः संपूर्णः ॥ १ ॥ ॐ तत्सत् ॥

---

# द्वितीयशतकम्

योदैन्यं पापतापौ शमयति नियतिध्वंसको हंसकोटयै वैराग्यज्ञानभक्तीर्वितरति तरति ज्ञो यदर्थो यदर्थः ॥ तारस्तं तारतारं हि भज भज भजद्वत्सलो वत्सलोभान्मातेवैति स्वकान्यश्चरणशरणसत्कामधुग्यो दयाब्धिः ॥ १ ॥

॥ श्रीगणेशदत्तगुरुभ्यो नमः ॥ यो भक्तानां दैन्यं पापतापौ च शमयति। तथा नियतिध्वंसको दुर्दैवहरः। यश्च हंसानां कोटयै हंसस्थानापन्नाय वा यतये वैराग्यज्ञानभक्तीर्वितरति ददाति। यो भगवानर्थः प्रयोजनं यस्य स ज्ञः पण्डितो भवति। तारः प्रणवः यः भगवानर्थोऽभिधेयः यस्य सः ईदृशो यो दत्तस्तम्। अविद्याकामकर्मभ्यस्तारयतीति तारः प्रणवस्तेनाऽऽलम्बनेन तारयतीति तारतारस्तम्। 'एतदालम्बनं परमि'ति श्रुतेः। भो जन, हि निश्चयेन भज भज। यः भगवान् भजद्वत्सलः भक्तवत्सलः वत्सलोभान्माता धेनुरिव स्वकान् स्वभक्तानेति आगच्छति। यश्च स्वचरणशरणानां सतां कामधुक् कामधेनुः दयाब्धिश्चास्ति ॥ स्रग्धरा ॥ १ ॥

अथ सत्यगुरर्भकयोस्त्रैमासिकयोः सतोर्जगावम्बाम् ॥
अर्चितसाम्बामम्बामिव हेरम्बाऽभिजान्वितामम्बाम् ॥ २ ॥

अथ सत्या गौर्वाग्यस्य स भगवान् त्रैमासिकयोः अर्भकयोः सतोः अर्चितः साम्बो यया ताम् हेरम्बाभिजान्वितां गणेशगुहयुक्तां अम्बां पार्वतीमिव अम्बां तन्नामिकां अम्बां मातरं जगौ ॥ आर्या ॥ २ ॥

जातौ द्वौ ते द्वौ भविष्यन्ति पुत्रौ कन्या धन्या चापि मान्याऽसि मातः॥ माऽतः पातः संसृतौ ते ह्युमातो मातश्चार्च्याऽऽज्ञापयान्हाय माऽतः ॥ ३ ॥ .

भो मातः, ते द्वौ पुत्रौ जातौ, द्वौ पुत्रौ कन्या च भविष्यन्ति। अतस्त्वं

धन्या मान्या चासि अतः परं संसृतौ संसारे ते पातो माऽस्तु। त्वं उमातः मातः रमातोऽपि च अर्च्या पूज्याऽसि। अतः मा मां गन्तुं काशीं गन्तुं अह्वाय झटिति आज्ञापय आज्ञां देहि ॥ शालिनी ॥ ३ ॥

**इति वदति मतीश्वरेऽम्बिका प्राक्स्मरणत ईपदमाह तं चरित्रम् ॥ अकलि कलिमलघ्नमत्र चित्रं किल भवता सुपवित्रमत्रिपुत्र ॥ ४ ॥**

इति मतीश्वरे बुद्धिप्रेरके तस्मिन् वदति सति प्राक्स्मरणतः पूर्वस्मरणेन तं ई इति श्रीरुच्यते ईपदं श्रीपादं आह। भो अत्रिपुत्र, भवताऽत्र लोके कलिमलघ्नं पापहरं चित्रं विस्मयकरं सुपवित्रं पावनं चारित्रं अकालि किल कृतं खलु ॥ पुष्पिताग्रा ॥ ४ ॥

**यं श्रीपदं वदन्ति त्वाऽखेदं हृतमदापदम् ॥**
**प्राप्तोऽसि मत्पुत्रपदं पदं वन्दे तवापदम् ॥ ५ ॥**

अखेदं यथा तथा हृता मदापत् मद्विपत्तिर्येन पूर्वजन्मनि तं यं त्वा त्वां श्रीपदं वदन्ति स त्वं मत्पुत्रपदं प्राप्तोऽसि तस्य पुत्रस्थानापन्नस्य तवापदं न पद्यते वागादिभिर्न गम्यत इत्यपदं वागाद्यविषयं पदं वन्दे ॥ अनुष्टुप् ॥ ५ ॥

**ये ये कामा दुर्लभा मर्त्यलोके सर्वांस्तांस्तांश्छन्दतो रासि लोके ॥**
**लोकेशस्त्वं श्रीश लोके वदान्यः कल्पद्रुः किं जंगमस्त्वं वदान्यः ॥**

हे श्रीश, ये ये कामा मनोरथा मर्त्यलोके दुर्लभाः सन्ति तान् तान् सर्वान् छन्दतः इच्छामात्रेण लोके जगति त्रिभुवनेऽपीत्यर्थः। स्वभक्तेभ्यो रासि ददासि स त्वं वदान्यः बहुप्रदः लोकेशः श्रीशः जंगमः अतिशयेन सर्वत्र गमनशीलः कल्पद्रुरसि किमेतद्वद। व्यतिरेकालंकारः ॥ शालिनी ॥ ६ ॥

**कृतमन्तुरियं न जातु ते हितदा किंतु विधुंतुदार्तिदा ॥**
**यदरुंतुदवाक् परंतु तेऽपि तु मातुर्न तु जातु दुष्कृतम् ॥ ७ ॥**

इयं ते माता कृतमन्तुः कृतापराधाऽस्ति। जातु कदाचिदपि ते तुभ्यं हितदा न किं तु विधुंतुदो राहुरिव आर्तिदा दुःखदा। यद्यस्मादियं अरुंतुदवाक् मर्मस्पृग्भाषिणी अपि तु ते मातुः जातु कदाचिदपि न तु दुष्कृतं स्यात् मातृत्वात् ॥ योगिनी ॥ ७ ॥

**सुत आह न दोष एष ते मम लीलेयमशेषहृत्स्थितेः ॥**
**अयि तारपुरीं प्रयामि मे स्मरणादस्तु समीपताऽम्ब ते ॥ ८ ॥**

सुतः तां आह। एष ते दोषो न। अशेषहृत्स्थितेः सर्वान्तरस्थस्य ममेयं लीलाऽस्ति। अयि मातः, तारपुरीं काशीं प्रयामि। हे अम्ब, स्मरणादेव ते तुभ्यं मे मम समीपताऽस्तु ॥ योगिनी ॥ ८ ॥

**तथेति मात्रापि तथैव पित्रानुमोदितो मोदितदेववर्गः ॥**
**भर्गप्रभोऽपीक्षितुमेति भर्गमित्यार्यवर्गस्तुत आप काशीम् ॥९॥**

धर्मस्थापनेनानुमोदितो विघ्नकर्तृदेववर्गो येन। भगवद्गीता 'नैव तस्य कृतेनार्थः' इति। शिवगीता अ० १ 'देवा दारादिरूपिणः' इत्यादि ॥ ॥ उपजातिः ॥ ९ ॥

**सूरतं योगनिरतं यतयस्तमनारतम् ॥**
**अजं भजन्तं विरतं नत्वोचुः परधीरतम् ॥ १० ॥**

अनारतं संततं अजं निर्विकारं आत्मानं भजन्तं विरतं संजातवैराग्यं परधीरतं सात्विकबुद्धियुक्तं सूरतं दयालुं योगनिरतं लोकसंग्रहार्थं योगतत्परं तं भगवन्तं नत्वा यतय ऊचुः ॥ अनुष्टुप् ॥ १० ॥

**भृङ्गो याति रसाय किंशुकसुमभ्रान्त्या शुकास्ये स तं यद्वज्जम्बुफलभ्रमाद्विलति तौ पश्चादुभौ दुःखितौ ॥ एवं स्त्रीपुरुषौ परस्परमरं सौख्यभ्रमात्संगतौ तौ स्यातामतिदुःखितौ विधुतसंन्यासायनौ व्यध्वगौ ॥ ११ ॥**

यद्वत् भृङ्गः किंशुकसुमभ्रांत्या पलाशपुष्पभ्रमेण रसाय रसं पातुं

शुकास्ये कीरमुखे याति स शुकः यद्वत्तं जम्बुफलभ्रमाद्गिलति पश्चात् उभौ तौ दुःखितौ भवतः एवं स्त्रीपुरुषौ परस्परं अन्योन्यं सौख्यभ्रमात् अरं अत्यर्थं संगतौ भवतः। विधुतः त्यक्तः 'न्यास एवात्यरेचय'दिति श्रुत्युक्तः संन्यास एवायनं मोक्षमार्गो याभ्यां तौ अतएव व्यध्वगौ दुरध्वगामिनौ तौ स्त्रीपुरुषौ अतिदुःखितौ स्याताम्। भ्रांतिमदलंकारः। स्त्रियो विवाहात्पूर्वं संन्यासेऽधिकारः ॥ शार्दुलविक्रीडितम् ॥ ११ ॥

**सुमखैः सततामृताप्तये द्विजमुख्यास्तु यजन्त्यहो भुवि ॥**
**दिविजा अमृताशिनोऽपि यत्स्मरणं नापि हि कुर्वते दिवि॥१२॥**

सततं अमृताप्तये द्विजमुख्याः भुवि सुमखैः अग्निष्टोमादिभिर्यजन्ति। अहो इत्याश्चर्यम्। अमृताशिनोऽमृतपानशीला अपि दिविजा देवाः दिवि यत्स्मरणं यस्यामृतस्य स्मरणं अपि न हि कुर्वते। अतिपरिचयादवज्ञा भवतीति तात्पर्यम्। 'योगेऽप्ययोगः संबन्धाऽतिशयोक्ति' रित्यतिशयोक्त्यलंकारः ॥ योगिनी ॥ १२ ॥

**अप्रत्यक्षमशेषतोषकरणं पूर्णं जगत्कारणं यत्प्रत्यक्षविलक्षणं सुशरणं भूमाद्वयं तारणम् ॥ तद्ब्रह्म श्रवणादिनेक्ष्यत इति त्रय्याः श्रुतं भाषणं संन्यस्य श्रवणं त्विति श्रुतिगणख्यातिर्गुणव्यञ्जिका ॥ १३ ॥**

अविषयत्वादप्रत्यक्षम्। 'न तत्र चक्षुर्गच्छती'त्यादिश्रुतेः। अशेषतोषकरणं सर्वानन्दकरम्। 'एष ह्येवानन्दयाती'ति श्रुतेः। पूर्णं देशकालपरिच्छेदरहितम्। 'पूर्णमद'इति श्रुतेः। जगत्कारणम्। 'यतो वा इमानि भूतानि जायन्ते'इति श्रुतेः। भूमाद्वयं अपरिच्छिन्नाद्वयरूपम्। तारणं गुर्वादिरूपेण मुमुक्षुतारकम्। प्रत्यक्षादिष्वनुस्यूतमपि प्रत्यक्षादिविलक्षणं अतीन्द्रियत्वात्। सुशरणं सुखाश्रयरूपं यद्ब्रह्म श्रवणादिना ईक्ष्यते अपरोक्षीक्रियते। अधिकारिभिरिति शेषः। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति त्रय्याः श्रुतेर्भाषणं

श्रुतं तत् श्रवणं तु 'संन्यस्य श्रवणं कुर्यादि'ति विधानात् संन्यस्य श्रवणं कर्तव्यमिति गुणव्यञ्जिका सद्गुणप्रकाशिका श्रुतिगणानां ख्यातिः प्रसिद्धिरस्तीति शेषः। श्रुतिश्च 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति ॥ शार्दूलविक्रीडितम् ॥ १३ ॥

**न्यासमार्गमपि भ्रष्टं शंकरः सर्वशंकरः ॥**
**स्थापयामास मूढैः स मतस्तिष्येऽपि धिक्कृतः ॥१४॥**

सर्वशंकरः सर्वेषां सुखकरः शंकर आचार्यः बौद्धसौगतादिमतप्राबल्येन भ्रष्टमपि विरलप्रचारमपि न्यासमार्गं पुनः स्थापयामास। ननु 'अग्निहोत्रं गवालम्बं संन्यासं पलपैतृकम्। देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जये'दिति कलौ पञ्चानां निषिद्धत्वात्कथं तत्स्थापनमिति चेत्। 'यावद्वर्णाः प्रदृश्यन्ते यावद्वेदः प्रवर्तते। अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे' इति तिष्ये कलियुगे मतोऽपि स संन्यासः पुनर्मूढैर्धिक्कृतः ॥ अनुष्टुप् ॥ १४ ॥

**भवेऽब्धाविव सद्वाक्यैर्दृषद्भिरिव रामवत् ॥**
**भगवान्कीशत इव सेतुं बध्नातु शिष्यतः ॥ १५ ॥**

भगवान् सर्वैश्वर्यसंपन्नो भवान् रामवत् राम इव भवेऽस्मिन् संसारेऽब्धाविव दाक्षिणात्यसमुद्र इव। सतः स्वतःप्रमाणभूतस्याप्रामाण्यशङ्काकालुष्यरहितस्य वाक्यानि अवान्तरवाक्यसहितानि तत्त्वमस्यादिवाक्यानि सद्वाक्यानि तैः सद्वाक्यैः दृषद्भिरिव पाषाणैरिव शिष्यतः शिष्यादिद्वारा कीशतः वानर इव सेतुं धर्मम्। 'एष सेतुर्विधरणः' इति श्रुतेः। सेतुमिव बध्नातु शिथिलीभूतं सेतुं जिनादिकर्कटैरुपद्रुतं पुनः दृढं बध्नातु ॥ अनुष्टुप् ॥ १५ ॥

**चञ्चत्पञ्चशराञ्चितं ह्यपचितं न्यञ्चं प्रपञ्चं श्रितं नीचं वञ्चकवञ्चितं कुचरितं मुञ्चन्तमश्रूच्चकैः ॥ काचप्रायसुखाभिवञ्चित-**

हितं तूच्चावचं वीक्ष्य च स्वाचार्योक्त्यनुमार्यहं तिति वचः प्राचामुवाचाधिपः ॥ १६ ॥

एवमुक्तो भगवानाह। चञ्चन्तः पञ्चशराः अरविन्दादय उन्मादादयो वा यस्य तेन कामेनाऽञ्चितं व्याप्तं हि प्रसिद्धं अपचितं उपचयवर्जितं न्यञ्चं नीचं प्रपञ्चं श्रितं। स्वतोऽपि नीचं वञ्चकैर्जाल्मादिभिर्वञ्चितं अतएव कुचरितं दुराचारं उच्चकैः अश्रु मुञ्चन्तं काचप्रायसुखाप्त्या अतितुच्छसुखलब्ध्या वञ्चितं हितं परलोकसाधनं येन एवंभूतं उच्चावचं लोकं तु वीक्ष्य चावलोक्यैवाऽहं तु स्वाचार्योक्तिं अनुसरतीति तथा-भूतो भवामि इति प्राचां ब्रह्मादीनामधिपः भगवानुवाच ॥ शार्दूल-विक्रीडतम् ॥ १६ ॥

इति सारसरस्वतीं गृणन्वृतवान्कृष्णसरस्वतीगुरून् ॥
अवनीतसरस्वतीप्रभुः स नृसिंहाख्यसरस्वत्यभूत् ॥ १७ ॥

इत्युक्तप्रकारेण सारसरस्वतीं सारभूतां वाचं गृणन् कृष्णसरस्वती-गुरून् वृतवान्। अवनीतः स्वमहिम्ना धिक्कृतः सरस्वतीप्रभुर्गीष्पतिर्येन सः नाम्ना नृसिंहाख्यसरस्वतीति अभूत् ॥ योगिनी ॥ १७ ॥

आचार्यं चाप्याचकाङ्क्षेऽमृतार्थं प्राचामाचार्योऽपि सन् संग्रहार्थम् ॥ रेजे न्यासी न्यस्तचूडोपवीतो भेजेऽभ्यासी भैक्ष्य-माज्ञोपवीतः ॥ १८ ॥

'आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि। स्वयं चाचरते यस्मा-त्तस्मादाचार्य उच्यते' इत्युक्तलक्षणमप्याचार्यं अमृतार्थं मोक्षार्थमाच-काङ्क्षे। नित्यमुक्तस्य कुत एतद्विडम्बनमित्यत आह। स्वयं प्राचां ब्रह्मादी-नामप्याचार्यः सन् संग्रहार्थं लोकसंग्रहार्थं आचार्यमाचकाङ्क्ष इति पूर्वेण संबन्धः। न्यस्ता शास्त्रतस्त्यक्ता चूडा शिखा उपवीतं ब्रह्मसूत्रं च येन ईदृक् न्यासी संन्यासी भगवान् रेजे शुशुभे। आ समन्तात् ज्ञायतेऽनेनेति आज्ञं ब्रह्मज्ञानं तदेवोपवीतं यस्य सोऽभ्यासी नानाभ्यासी भगवान् भैक्ष्यं

माधुकरान्नं भेजे। 'शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः' इति श्रुतिहार्दं प्रकटयितुमिति भावः ॥ शार्दूलविक्रीडितम् ॥ १८ ॥

**कुण्डीमण्डितदोर्दण्डो दण्डी दण्डितधीजडः ॥**
**मुण्डी मुण्डितपाखण्डश्चण्डीडिव बभौ मृडः ॥ १९ ॥**

कुण्डीमण्डितः कमण्डलुभूषितः दोर्दण्डो यस्य सः। दण्डी दण्डधरः। दण्डिताः शिक्षिताः धीजडाः मतिमन्दा येन सः। मुण्डी कृतमुण्डनः। मुण्डिताः पाखण्डाः येन पाखण्डशिक्षक इत्यर्थः। चण्डीट् पार्वतीशः मृडयति सुखयतीति मृडः शिव इवाबभौ ॥ अनुष्टुप् ॥ १९ ॥

**नैजं तेजोऽस्य परमं भास्वरं भास्करोपमम् ॥**
**किं पुनस्तपसा ब्रह्मवर्चसाढ्येन भाष्यते ॥ २० ॥**

भास्करोपमं भास्वरं अस्य नैजं तेजः परमम्। तत्तु ब्रह्मवर्चसं वृत्ताध्ययनर्धिः तेनाढ्येन युक्तेन तपसा किं पुनर्भाष्यते। 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' ॥ अनुष्टुप् ॥ २० ॥

**मारो रूपेण वाचा च वाक्पतिः क्षमया क्षमा ॥**
**बुध्द्या बुधो भया भास्वानिति भाति यतिप्रभुः ॥२१॥**

यतिप्रभुर्भगवान् युवतिदृशा रूपेण मारः साक्षात्कामः। वाचा वाक्पतिरिति वाग्मिदृष्ट्या। क्षमया क्षमा पृथ्वीति तितिक्षुदृशा। बुद्ध्या बुध इति पण्डितदृष्ट्या। भया प्रभया भास्वानिव भाति। 'एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः' इत्युल्लेखः ॥ अनुष्टुप् ॥ २१ ॥

**काश्यां प्रकाश्य विशदं श्रुत्याशयमसंशयम् ॥**
**प्रदक्षिणीकृत्य मेरुं बालादिच्छात्रयुग्गुरुः ॥ २२ ॥**
**दत्त्वा प्रयागमागत्य माधवाय विदं मुदम् ॥**
**गत्वा करञ्जनगरं नत्वाऽभाणीत्स्वमातरम् ॥ २३ ॥**

बालादिभिः बालसरस्वत्यादिभिः छात्रैः शिष्यैर्युज्यत इति बालादिच्छा-

त्र्युग्गुरुः भगवान् काश्यां काशीक्षेत्रे असंशयं यथा भवति तथा श्रुतीनां काण्डत्रयात्मकवेदानां आशयं विशदं प्रकाश्य मेरुं प्रदक्षिणीकृत्य पुनः प्रयागमागत्य माधवाय ब्राह्मणाय विदं ज्ञानं तत्फलभूतां मुदं स्वरूपानन्दं च दत्वा करञ्जनगरं गत्वा स्वमातरं नत्वाऽभाणीत् अवदत् ॥ ॥ अनुष्टुप् ॥ २२ ॥ २३ ॥

सोढ्वा गर्भभरं दरं च नितरां कृच्छ्रात्प्रसूयापि च त्यक्त्वा स्वापमपास्य भोगसुरुचिं या पाति माता सुतम् ॥ स्नेहाद्राति पयो न योग्यकरणं तस्या ऋणापाकृतेः स्नेहं दात्यपि काप्रसूतिरपि यः संन्यासिनां दुस्त्यजः ॥ २४ ॥

गर्भभारं नितरां दरं भीतिं सोढ्वा कृच्छ्रात् कष्टेन प्रसूयाऽपि स्वापं निद्रां त्यक्त्वा भोगसुरुचिं अपास्य विहाय या माता सुतं पाति रक्षति स्नेहात् पयः राति ददाति च तस्याः ऋणापाकृतेः योग्यकरणं अनुगुणाचरणं न कुत्सिता प्रसूतिर्यस्याः सा कुपुत्राऽपि स्नेहः प्रेम दात्यपि नाशयति किम् । अपि तु ना यद्वा काप्रसूतिः कुत्सितपुत्रः स्नेहं दात्यपि । अपि तु न । यस्मात् यः मातृविषयस्नेहः संन्यासिनामपि दुस्त्यजः ॥ ॥ शार्दूलविक्रीडितम् ॥ २४ ॥

जहौ विरहजं तापं माताऽऽश्लिष्य सुतं तु तम् ॥
मातुः स तु सुताश्लेषः प्रायश्चन्दनशीतलः ॥ २५ ॥

माता तु तं सुतं भगवन्तं आश्लिष्याऽऽलिङ्गय्य विरहजं वियोगजन्यं तापं जहौ । स तु सुताश्लेष आलिङ्गनं प्रायो मातुश्चन्दनमिव शीतलः । काव्यलिङ्गमलंकारः ॥ अनुष्टुप् ॥ २५ ॥

प्राह स्नेहयुता माता काहमङ्ग कुदेहभृत् ॥
चिन्मयस्त्वं क्व चाऽथापि दयादृष्ट्याऽर्हताऽर्पिता॥ २६ ॥

स्नेहयुता माता प्राह । अङ्ग हे पुत्र, अहं कुदेहभृत् कुत्सितदेहाभिमा-

नधारिणी क्व । चिन्मयश्चिद्रूपस्त्वं च क्व । अथापि दयादृष्ट्या त्वयाऽर्हता योग्यता पूज्यता वाऽर्पिता । अननुरूपयोर्घटनावर्णनात् 'विषमो वर्णनं यत्र घटनाननुरूपयोः' इति विषमेण प्राप्ताया अर्हताया विचार्य रूपकेण प्रतिषेधात् 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्' आक्षेपोऽनयोःसंकरः 'अविश्रान्तजुषामात्मन्यङ्गित्वं स तु संकरः' इति ॥ अनुष्टुप् ॥ २६ ॥

अवदत्स च सद्गुरुस्तु तां भवभीतां विनतां मुहुः स्तुताम् ॥
मम संन्यसनात्तु तेऽमृतं स्वकुलैस्तारपुरेऽपि ते मृतम् ॥२७॥

स च सद्गुरुस्तु भवात्संसाराद्भीतां विनतां स्वयं मुहुः स्तुतां तां मातरं अवदत् हे अम्ब, मम संन्यसनात्तु स्वकुलैः सह तेऽमृतं मोक्षोस्तु । तारपुरे काश्यां ते मृतं मृतिः । नपुंसके भावे क्तः । अस्तु भवतु ॥ ॥ योगिनी ॥ २७ ॥

गृहे गृहेऽथ जगृहे क्षणात्पूजां व्यदर्शयन् ॥
सत्यत्वमिन्द्रो मायाभिः पुरुरूप इति श्रुतेः ॥ २८ ॥

इन्द्रः परमेश्वरः मायाभिः । अंशभेदाद्बहुवचनम् । पुरूणि बहूनि रूपाणि यस्य सः 'इन्द्रो मायाभिः' इति श्रुतेः सत्यत्वं अन्वर्थकत्वं व्यदर्शयन् । गृहे गृहे प्रतिगृहं क्षणात् क्षणेन लोकदत्तां पूजां जगृहे ॥ ॥ अनुष्टुप् ॥ २८ ॥

स्वसाऽथ पप्रच्छ गुरुं स्वभव्यं स्वसाधनं चाह सतां सुभव्यम् ॥
सतीव्रतं तीव्रतरं यतित्वं पत्युस्तनौ कुष्ठमथाऽस्य शान्तिम् २९

अथ स्वसा पूर्वसंबन्धिभगिनी गुरुं भगवन्तं स्वस्या भाविशुभाशुभं पप्रच्छ । मोक्षार्थं स्वसाधनं च पप्रच्छ । स भगवान् तां सुभव्यं भाविशोभनं उत्तमक्षेमं वा तीव्रतरं अव्यभिचारि सतीव्रतं पातिव्रत्यं आह । अयमेव स्त्रीणां धर्मो नान्य इत्याहेति भावः । दंपत्योः परस्परवैरोत्पादनात्पत्युः यतित्वं लत्तया गोस्ताडनात्तनौ देहे कुष्ठं भविष्यतीति चाह । तच्छ्रुत्वा भीतया तया प्रार्थितोऽथ भगवान् अस्य कुष्ठस्य शांतिं वक्ष्यमाणां चाह ॥ उपजातिः ॥ २९ ॥

गोहत्याशान्तये शंभोर्गोतमेनाहृतां नदीम् ॥
सशिष्योऽथैत्य सोऽरक्षद् द्विजं शूलरुजार्दितम् ॥३०॥

अथ सशिष्यः स भगवान् गोहत्याशान्तये प्रसादितात् शंभोः सकाशात् गोतमेनाहृतां आनीतां नदीं गोदावरीं एत्य शूलरुजार्दितं उदरशूलरोगपीडितं द्विजं अरक्षत् ॥ अनुष्टुप् ॥ ३० ॥

सायंदेवगृहेऽथ शिष्यसहितो गत्वाऽपि भुक्त्वाऽऽदराच्छूलार्तं प्रतिकूलशालियशसाऽरक्षत्क्षणाद्रुग्दरात् ॥ नाश्चर्यं त्विदमस्य पादकमलध्यानं करोत्यादराद्यः सोऽपीह हि तारयत्यपि कृपालेशान्महारुग्दरात् ॥ ३१ ॥

अथ शिष्यसहितः स भगवान् सायंदेवगृहे गत्वा आदरात् भुक्त्वाऽपि शूलार्तं द्विजं प्रतिकूलशालियशसा प्रतिकूलशाल्योदनेन रुग्दरात् रोगभयात् क्षणात् क्षणेनारक्षत् । इदं तु नाश्चर्यम् । य आदरात् अस्य भगवतः पादकमलध्यानं करोति स ध्याताऽपि कृपालेशात् महारुग्दरात् संसारभयादिह हि तारयति ॥ शार्दुलविक्रीडितम् ॥ ३१ ॥

सायंदेवं यवनान्मृत्योर्भीतं ततार दरहर्ता ॥
धर्ता कारकशक्तेस्त्रासत्रासो न किं किमिह कर्ता ॥३२॥

दरहर्ता भयहर्ता कारकशक्तेर्धर्ता सेन्द्रियान्तःकरणशक्तिचालकः भगवान्मृत्युरूपाद्यवनाद्भीतं सायंदेवं ततार तारयामास । नाश्चर्यमिदं । यतोऽयं त्रासत्रासो भयस्यापि भयरूपः इह किं किं न कर्ता किं किं न करिष्यति । अपि तु अघटितमपि घटयिष्यतीत्यर्थः ॥ आर्या ॥ ३२ ॥

पन्नगाशननन्दनं किमु पन्नगोऽस्त्यपि किं करी सिंहनन्दनमष्टसिद्धियुताब्धिपुत्र्यपि किंकरी ॥ यस्य तस्य गुरार्चितस्य तु सेवकं यम ईक्षितुं नेश्वरः किमुतेतरः किल पामरः पुनरीक्षितुम् ॥ ३३ ॥

पन्नगाशननन्दनं गरुडपुत्रं पन्नगः सर्पोऽस्ति किं । अपि तु न । यस्य

भगवतः अष्टसिद्धियुताब्धिपुत्री लक्ष्मीः किंकरी अनुचरी आस्ते सुरार्चितस्य देवपूजितस्य तस्य भगवतः सेवकं यम ईक्षितुं नत्वीश्वरः न समर्थः। पुनश्चेतरः पामरः नीचः तमीक्षितुं किमुत। सर्वथेक्षितुमपि नेश्वर इति भावः ॥ चामरम् ॥ ३३ ॥

**द्विजो यवनराजेन प्राप्तो भीतेन सत्कृतः ॥**
**व्यष्टाब्दैर्दर्शनं दास्य इतीशेन निवारितः ॥ ३४ ॥**

भीतेन यवनराजेन सत्कृतः द्विजः सायंदेवः गुरुं प्राप्तः अनुयातुमिच्छुः सन् व्यष्टाद्वैः षोडशवर्षैः दर्शनं दास्य इतीत्थं ईशेन भगवता निवारितः परावर्तितः ॥ अनुष्टुप् ॥ ३४ ॥

**बालः कृष्ण उपेन्द्रमाधवसदानन्दा अहं सप्तमो ज्ञानज्योतिरितीतरेऽप्यज इमानूचे न चेहान्वहम् ॥ स्थेयं वर्णिवनिव्रतिभ्य उदिते धर्मेऽत्र तैश्चान्वहं कर्तव्यं त्वितरैर्विनाऽजशयनं तीर्थाटनं चान्वहम् ॥ ३५ ॥**

बालो बालसरस्वती एवं सदानन्दान्ता अहं सिद्धः षष्ठः सप्तमो ज्ञानज्योतिः इति मुख्यशिष्याः इतरे ऽन्येऽपि च बहवः शिष्याः तानिमान् शिष्यान् अजः भगवानूचे बभाषे। इहान्वहं भवद्भिर्न च स्थेयम्। वर्णिवनिव्रतिभ्यो ब्रम्हचारिगृहस्थवानप्रस्थेभ्यः उदितेऽत्र शास्त्रेणोक्ते धर्मे तैश्चान्वहं यथायथं स्थेयम्। इतरैः स्नातकविधुरसंन्यासिभिः अजशयनं विना चातुर्मास्यं विना अन्वहं तीर्थाटनं कर्तव्यम्। चकारान्मोक्षशास्त्रश्रवणादि ग्राह्यम् ॥ शार्दूलविक्रीडितम् ॥ ३५ ॥

**पुरीः सप्त धाम्नां चतुष्कं विशोकं सरोरण्यतीर्थाश्रमादीन्नदीश्च ॥ द्विषड्ज्योतिराख्यानि लिङ्गानि दृष्ट्वा गुरौ सिंहगे श्रीनगे मां मिलन्तु ॥ ३६ ॥**

अयोध्यादिसप्तपुरीः विशोकं शोकनिवर्तकं जगन्नाथरामेश्वरद्वारकाबदरिकाख्यं धाम्नां चतुष्कम्। मानसादिसरांसि। उत्पलाद्यरण्यानि

पुष्कराद्यानि तीर्थानि। पुलस्त्याद्याश्रमान्। कृष्णावेणीनर्मदागङ्गादिनदीः। द्विषड्ज्योतिराख्यानि लिङ्गानि द्वादशज्योतिर्लिङ्गानि च। उक्तानुक्तसंग्रहार्थं चकारः। एतानि दृष्ट्वा गुरौ बृहस्पतौ सिंहगे सिंहराशिस्थे सति श्रीनगे श्रीपर्वते मां मिलन्तु। भवन्त इति शेषः। तदा तत्र भवतां मम दर्शनं भवेदिति भावः॥ भुजंगप्रयातम्॥ ३६॥

गुरोरवज्ञा भवबन्धदैव गुरोरनुज्ञा भवबन्धदैव॥
सदैव मूर्ध्ना सुमवद्धृतैवं मुदैव ते जग्मुरहं तु नैव॥३७॥

गुरोरवज्ञाऽपमानः भवबन्धदैव। गुरोरनुज्ञा आज्ञा भवबन्धदा भवबन्धछेत्री एव। अत एव भवदाज्ञाऽस्माभिर्मूर्ध्ना सुमवत् पुष्पवत् धृतैवं उक्त्वा ते सर्वे शिष्याः तीर्थाटनार्थं मुदैव जग्मुः। अहं सिद्धस्तु नैवाऽगमम्॥ उपजातिः॥ ३७॥

अन्तेवासी दूरवासी यदि स्यादन्तेवासित्वं तदाऽस्तंगतं स्यात्॥ युष्मत्पादाब्जालिरत्राऽस्त्वितीशो यस्माद्भक्त्या मेऽर्थितो मां जुगोप॥ ३८॥

अन्तेवासी शिष्यः दूरवासी यदि स्यात्तर्हि तदा तस्यान्तेवासित्वं अस्तंगतं नष्टं स्याद्भवेत्। अत एव युष्मत्पादाब्जालिः भवत्पादकमलभृङ्गोऽयं अत्रास्त्विति यस्मान्मे मया ईशो भगवान् अर्थितः प्रार्थितः तस्मान्मां स्वसंनिधौ जुगोप ररक्ष॥ शालिनी॥ ३८॥

स वैद्यनाथं त्वथ लोकनाथः प्राप्तस्तदाप्तो द्विज उज्झिताप्तः॥
तमाह कस्माद्विधुतस्त्वयाप्तः स प्राह हा कष्टमसौ किमाप्तः ३९

अथ लोकनाथः स तु भगवान् वैद्यनाथं पर्यलीस्थं प्राप्तः। तदा उज्झितः त्यक्तः आप्तो हितशंसी गुरुर्येन स उज्झिताप्तः कश्चन द्विजः आप्तः प्राप्तः। तं प्राप्तं विप्रं आह। भगवानिति शेषः रे विप्राधम, त्वया आप्तः गुरुः कस्माद्विधुतः त्यक्तः इति पृष्टः स विप्रः प्राह। भगवन्,

हा कष्टं असौ मया यः परित्यक्तः स आप्तः हितशंसी किं, अपि तु नैव॥
॥ विपरीताख्यानकी ॥ ३९ ॥

**विद्यार्थी तं चाश्रयेऽहं सदैव सेवार्थी सन्मां बबाधे मुधैव ॥**
**स त्यक्तो मे देशिकस्येदृशोऽपि त्यागो न्याय्यो गर्वितस्या-ऽविदोपि ॥ ४० ॥**

तदेवोपपादयति। अहं च विद्यार्थी सन् तं आश्रये। स सेवार्थी सन् सदैव मां मुधैव व्यर्थमेव बबाधे। अतः मे मया स गुरुः त्यक्तः ईदृशो देशिकस्य गुरोरपि त्यागो न्याय्यः न्यायादनपेतः युक्त एव। अविदः अल्पज्ञस्यात एव गर्वितस्य गुरोरपि त्यागो न्याय्यः ॥
॥ शालिनी ॥ ४० ॥

**गुरुराह महान्विहितस्त्वया कुबुध्याऽनयोऽयमविवादः ॥**
**सेवननमनप्रश्नैर्गुरुप्रसादो ह्यतोऽपि भवसादः ॥ ४१ ॥**

गुरुर्भगवानाह। रे विप्र, त्वया कुबुध्या अविवादः निर्विवादोऽयं महान् अनयः अन्यायः विहितः कृतः। हि यतः सेवननमनप्रश्नैः गुरुप्रसादो भवति। अतः प्रसादात् भवसादः संसारकार्श्यमपि भवति ॥ आर्या॥४१॥

**दुर्वृत्तस्यैव भृत्यादेः परित्यागोऽपिनाऽन्यथा ॥**
**पुत्रमांसाशनं मातृगमनं च विधिर्भवेत् ॥ ४२ ॥**

'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः। उत्पथं प्रतिपन्नस्य परित्यागो विधीयते'। 'न्याय्यं भवति शासनं' इत्यादिवचनस्य का गतिरित्यत आह। अपिना अत्रस्थापिपदेन दुर्वृत्तस्य भृत्यादेरेव परित्यागः न गुरोः। अन्यथा तु पुत्रमांसाशनं मातृगमनं चापि विधिर्भवेत्। 'अपि वा मातरं गच्छेन्न तु गङ्गाप्रतिग्रहः। पुत्रमांसं वरं भोक्तुं न तु राजप्रतिग्रहः' इत्यादिवचनान्यनर्थकानि भविष्यन्ति। तस्मात्त्वयाविवादोऽनयः कृत इति साधूक्तम् ॥ अनुष्टुप् ॥ ४२ ॥

**शिष्योऽरुणोऽम्बुहरणाद्गुरुदुःखभागी वैदोऽनआनयनतो गुरुभारभागी ॥ गोरक्षकोऽपि च तथा क्षुधितोपमन्युस्ते धौम्यदेशिकयशोऽनुदिशो विनिन्युः ॥ ४३ ॥**

धौम्यगुरोररुणः शिष्यः गुर्वाज्ञया तत्क्षेत्रार्थमम्बुहरणाद् गुरुदुःखभागी महादुःखभागी अभूत्। तथाऽपरः शिष्यो वैदो धान्यपूर्णस्यानसः शकटस्याऽऽनयनात् गुरुभारभागी जातः। तथा च क्षुधितोऽपि गोरक्षकोपमन्युः दुःखी जात इति शेषः। तथापि ते कृतार्थाः सन्तः धौम्यदेशिकस्य धौम्यगुरोर्यशः कीर्तिं अनुदिशः सर्वादिशः विशेषेण निन्युः॥ वसन्ततिलका ॥ ४३ ॥

**अधुना मधुना तुल्यो भवतुल्यगुरोर्भव ॥**
**यतिसूक्तिमिति श्रुत्वा नत्वा प्राहेति दुर्मतिः ॥ ४४ ॥**

अधुना सांप्रतं भवतुल्यस्य शिवसदृशस्य गुरोः प्रियवचनादिना मधुना तुल्यो भव इति यतिसूक्तिं भगवद्वचनं श्रुत्वा दुर्मतिः ब्राह्मणः नत्वा इति वक्ष्यमाणं प्राह ॥ अनुष्टुप् ॥ ४४ ॥

**युज्यते भिन्नधात्वैक्यं न मुक्तायास्तथा हृदः ॥**
**अतस्तद्दोषहतये मतान्प्राणान्समर्पये ॥ ४५ ॥**

भिन्नधातूनां सुवर्णादीनां पुनरैक्यं युज्यते, भिन्नायाः मुक्तायाः पुनरैक्यं न युज्यते, तथा हृदोऽन्तःकरणस्य पुनरैक्यं न युज्यते। अतः हेतोरहं तद्दोषहतये गुरुद्रोहदोषनाशाय मतान् दुस्त्यजत्वात् मान्यानपि प्राणान् समर्पये परित्यजामि ॥ अनुष्टुप् ॥ ४५ ॥

**इति तन्निश्चयं विद्वान् कृतार्थं तं व्यधाद् द्युमान् ॥**
**निसर्गोऽयं हि महतां यदार्तार्तिनिवर्तनम् ॥ ४६ ॥**

इति तस्य निश्चयं विद्वान् जानन् द्युमान् स्वयंप्रकाशो भगवान् तं विप्रं कृतार्थं व्यधात् व्यकरोत्। एतदर्थान्तरेण वक्ति। तथा हि यत्

आर्तानां आर्तिनिवर्तनं पीडानिरसनं अयं महतां निसर्गः स्वभावोऽस्ति ॥ अनुष्टुप् ॥ ४६ ॥

**पुष्णाति याऽऽर्तान्विनिवृत्ततृष्णान् कृष्णाजमूर्तिः प्रथिताऽत्र कृष्णा ॥ प्रत्यक्तटेऽस्या निवसन्विजिह्वं प्रत्यग्व्यधाद्विप्रसुतं सुजिह्वम् ॥ ४७ ॥**

वर्णतो या कृष्णा अजमूर्तिः विष्णुमूर्तिः प्रथिता या कृष्णा आर्तान् पापार्तान् पुष्णाति तथा विनिवृत्ततृष्णान् विरक्तान् पुष्णाति ईदृश्याः अस्याः कृष्णायाः प्रत्यक्तटे पश्चिमतीरे निवसन् प्रत्यक् व्यापको भगवान् विजिह्वं छिन्नजिह्वं विप्रसुतं सुजिह्वं व्यधात् व्यकरोत् ॥ इन्द्रवज्रा ॥ ४७ ॥

**ततो दक्षिणकाशीति कृष्णापञ्चनदीयुतिः ॥**
**ख्याता या तामितो दत्तो यतोऽब्दान्द्वादशाऽवसत् ॥ ४८ ॥**

ततः दक्षिणकाशीति या पञ्चनदीयुतिः ख्याता तां दत्तो भगवान् इतः प्राप्तः । यतो यत्र द्वादशाब्दान् अवसत् ॥ अनुष्टुप् ॥ ४८ ॥

**दरिद्रभूसुरागारं गत्वाऽमरपुरे हरिः ॥**
**शाकाहारं भजन्विप्रशोकागारं समुच्छिनत् ॥ ४९ ॥**

हरिः भगवान् अमरपुरे दरिद्रभूसुरागारं दरिद्रब्राह्मणगेहं गत्वा तद्दत्तशाकाहारं भजन् विप्रशोकागारं दारिद्र्यं तद्द्योतकशाकवल्लीं वा समुच्छिनत् ॥ अनुष्टुप् ॥ ४९ ॥

**स्थित्वाऽमरपुरे भक्तपुरभित्सुरवेष्टितः ॥**
**बभारामरसंयुक्तपुरंदररुचिं शुचिः ॥ ५० ॥**

शुचिः शुद्धः । 'शुद्धमपापविद्ध'मिति श्रुतेः । पक्षे 'इन्द्रः शुद्धो न आगही'ति श्रुतेः । भक्तानां पुराण्यष्टपुराणि भिनत्तीति भक्तपुरभित् । पक्षे अभक्तानां असुराणां पुराणि नगराणि भिनत्तीति तथा । सुरैः अमरैः अमरेश्वरादिभिः । पक्षे सुरैर्वस्वादिदेवैः वेष्टितः अमरपुरे औरवाटग्रामे

तत्संनिधौ। पक्षे अमरावत्यां स्थित्वा अमरसंयुक्तपुरंदररुचिं देवयुक्तेन्द्रशोभेव शोभा तां बभार। निदर्शनालंकारः ॥ अनुष्टुप् ॥ ५० ॥

**त्रिस्थलीं दर्शयामास योगिनीपूजितोऽजितः ॥**
**गङ्गानुजाय क्षणेनेक्षणेनेदं ततान यः ॥ ५१ ॥**

यः ईक्षणेन पर्यालोचनेनेदं विश्वं ततान स योगिनीपूजितः अजितः भगवान् क्षणेन गङ्गानुजाय प्रयागकाशीगयाख्यां त्रिस्थलीं दर्शयामास ॥ अनुष्टुप् ॥ ५१ ॥

**ततो गन्तुकामो विलोक्याप्तकामो भृशं दुःखिता योगिनीस्ता अकामः ॥ समागादिदं पादुके स्थापयित्वा समाश्वास्य ताः सद्वरांश्च प्रदत्वा ॥ ५२ ॥**

ततः क्षेत्रात् गन्तुकामः स्वयं आप्तकामः अतएवाऽकामः भगवान् भृशं दुःखिताः ताः योगिनीः विलोक्य तत्र पादुके स्थापयित्वा ताः योगिनीः समाश्वास्य ताभ्यः सद्वरांश्च प्रदत्वा इदं गन्धर्वपुरं समागादिति तत्स्थस्य सिद्धस्योक्तिः ॥ भुजङ्गप्रयातम् ॥ ५२ ॥

**ततः प्रभृति तत्पुरं प्रवरमाबभौ सुन्दरं दरं हरति यत्सदा निवसतां सतां सादरम् ॥ वरं च वितरत्यरं गदहरं सुचारं नरं न रञ्जयति किं न किं दुरितहारि पृथ्वीवरम् ॥ ५३ ॥**

ततः प्रभृति तत आरभ्य तत्पुरं नरसिंहवाटिकासंज्ञकं प्रवरं श्रेष्ठं सुन्दरं मनोहरं चाबभौ। यत्पुरं सादरं निवसतां तत्र निवासं कुर्वतां सतां सन्मार्गवर्तिनां नराणां सदा दरं भयं हरति। भक्तेभ्यश्चारं शीघ्रं वरं वितरति ददाति। यच्च गदहरं रोगहरं पुरं सुचारं सदाचारसंपन्नं नरं न रञ्जयति किं अपि तु रञ्जयत्येव। ईदृशं पुरं दुरितहारि पापहरं न किं अपि तु सर्वथा दुरितहारि एव। पुनश्च यत्पुरं पृथ्वीवरं पृथ्व्यां वरं श्रेष्ठं यद्वा पृथिव्याः वरं कुङ्कुमं सौभाग्यमिति यावत्। पृथ्वीवृत्तं च। अत्र मुद्रालंकारोऽनुप्रासालंकारश्च ॥ पृथ्वी ॥ ५३ ॥

सुप्तिस्थितीत्यासनहीन एष कृष्णातटेऽभीष्टकरो विशेषः ॥
गतोऽपि गन्धर्वपुरं दरारिर्यो निर्जिताशेषपुरंदरारिः ॥५४॥

सुप्तिर्निद्रा स्थितिरवस्थानं इतिर्गतिः आसनं उपवेशनं तेभ्यो हीनः निर्विकारः प्रलयेऽपि विशिष्यत इति विशेषः गन्धर्वपुरं गतोऽपि एष भगवान् कृष्णातटेऽभीष्टकर आस्ते । यः निर्जिताः अशेषाः पुरंदरस्यारयः शत्रवो दैत्या येन स दरारिः भक्तभयहर्ता ॥ उपजातिः ॥ ५४ ॥

तत्रत्यविप्रवनिता मृतापत्यत्वदुःखिता ॥
विप्रवाक्याद्गुरुपदं क्षिप्रदं भेज आर्तिदम् ॥ ५५ ॥

मृतापत्यत्वरूपं दुःखं संजातमस्याः सा मृतापत्यत्वदुःखिता तत्र ग्रामे भवा तत्रत्या सा चासौ विप्रवनिता च तत्रत्यविप्रवनिता विप्रवाक्याद्ब्राह्मणवचनेन क्षिप्रदं शीघ्रप्रसादकरं आर्तिदं पीडाहरं गुरुपदं भेजे अष्टतीर्थस्नानपूर्वकं सिषेवे ॥ अनुष्टुप् ॥ ५५ ॥

तया पुरा विप्रधनं हृतं मृतो दयाविहीनः स पिशाचतां गतः ॥ स भीषयामास सतीमतीव तां सुभीषणः स्वप्न उपस्थ आनताम् ॥ ५६ ॥

तया पुरा पूर्वजन्मनि विप्रधनं हृतं । स विप्रः पिशाचतां गतः दयाविहीनः भूतविशेषः अभूत् । स पिशाचः स्वप्ने उपस्थे संनिधौ आनतां तां सतीं अतीव भीषयामास । कथंभूतः सः । सुतरां भीषणः दारुणः ॥ वंशस्थम् ॥ ५६ ॥

सहसा गुरुराप तां नतां तरसा तं विनिवार्य दुःखिताम् ॥
स विधाय च पृष्ठतोऽवदत्सविधे मेऽप्यनयोऽसि को वद ॥५७॥

सहसा अकस्मात् तरसा वेगेन गुरुः दुःखितां नतां तां ब्राह्मणीं आप प्राप । स गुरुः तं पिशाचं विनिवार्य दुःखितां तां पृष्ठतो विधाय च

अवदत् । मे मम सविधे समीपेऽपि त्वं कोऽनयः अन्यायवर्ती असि कस्त्वं वद ।। योगिनी ।। ५७ ।।

एवं वदन्तमवलोक्य स नारसिंहं सिंहोन्नताक्षमपि धूत-विपक्षपक्षम् ।। त्यक्त्वा वसन्ततिलकामिव कान्तवक्त्रां वक्त्रा-गतामिव सुधांशुतनुं तनूनः ।। ५८ ।।

स पिशाचः धूतः विपक्षपक्षः शत्रुपक्षपातो येन, तं सिंहवदुन्नते अक्षिणी यस्य तं नारसिंहं भगवन्तं विलोक्य कान्तवक्त्रां मनोहरमुखीं अतएव वसन्ततिलकामिवातिसुन्दरीं तां तनूनः राहुः वक्त्रागतां सुधांशु-तनुमिव त्यक्त्वा उवाचेत्युत्तरेण संबन्धः ।। सिंहोन्नता ।। ५८ ।।

उवाच नीचः सततं पिशाचः शृणुष्व वाचं त्वमिहाऽप्रपञ्चः।।
द्विपक्षभूतस्तु सपक्षपातो यते विघातश्च न ते प्रशस्तः ।।५९।।

नीचः स च पिशाचः तं भगवन्तं उवाच। हे भगवन्, मे वाचं शृणुष्व । इह लोके त्वं अप्रपञ्चोऽसि । हे यते, द्विपक्षभूतः सपक्षपातः तु ते न प्रशस्तः । तथाचास्मदादीनां विघातः ते न प्रशस्तः ।।उपेन्द्रवज्रा।।५९।।

अनयाऽपहृतो ममैव रा अनया वासनयाऽस्य मेऽवरा ।
सम योनिरुपागतार्थिता मम को वारयिता चिरागताम्।।६०।।

अनया ब्राह्मण्या ममैव राः द्रव्यं अपहृतः । अनया एतया वासनया द्रव्यवासनया हे सम सर्वसाम्य, अवरा निकृष्टा अर्थिता जन्मान्तरे प्रेतो भूत्वेमां धातयिष्यामीति प्रार्थिता योनिः पिशाचयोनिः मम मां उपागता प्राप्ता चिरागतां योनिं को वारयिता । न कोऽपीत्यर्थः । अतो मां व्यर्थं त्वं भीषयसीति भावः ।। योगिनी ।। ६० ।।

गुरुः प्राह ते सद्गतिं कारयिष्ये सुदीनां तथैनां पिशाचोद्ध-रिष्ये ।। इमां भीषयस्यङ्ग चेत्ताडयिष्ये पिशाचोऽपि चोचे तथाऽतस्तरिष्ये ।। ६१ ।।

गुरुर्भगवान् तं प्राह। हे पिशाच, ते सद्गतिं कारयिष्ये। तथा च सुदीनां एनां उद्धरिष्ये। हे अङ्ग, हे पिशाच, अतःपरं इमां ब्राह्मणीं भीषयासि चेत्तर्हि त्वां ताडयिष्ये। तच्छ्रुत्वा पिशाच ऊचे। हे भगवन्, यथा त्वं वदसि तथाऽस्तु। अतो भवदुक्तोपायात् अहं तरिष्ये॥ ॥ भुजंगप्रयातम् ॥ ६१ ॥

**सतीमतीव नीतिमानिमां जगौ त्वया क्रिया विधीयतां सतां मता धिया तयाऽप्यमायया॥ गतिं समाप्नुयादयं लयं च तेऽपि दुष्कृतं मतं सुतं सुतन्तुवर्धकं द्रुतं लभस्व तम्॥ ६२॥**

अतीव नीतिमान् भगवान् न तु प्रभुतयाऽन्यायेन दण्डधर्ता इमां सतीं जगौ। धिया सात्विकबुद्ध्या त्वया सतां मता क्रिया और्ध्वदेहिकी विधीयताम्। अमायया कपटरहितया क्रियया अयं पिशाचः गतिं समाप्नुयात्। ते च तवापि दुष्कृतं लयं समाप्नुयात् तं मतं लोकमान्यं सुतन्तुवर्धकं उत्तमसंतानवर्धकं सुतं पुत्रं द्रुतं शीघ्रं लभस्व॥ ॥ चामरम् ॥ ६२ ॥

**ततो बुध्द्वा तथा कृत्वा तस्मै दत्त्वा गतिं सती॥**
**लेभे फले गुरोः काले ततो जातौ मतौ सुतौ॥ ६३॥**

सती ब्राह्मणी ततो बुध्द्वा शयनादुत्थाय तथा गुरूक्तप्रकारेण क्रियां कृत्वा तस्मै पिशाचाय गतिं दत्त्वा गुरोः सकाशात् फले नारिकेलफले लेभे। तद्भक्षणात् गर्भिणी जाता। काले दशमे मासि मतौ मान्यौ सुतौ जातौ॥ अनुष्टुप् ॥ ६३ ॥

**अष्टमेऽनिष्टदे वर्षे संनिपात उपागतः॥**
**ततो मृतोऽग्रतो जातः पितृतः स मृतः सुतः॥ ६४॥**

अनिष्टदे पुत्रस्याष्टमे वर्षे 'त्रयः प्रकुपिता दोषा' इत्यादिलक्षणः संनि-

पातः उपागतः। ततः संनिपातात् पितृतः पितुः सकाशात् अग्रतो जातोऽयः स सुतः मृतः ॥ अनुष्टुप् ॥ ६४ ॥

सतीं सुनीतिं रुदतीमतीव दयालुरेत्याऽखिलदृग्व्रतीव ॥
भूत्वाऽवदन्नैति मृतः कुतस्त्वं मुधोच्चकै रोदिषि मैह्यवित्त्वम् ॥

अखिलदृक् सर्वसाक्षी दयालुः भगवान् व्रतीव ब्रह्मचारीव भूत्वा पुत्रशोकेनातीव रुदतीं सुनीतिं सतीं एत्यागत्याऽवदत्। मृतः मृतिं गतः पुत्रादिः नैति पुनर्नागच्छति। एवं सति त्वं कुतो मुधा व्यर्थं उच्चकैः उच्चस्वरेण रोदिषि शोकस्यानर्थक्यात्। तस्मात् हे ब्राह्मणि, 'मृतः शुचा पुनर्नैती' ति अवित्त्वं अज्ञत्वं मा एहि मा प्राप्नुहि ॥ ॥ उपजातिः ॥ ६५ ॥

निःसारोऽयं संसारो यं यान्त्याश्रित्य भ्रान्त्याऽपायम् ॥
विद्युन्मालालीलालम्बी तं बीभत्सं जह्याघातम् ॥ ६६ ॥

हे ब्राह्मणि, अयं संसारः निःसारोऽस्ति। भ्रांत्या सुखभ्रांत्या यं आश्रित्य अपायं यान्ति। लोका इति शेषः। यः विद्युन्मालालीलालम्बी अतिचपलः दृष्टनष्टस्वभावः तं ईदृशं आ समन्तात् घातो यस्मात्तं बीभत्सं संसारं जहि ॥ विद्युन्माला ॥ ६६ ॥

भुजगशिशुभृता यद्वत्स्वपिति न भववान्तद्वत् ॥
तनुतनुजमुखं नित्यं भृशसुविपदहो सत्यम् ॥ ६७ ॥

मन्त्रौषधिप्रभावात् भुजगशिशून् बिभर्ति स्वाङ्के धारयतीति तथा 'आपं चैव हलन्तानां' इत्याप्। सा यद्वत्र स्वपिति तद्वद्भववान् संसारी पुरुषः न स्वपिति। अनेकचिन्ताव्यग्रत्वात् संसारे सुखनिद्रावार्ताऽपि न किमन्यद्वक्तव्यमिति भावः। अहो तनुतनुजमुखं स्वदेहपुत्रादिकं नित्यं भृशं सुतरां विपत् यस्मात् ईदृशं चास्ति एतत् सत्यम् ॥ भुजगशिशुभृता॥ ६७॥

न विमतो हि सुतो यदि ते मतः स्मरसि किं गतजन्मकथां

वृथा ॥ सुमति मा कुरु शोकमकास्पदं विपद्घारि हरेः स्मर रे पदम् ॥ ६८ ॥

विमतः अयं मम सुतो वा न वेति संशयास्पदः सुतो न भवति यदि ममायं सुत इति ते मतश्चेत्तर्हि गतजन्मकथां स्मरसि किं। अपि तु न। यस्मादेवं तस्मात् हे सुमति, अकास्पदं दुःखास्पदं पुत्रशोकं मा कुरु। रे सुमति, विपद्घारि विपत्तिपापहरं हरेः पदं स्मर। ततो मुक्तिरिति भावः ॥ द्रुतविलम्बितम् ॥ ६८ ॥

एवं सा बोधिता माता मृतस्यातीव दुःखि
गुरुं प्राह न वेदान्तोऽदान्ताया रोचते मम ॥ ६९ ॥

एवं गुरुणा बोधिता अतीव दुःखिता सा मृतस्य पुत्रस्य माता गुरुं प्राह। अदान्तायाः अदमितेन्द्रियायाः उपलक्षणादनाधिकारिण्याः मम वेदान्तः न रोचते ॥ अनुष्टुप् ॥ ६९ ॥

कुमारललितां मां व्यधात्पुनरपीमाम् ॥
स मज्जयति शोके कुतो वद नृलोके ॥ ७० ॥

यः मृतवन्ध्यां मां कुमारललितां व्यधात् व्यकरोत् स भगवान् पुनरपि मा मां नृलोके शोके कुतो मज्जयति इदं वद। नृलोके शोके मज्जयति चेत्कथं परलोकं ददातीति वक्रोक्तिः ॥ कुमारललिता ॥ ७० ॥

सोऽवददीशः स्ववरं सोऽपि हि वेदापि परम् ॥
माणवकाक्रीडितकं तं परिपृच्छेदमकम् ॥ ७१ ॥

स ब्रह्मचारिवेषी भगवानवदत्। हे ब्राह्मणि, त्वया आराधित ईशः स्ववरं वेद सोऽपि हि परमपि माणवकस्य ब्रह्मचारिणः क्रीडितकं चेष्टां वेद। सोऽहमेवेति गूढोऽभिप्रायः। यत्र वरो लब्धस्तत्र गत्वा इदं अकं पुत्रशोकलक्षणं दुःखं तं वरदातारं परिपृच्छ ॥ माणवकाक्रीडितकम् ॥७१॥

श्रुत्वेत्यथ संध्याऽस्राक्षी तनुमध्या ॥
मध्याह्न उपाप्ता साप्ताश्रममार्ता ॥ ७२ ॥

इतीत्थं श्रुत्वाऽथ तनुमध्या संध्यास्राक्षी रक्तनेत्रा सा मध्याह्ने शोकार्ता सती आप्तस्य गुरोराश्रमं कृष्णातटं उपाप्ता उपागता ॥ तनुमध्या ॥७१॥

सशवा सजवाऽगत्य पदोः सताडयच्छिरः ॥
नाऽऽदाद्दग्धुं शवं जग्मुः सर्वे तत्र तु जंपती ॥ ७३ ॥

सजवा सवेगा सशवा शवसहिता सा आश्रममागत्य पदोः पादुकयो-रुपरि शिरः अताडयत् । दग्धुं शवं नादात् । तदा सर्वे लोका ग्रामं जग्मुः । तत्र कृष्णातटे तु जंपती तस्थतुरिति शेषः ॥ अनुष्टुप् ॥ ७३ ॥

चण्डी सोच्चण्डवाक् चक्रे चक्रांके गुरुपादुके ॥
रक्तोक्षिते निजशिरस्ताडनेन पुनःपुनः ॥ ७४ ॥

चण्डी अत्यन्तकोपनाऽतएव उच्चण्डा वाक् यस्याः सा ब्राह्मणी पुनः पुनः निजशिरस्ताडनेन चक्राङ्के चक्रादिचिह्नयुक्ते गुरुपादुके रक्तोक्षिते रक्तासिक्ते रक्ताभिषिक्ते चक्रे। शिरस्ताडनेन पादुके रक्ताप्लुते जाते इति भावः ॥ अनुष्टुप् ॥ ७४ ॥

गुरुः स्वप्नेऽथ तां प्राह मा रोदीर्जीवितः सुतः ॥
प्राणो नामैष वायुः स यातोऽपि पुनराहृतः ॥ ७५ ॥

अथ गुरुर्भगवान् स्वप्ने तां प्राह । हे ब्राह्मणि, मा रोदीः । तव सुतः जीवितः । प्राणो नाम एष वायुः स बहिर्यातोऽपि मया पुनराहृत आनीत अत एव ते सुतो जीवितः । उत्तरार्धव्याख्या गुरुचरितटीकायां विहिता सा अ० १२ । ६० श्लोकटीकायां द्रष्टव्या ॥ अनुष्टुप् ॥ ७५ ॥

मृतमुत्थितमुत्थितौ तु तौ मुदितं तं मुदितावपश्यताम् ॥
अपि कल्य उपागता द्विजा अजमापूज्य सुपूज्यमस्तुवन् ॥

आदौ मृतं पश्चादुत्थितं मुदितं तं सुतं शयनादुत्थितौ मुदितौ संजातहर्षौ तौ पितरौ अपश्यताम् । तथा कल्ये प्रत्यूषे शवं दग्धुं उपागताः द्विजा अपि तथाभूतमपश्यन् । ते सर्वे सुपूज्यं भगवन्तमापूज्य अस्तुवन् ॥ उदिता ॥ ७६ ॥

**यातेऽपि भगवत्यत्र फलसिद्धिरलं नृणाम् ॥**
**एवमग्रेऽपि जागर्ति न निद्राति सतां पतिः ॥ ७७ ॥**

भगवति गन्धर्वपुरं यातेऽपि अत्र क्षेत्रे एवं नृणां अलं अत्यर्थं फलसिद्धिर्भजनफलसिद्धिर्जाता । एवं अग्रे भविष्यकालेऽपि भगवान् जागर्ति सतां पतिर्न निद्राति ॥ अनुष्टुप् ॥ ७७ ॥

**भीमामरजासंगममागत्य श्रीगुरुः स्थितः परदः ॥**
**भिक्षार्थं ग्रामगतो वन्ध्यामहिषीमदोहयद्वरदः ॥ ७८ ॥**

परदः मोक्षदः श्रीगुरुः भीमामरजासंगममागत्य स्थितः भिक्षार्थं ग्रामं गतो वरदो भगवान् वन्ध्यामहिषीं अदोहयत् ॥ आर्या ॥ ७८ ॥

**भक्तिप्रियोऽपि स्वाधीनो राजाधीनोऽभवद्यतिः ॥**
**स्वयं निरुपचारोऽपि जातो राजोपचारभाक् ॥ ७९ ॥**

स्वाधीनोऽपराधीनोऽपि भक्तिप्रियो यतिर्भगवान् राजाधीनोऽभवत् । स्वयं निरुपचारोऽपि छत्रादिराजोपचारभाक् जातः ॥ अनुष्टुप् ॥ ७९ ॥

**पुरमेत्य समुद्धृत्य ब्रह्मराक्षसमीक्षणात् ॥**
**सलीलोत्पादितजगज्जगद्वासो मठेऽवसत् ॥ ८० ॥**

भगवान् गन्धर्वपुरमेत्य ईक्षणात् ब्रह्मराक्षसं समुद्धृत्य लीलया उत्पादितं जगत् येन जगतो वासो यस्मिन् स भगवान् राजदत्ते मठेऽवसत् । अधिकप्रभेदोऽर्थालंकारः विरोधश्च वृत्त्यनुप्रासभेदौ शब्दालंकारः एषां संसृष्टिश्च ॥ अनुष्टुप् ॥८०॥

योऽभिधानत उत त्रिविक्रमः सार्थकं परमकं त्रिविक्रमम् ॥
सद्गतिं यतिपतिं स्म निन्दति यं हृदाऽपि हि मुनिर्न विन्दति ॥

योऽभिधानत उत नामत एव त्रिविक्रमः सः सद्गतिं परमकं श्रेष्ठं परमानन्दं वा सार्थकं अन्वर्थकं त्रिलोकाक्रमणलक्षणाः त्रयः क्रमाः पादविक्षेपा यस्य तं यतिपतिं भगवन्तं दाम्भिकोऽयमिति निन्दति स्म। कोऽसौ यतिपतिः। हि निश्चयेन मुनिर्मननशीलोऽपि पुरुषः यं हृदा मनसा न विन्दति न लभते ॥ रथोद्धता ॥ ८१ ॥

तं विद्वान्प्रययौ शास्ता राजलक्ष्मपरिष्कृतः ॥
राजराजश्रियं भेजे नृधर्मा नरवाहनः ॥ ८२ ॥

शास्ता भगवान् तं निन्दकं विद्वान् प्रययौ। कुमसीग्राममिति शेषः। राजलक्ष्मपरिष्कृतः राजचिह्नभूषितः नृधर्म इव धर्मो यस्य सः नरवाहनः शिबिकारूढः भगवान् राजराजस्य श्रियं कुबेर इव शोभां भेजे सिषेवे ॥ अनुष्टुप् ॥८२॥

मुदा नृसिंहं हृदि चिन्तयानस्तदा ददर्शाऽपि च मर्त्ययानम् ॥
नदीतटस्थं यतिभिः परीतं स दीनदीनः प्रययौ विनीतः ॥

तदा मुदा हृदि नृसिंहं चिन्तयानोऽपि नदीतटस्थं यतिभिः परीतं वेष्टितम्। च एवार्थे। ददर्श तथा भगवदवकृपाभिया स त्रिविक्रमभारती विनीतः नम्रः दीनादपि दीनः सन् प्रययौ ध्यानं विसृज्य नदीतीरं जगाम ॥ उपेन्द्रवज्रा ॥ ८३ ॥

त्रिविक्रमोऽपश्यदशेषसैन्यं संन्यासिरूपं न च कंचनान्यम् ॥
तं विस्मितं यानग आह देवस्त्वं यं यते निन्दसि सोऽयमेव ॥

त्रिविक्रमः अशेषसैन्यं संन्यासिरूपं अपश्यत्। संन्यासादन्यं कं च पुरुषं न चापश्यत्। तदा कुतोऽमी संन्यासिन इति विस्मितं तं त्रिविक्रमं यानगः शिबिकास्थः देवः भगवानाह हे त्रिविक्रम यते, त्वं यं निन्दसि सोऽयमेव संन्यासी अस्ति ॥ उपजातिः ॥ ८४ ॥

**अखर्वगर्वोऽप्यभवद्विगर्वः सर्वात्मकोऽसाविति शान्तिपर्व ॥**
**अपूर्वमाप्त्वा विनयेन नत्वा मत्वा नृसिंहं समदृक् च भूत्वा॥**

अखर्वोऽह्रस्वः गर्वो यस्य सोऽपि त्रिविक्रमः असौ यतिः न नरः किं तु सर्वात्मकः सर्वान्तर्यामीति बुध्याऽपूर्वं शान्तिरूपं पर्व आप्त्वा प्राप्य तं नृसिंहं मत्वा विनयेन नत्वा प्रणम्य समदृक् भूत्वा च विगतः देहाद्यात्माभिन्नलक्षणगर्वो यस्येदृशः शान्तोऽभवत् ॥ उपजातिः ॥ ८५ ॥

**ततः स्वरूपमादर्श्य तत्त्वमादिश्य पश्यतः ॥**
**तस्य सोऽन्तरधादद्धा कृतार्थोऽभूत्त्रिविक्रमः ॥ ८६ ॥**

ततः गर्वापनयानन्तरं स भगवान् स्वरूपं प्रथमतो विराड्रूपं पश्चाल्लौकिकं यतिरूपं तस्मै प्रदर्श्य तत्त्वं तत्त्वमस्यादिवाक्योत्थं तत्त्वज्ञानं आदिश्य कथयित्वाऽनुभाव्य च तस्य त्रिविक्रमस्य पश्यतः सतः। अनादरे षष्ठी । अन्तरधात् अन्तर्हितोऽभूत । ततः त्रिविक्रमः अद्धा सत्यं कृतार्थः कृतकृत्योऽभूत् । अपरोक्षज्ञानी बभूवेत्यर्थः । 'एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारते'ति स्मृतेः ॥ अनुष्टुप् ॥ ८६ ॥

**श्रावयन्तौ श्रुतीर्म्लेच्छे तर्जयन्तौ द्विजौ द्विजान् ॥**
**जयार्थमागतौ निन्ये श्रीगुरुं तौ त्रिविक्रमः॥ ८७ ॥**

म्लेच्छे म्लेच्छायेत्यर्थः। श्रुतीर्वेदान् श्रावयन्तौ द्विजान् तर्जयन्तौ जयार्थमागतौ द्विजौ श्रीगुरुं प्रति शिक्षार्थं त्रिविक्रमो निन्ये ॥ अनुष्टुप्॥ ॥ ८७ ॥

**द्वन्द्वदावदव देव वेदविद्देवदेव वद वेदवाददौ ॥**
**वाददावदव देववादविद्द्वन्द्वदोऽवददिदं वदोवदः ॥ ८८ ॥**

वादार्थमागतौ ब्राह्मणौ गुरोः समीपमुपनीय प्रणिपत्य त्रिविक्रमः प्रार्थयते द्वन्द्वेति । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इतिश्रुत्यर्थानुशासनाद्देवाभिन्नगुरुप्रतिपादनार्थं हे देवेति संबोधनम्। स्वयंप्र-

काशशीलत्वाच्छरणागताज्ञानान्धकारहरत्वात्त्वं देवोऽसीति भावः। पुनः कथंभूत। हे द्वन्द्वदावदव द्वन्द्वं द्वैतं तदेवेतरेषामभेद्यत्वाद्दावोऽरण्यं तस्य दव आरण्यवह्निरिव दाहकत्वात् तत्संबुद्धौ हे द्वन्द्वदावदव। द्वैतवाद-खण्डने कुतो मम शक्तिरित्याह। हे वेदवित् काण्डत्रयात्मकं वेदं वेत्तीति तथा तत्संबुद्धौ। स्वतो जातानां वेदानां तत्त्वं याथार्थ्येन त्वमेव जानासि अन्ये तु श्रुत्युपक्रमोपसंहारतर्कादितः कथंचिज्जानन्ति। तथा च निरुक्तं 'अपि श्रुतितोऽपि तर्कतो न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव तु निर्वक्तव्या नह्येषु प्रत्यक्षमस्ती'त्यादि वेदवक्तृत्वं ब्रह्मज्ञा-निनो लक्षणम्। स्मृतिश्च 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्। छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्' इति वेदवित्त्वाद्भगवतः शास्त्रवादनिरसनक्षमत्वमिति भावः। अतएव हि हे वेदवित्, वेदविदि सर्वदेववासः श्रूयते 'यावतीर्वै देवतास्ताः सर्वा वेदविदि वसन्ति तस्मा-द्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति' इति। ननु वावदूकयोरनयोर्विजये कुतोऽस्माकं सामर्थ्यं इत्यत आह। हे देवदेव, सूक्ष्मभूतसात्विकांशजत्वाद्देवा इन्द्रियाणि मनःपद्मानि प्रकाश्यानां प्रकाशकत्वाद्देवः। 'श्रोत्रस्य श्रोत्रं०' इत्यादिश्रुतेः। देवदेवत्वाद्भवतस्तेषां सेन्द्रियान्तःकरणकुण्ठीकरणसामर्थ्यमस्तीति भावः। पुनश्च। वाददावदव। वाद इत्युपलक्षणं जल्पादेः। यदुक्तं 'वादो जल्पो वितण्डश्च हेत्वाभासाश्छलानि च। जातिश्च निग्रहस्थानं पदार्थानक्षपाज्जगौ' इति। एषां लक्षणानि गौतमेनोक्तानि विस्तरभिया नेह प्रपञ्च्यन्ते। वाद एव दावः प्राकृतानां दुर्गमत्वाद्वनं तस्य दवो दहनस्त-त्संबुद्धौ हे वाददावदव प्रतिपक्ष्युपन्यस्तवादजल्पादिसर्वदाहकोऽसीति भावः। यतः हे देववादवित् यतस्त्वं देववादवेत्ता ततो मनुष्यवादमात्र-निराकरणं भवतः कियदेव। अतः जयपत्रार्थमागतावेतावुभौ वेदवाददौ परकृतवेदवादखण्डकावुन्मत्तौ विप्रौ प्रति वद। ननु छात्रभूतस्य त्रिविक्रम-

यतेर्वादं कुर्वित्युक्तिर्नोपपन्नेति चेन्नैष दोषः। पितरं प्रति शिशूक्तिवदुपपत्तेः। एवं वदोवदः वक्ता। द्वन्द्वदः द्वैतनिवारकः त्रिविक्रमः गुरुं प्रति इदं परोपकारार्थं ब्रह्मद्रोहिविप्रहितार्थं चाऽवदत् प्रार्थयामासेति भावः। देवेत्यक्षरद्वयेनैवायं रचितः श्लोकः ॥ रथोद्धता ॥ ८८ ॥

बोधितावपि तौ नैव हितं स्वीचक्रतुर्मतम् ॥
पतितं तत आनीय तद्गर्वं सर्व आहरत् ॥ ८९ ॥

श्रीगुरुणा बोधितावपि तौ विप्रौ मतं मान्यं हितं पथ्यं वचः नैव स्वीचक्रतुः। ततः सर्वः सर्वात्मा भगवान् पतितं बुरुडं आनीय तयोर्गर्वं अहरत् ॥ अनुष्टुप् ॥ ८९ ॥

ततो नरौ पलाहारौ भूत्वा शान्तिपरौ वरात्॥
उषित्वा द्वादश समाः समाप्तौ सद्गतिं तु तौ ॥ ९० ॥

ततः नरौ तौ विप्रौ स्वकर्मवशात् पलाहारौ मांसाहारौ राक्षसौ भूत्वाऽपि वरात् भगवद्वरात् प्रभावात् शान्तिपरौ भूत्वा द्वादश समाः वर्षाणि उषित्वा तु सद्गतिं समाप्तौ प्राप्तौ ॥ अनुष्टुप् ॥ ९० ॥

पतितः पण्डितो भूत्वा ज्ञात्वा सप्त गतोद्भवान् ॥
प्राह मे दुर्गतेर्हेतुं ब्रवीतु ब्रह्मणो भवान् ॥ ९१ ॥

पतितः भस्मप्रभावात् पण्डितो भूत्वा सप्त गतोद्भवान् गतजन्मानि ज्ञात्वा भगवन्तं प्राह। हे भवान्, पूर्वं सप्तमे जन्मनि ब्रह्मणः ब्राह्मणस्य सतः मे दुर्गतेर्हेतुं ब्रवीतु ॥ अनुष्टुप् ॥ ९१ ॥

मातापित्राप्तदारात्मजनिजसुहृत्पत्याजको निन्दकोऽच्यंब्रह्म-
श्रेयःसतां यः श्रुतिरसतनुजागोक्रयी क्रूरयायी ॥ इत्याद्याः
प्रेत्य घोरं निरयमरमथो यान्ति चण्डालयोनिं योनीरन्याश्च
पापो ह्यनुभवति तरां तारतम्यादधस्य ॥ ९२ ॥

तद्दुर्गतिहेतुं वदन् तावत्कर्मविपाकमाह । यः मातापितरौ प्रसिद्धौ । आप्ताः हितशंसिनः गुर्वादयः । दाराः स्त्री । आत्मजाः अपत्यानि । निजसुवृषः स्ववर्णाश्रमसद्धर्मः एषां त्याजकः । अर्च्यः पूज्यः देवः । ब्रह्म वेदः । श्रेयः सत्कर्म । सन्तः साधव एषां निन्दकः । यश्च श्रुतिर्वेदः । रसः गोरसगुडमध्वादिः । तनुजा पुत्री । गौः प्रसिद्धा । आसां क्रयकर्ता। क्रूरयायी दुष्टसंगी । इत्याद्याः प्रेत्य मृत्वा अरं अत्यन्तं घोरं अरमिति शीघ्रं वा । उक्तं गारुडे ' त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीयते यमकिंकरै'रिति । निरयं नरकं यान्ति । अथो अनन्तरं चण्डालयोनिं यान्ति । पापोऽकृत-प्रायश्चित्तः अघस्य पापस्य तारतम्यात् । अन्याः स्थावरतिर्यगाद्याः योनीः तरां सुतरां अनुभवति । उक्तं च 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः । अपश्चात्तापिनः प्रेत्य नरकान्यान्ति दारुणान्' । हीति प्रसिद्धम् । गारुडे ' अधस्तान्नरलोकस्ये 'त्यादि ॥ ९२ ॥

**भूतप्रेतपिशाचकाः स्युरितरे दुर्वासनावासिता मत्ता विप्र-गुरुद्विषोऽपि कुधियो रक्षस्त्वमायान्ति च ॥ उष्ट्रो द्रव्यहरोऽप्यलिर्विषहरः पत्रादिहृद्वानरो गृध्रो मांसहरो नरो मधुकरो मध्वाहरोऽपीतरः ॥ ९३ ॥**

दुर्वासनावासिताः इतरे नीचा भूतप्रेतपिशाचाः स्युः । कुधियो दुर्बुद्धयः मत्ताः विप्रगुरुद्विषश्च रक्षस्त्वं ब्रह्मराक्षसत्वं आयान्ति । द्रव्यहर उष्ट्रो भवति । विषहरोऽलिर्वृश्चिकः । पत्रफलादिहृत् वानरः । मांसहरो गृध्रः । मध्वाहरो मधुचोरोऽपीतरो नरः मधुकृन्माक्षिका भवति ॥ शार्दूल-विक्रीडितम् ॥ ९३ ॥

**भोगी न योऽर्थस्य च किंपचोऽत्र भोगी स भूत्वापि भवे परत्र ॥ न भोगभोगी भविताऽस्य किं तु नभोगभोगी शयिता ततस्तु ॥ ९४ ॥**

किंपचः कदर्यः योऽत्रार्जितस्यार्थस्य भोगी न भवेत्सः परत्र भवे परजन्मनि भोगी सर्पो भूत्वाऽपि अस्य स्वकीयार्थस्य भोगभोगी न भविता। किं तु नभोगं वायुं भोक्तुं शीलमस्येति नभोगभोगी वायुभक्षको भूत्वा ततस्तु सार्वविभक्तिकस्तसिः तस्मिन्नर्थे भूम्यादौ निहिते शयिता भवेदिति शेषः ॥ उपजातिः ॥ ९४ ॥

**अधस्तान्नृजातेः स्मृता यातनास्ता गवाद्यास्तृणान्ता अघान्ताय तास्ताः ॥ स्वपापानुसारी कुचारी परीत्य क्रमाद्याति भूयो नृयोनिं सचिह्नः ॥ ९५ ॥**

नृजातेः अधस्तात् गवाद्याः तृणान्ताः योनयः अघान्ताय पापनाशाय यातनाः स्मृताः स्वपापानुसारी कुचारी पापी तास्ताः परीत्य क्रमाद् भूयः सचिह्नः पूर्वकृतपापज्ञापकाचिह्नयुक्तः पुरुषो नृयोनिं मनुष्यजन्म याति। स्मृतिः 'अधस्तान्नरलोकस्य यावतीर्यातनादयः। अनुभूय भुवं तास्ताः पुनरत्राव्रजेच्छुचि'रिति ॥ भुजंगप्रयातम् ॥ ९५ ॥

**श्वा शुनी च नरो नारी पारदार्यात्खरः खरी ॥**
**औपपत्यान्नृनारीणां कृमियोनिः पुनः पुनः ॥ ९६ ॥**

पारदार्यात् नरः श्वा खरश्च भवति। औपपत्यात् नारी शुनी खरी च भवति। अत्यभ्यासे तु नृनारीणां पारदार्यात् औपपत्याच्च पुनः पुनः कृमियोनिर्यावत्पापक्षयं भविष्यति ॥ अनुष्टुप् ॥ ९६ ॥

**भारत्याऽथ कथं त्वघान्त इति संपृष्टोऽब्रवीच्छ्रीगुरुः पश्चात्तापमघान्तकं स्वबलतः कृच्छ्रादिकं शोधकम् ॥ उक्ताऽघं च सदस्यृतं तदुदितं क्षौरादि युक्तं चरेत्प्रायश्चित्तमदाम्भिकः शुचिरघाद्वा मन्त्रतीर्थव्रतैः ॥ ९७ ॥**

अथ त्रिविक्रमभारत्या कथं अघान्तः कृतस्याघस्य पापस्यान्तः लयः भवेदिति पृष्टः श्रीगुरुः पश्चात्तापं अघान्तकं अब्रवीत्। 'पश्चात्तापेन

संशुद्धि'रिति स्मरणात्। इदं साधारणपापे, विशेषपापे तु शुद्धिमाह। स्वबलतः स्वशक्तितारतम्यात् कृच्छ्रादिकं पापस्य शोधकं भवति। तस्येतिकर्तव्यतामाह। अदाम्भिकः निष्कपटः सदसि धार्मिकविद्वत्सभायां ऋतं सत्यं यथा विहितं अघं पापं उक्त्वा ततः तदुदितं तया पर्षदा अनुवादकद्वारा उदितं कथितं क्षौरस्नानादियुक्तं प्रायश्चित्तं चरेत्॥ शार्दूलविक्रीडितम्॥ ९७॥

**नीचं तूच्च उवाच पित्रपकृतेस्त्वं चावचोऽभूस्ततो मासं संगमसेवनाद्द्विजनितागाम्युद्भवे सोऽवदत्॥ विप्रं योजय मां द्विजेषु करटोहंसोऽपि सन्मानसे भूयः किं करटोऽप्ययोऽपि कनकं भूत्वा पुनः किं त्वयः॥ ९८॥**

एवं त्रिविक्रममाभाष्य उच्चः सर्वश्रेष्ठो भगवान् नीचं तं पतितं तु उवाच। हे पतित, त्वं पित्रपकृतेर्मातापितृतिरस्काराद्वचः पतितः अभूः अतो मासं मासपर्यन्तं स्नानादिना संगमसेवनात् आगाम्युद्भवे आगामिजन्मनि द्विजनिता द्विजत्वं तव भविष्यतीति शेषः। तच्छ्रुत्वा स पतितोऽवदत्। विप्रं वेदाध्यायिनं ब्राह्मणं मां द्विजेषु योजय। करटः काकः मानसे सरसि हंसः सन् हंसो भूत्वाऽपि भूयः करटः काको भविष्यति किं। तथा पूर्वं अयो लोहमपि स्पर्शयोगात्कनकं भूत्वाऽपि पुनस्तु अयो भवति किं अपि तु न। तथाऽहं पूर्वं पतितोऽपि भवद्दृशा विप्रो भूत्वापि पुनर्बुरुडो भविष्यामि किम्॥ शार्दूलविक्रीडितम्॥ ९८॥

**इत्थं तस्मिन्वदति युवतिस्तस्य चाप्ताऽथ तां स त्यक्तुं हैच्छद्गुरुरथ जगौ स्त्रीर्न पूर्वं विवाह्या॥ पश्चात्त्यागे पतसि सदिति प्रोह्य तं स्नापयित्वा गेहायाऽऽज्ञापयति स यतिः सोऽप्यगाज्ज्ञानहीनः॥ ९९॥**

इत्थं तस्मिन् पतिते वदति सति तस्य युवतिस्तरुणी भार्या चकारा-

त्पुत्रादयश्चाप्ता उपागमन्। स पतितः तां त्यक्तुं ऐच्छत्। अथ गुरुर्भगवान् तं जगौ। हे पतित, स्त्री पूर्वं प्रथमतः न विवाह्या। पश्चाद्विवाहोत्तरं भार्यायास्त्यागे पतसि पातं नरकं यास्यसि। एतत्सत् सत्यं इति प्रोह्य प्रकर्षेणोहयित्वा उपपत्त्या बोधयित्वेत्यर्थः। पूर्वजन्मज्ञानप्रदशरीरलग्न-भस्मक्षालनार्थं तं स्नापयित्वा गेहाय गेहं गन्तुं स यतिः आज्ञापयति। सोऽपि ज्ञानहीनः सन् गृहं अगात्॥ मन्दाक्रान्ता॥ ९९॥

**पावितोऽपि पतितः कुतो गतो हीनतामिति यतीरितो यतिः।**
**प्राह भस्मवशतो मयार्पिता वेत्तृताऽऽप्लवत उद्गता ततः॥१००**

पावितोऽपि पतितः कुतो हीनतां गत इति यतिना त्रिविक्रमेणेरितः प्रेरितो यतिः भगवान् प्राह। मया भस्मवशतः पतिताय वेत्तृता विद्वत्ता अर्पिता दत्ता। सा आप्लवतः भस्मक्षालनहेतुभूतात् स्नानतः ततस्तस्मात् पतितात् उद्गता नष्टेत्यर्थः। रथोद्धता॥ १००॥

**दुराचारो जारो यतिवर पुरा कश्चन धरापती रक्षो भूत्वा क्षुधित उपगं क्रौञ्चवनगः॥ मुनिं प्रापात्तुं तद्धृतभसितसंस्पर्शवशतः स्मृतप्राक्पञ्चाक्षिप्रमितगतजातोऽस्तकुकृतः॥ १०१॥**

पुरा दुराचारः जारः कश्चन धरापतिः राजा दुर्जयाख्यः स्वकर्मवशात् क्रौञ्चवनगः रक्षः ब्रह्मराक्षसो भूत्वा क्षुधितः सन् उपगं समीपं प्राप्तं मुनिं वामदेवं अत्तुं भक्षितुं प्राप। तदा तेन धृतं यत् भसितं भस्म तस्य संस्पर्शयोगात् अस्तकुकृतः नष्टपापः स्मृतप्राक्पञ्चाक्षिप्रमितगतजातः स्मृतपूर्वपञ्चविंशतिजन्माऽभूत्॥ शिखरिणी॥ १०१॥

**तस्मै द्राविडविप्रमुक्तिमवदच्छ्वाङ्गस्थभस्माहितां संवादं गतिदं कुमारहरयोर्भस्मार्पणं चोद्गतिम्॥ एवं कर्मविपाकमाकलयतोऽप्याराध्य चाध्याधिहे तत्पादाम्बुरुहे ययौ यतिरिति ख्याता विभूतेः कथा॥ १०२॥**

तस्मै राक्षसाय श्वाङ्गस्थभस्मना आहितां दत्तां द्राविडदेशीय-विप्रमुक्तिं अवदत्। वामदेव इति शेषः। गतिदं मोक्षदं कुमारहरयोः सनत्कुमारशिवयोः संवादं चाह। तस्मै वामदेवेन भस्मार्पणं कृतं तच्चाह। तस्य उद्गतिं स्वर्गगमनं चाह। एवं कर्मविपाकं आकलयतः कथयतः भगवतः अध्याधिहे अधिकमनोव्यथाहरे पादाम्बुरुहे आराध्य अभिवाद्य असौ यतिः त्रिविक्रमः ययौ इति विभूतेः कथा ख्याता जाता ॥ शार्दूलविक्रीडितम् ॥ १०२ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वासुदेवानंदसरस्वतीविरचितश्रीगुरुचरितकाव्ये द्वितीयशतकं समाप्तम् ॥ २ ॥ ॐ तत्सत् ॥

॥ इति गुरुचरितकाव्यद्वितीयशतकं समाप्तम् ॥

# त्रितीयशतकम्

अथ कोऽपि मृतार्भको वरे द्विज आस द्विज माहुरे पुरे ॥
स गुरोः कृपयाऽऽप सत्सुतं स च दत्तं वदति स्म तं मतम् ॥

श्रीगणेशदत्तगुरुभ्यो नमः ॥ ॥ अथेति मङ्गलार्थे आनन्तर्यार्थे वा । सिद्ध उवाच । हे द्विज नामधारक, वरे माहुरे पुरे मृता अर्भका यस्य सः कोऽपि द्विजः गोपीनाथाख्य आस । स सेवनादिना गुरोर्दत्तात्रेयस्य कृपया सत्सुतं आप प्राप । स च गोपीनाथविप्रः तं मतं सुतं दत्तं वदति स्म नाम्ना पुत्रं दत्तमिति व्यकरोदित्यर्थः ॥ योगिनी ॥ १ ॥

स तु धीगुणशीलशालिनीं स्वसमानां स्त्रियमेव लब्धवान् ॥
सुमती भुवि दंपती तथा शुशुभाते रतितत्पती यथा ॥ २ ॥

स तु पुत्रः धीगुणशीलशालिनीं स्वसमानामेव स्त्रियं लब्धवान् यथा रतितत्पती रतिकामौ शुशुभाते । तथा सुमती तौ दंपतो शुशुभाते ॥ योगिनी ॥ २ ॥

अथ दैववशात्क्षयार्दितः समभूत्कान्तिविवर्जितः सुतः ॥
शयनाशनवर्जितः कृशो ललना चाप्यभवत्तथा कृशा ॥ ३ ॥

अथ विवाहोत्तरं दैववशात् क्षयार्दितः क्षयरोगपीडितः अत एव कान्तिविवर्जितः सुतः अभूत् ततोऽनुक्रमेण शयनाशनवर्जितः त्यक्तनिद्राभोजन अत एव कृशः अभूत् । तस्य ललना भार्या चापि कृशाऽभवत् ॥ योगिनी ॥ ३ ॥

हवनार्चनशान्तिभेषजैर्जपनाद्यैर्न शशाम स द्विजैः ॥
उदितोऽयमसाध्य इत्यहो स रहोऽम्बामवदच्छृणु ह्यहो ॥४॥

स रोगः जपनाद्यैः जपादिभिः होमपूजाशान्त्यौषधैश्च न शशाम न शान्तो बभूव । द्विजैः वैद्यज्योतिषिकविप्रैः अयं रोगोऽसाध्य इत्युदितः उक्तः यदा तदा स रुग्णो विप्रः रह एकान्ते अम्बां मातरं अवदत् । अहो अम्ब, हि निश्चयेन शृणु ॥ योगिनी ॥ ४ ॥

अयि मातरतः परं तु ते मयि माशाऽस्तु रुजार्दिते सुते ॥
दयिते मयि तेऽस्तु मा रतिर्दयिते श्रीदयितेऽस्तु ते रतिः ॥५॥

अयि मातः; अतः परं तु इत ऊर्ध्वं तु । रुजार्दिते तव सुते मयि विषये ते आशा माऽस्तु आसन्नमरणत्वात् । हे दयिते वल्लभे भार्ये । ते तव । दयिते वल्लभे भर्तरि मयि अतः परं रतिः प्रीतिर्माऽस्तु । तर्हि मया क्व रतिः कर्तव्येत्यत आह । श्रीदयिते श्रियो लक्ष्म्याः दयिते वल्लभे लक्ष्मीकान्ते भवतारके विष्णौ ते तव रतिरस्तु भवतु ॥ योगिनी ॥ ५ ॥

धृतभीतिरुवाच तं सती गतिरन्या भवतो न मे सती ॥
कति वच्म्यतिसूक्तिभिस्त्वलं मतिमान्मेऽस्ति भवान्सुमङ्गलम् ॥

धृतभीतिः सती तद्भार्या तं उवाच । भवतः त्वत्तोऽन्या मे सती गतिर्न । एतत् अतिसूक्तिभिः कति वच्मि अलं अस्तु । मतिमान् भवान् मे सुमङ्गलं अस्ति ॥ योगिनी ॥ ६ ॥

इति सा समुदीर्य निर्ययौ पतियुक्ता श्वशुरानुमोदिता ॥
गुरुदर्शनकाङ्क्षया नता वरगन्धर्वपुरं ह्युपागता ॥ ७ ॥

इति इत्थं सा समुदीर्य उक्त्वा । पत्युरारोग्यार्थं पतियुक्ता आन्दोलास्थ-पतिसहिता । त्वं व्रजेति श्वशुरानुमोदिता श्वश्रूश्च श्वशुरश्च श्वशुरौ ताभ्यां अनुमोदिता । आरोग्यार्थं गुरुदर्शनकाङ्क्षया निर्ययौ । शनैः शनैः कतिचिद्दिवसैः । वरगन्धर्वपुरं श्रेष्ठगन्धर्वाख्यपुरं । यद्वा वरस्य सर्वश्रेष्ठस्य देववर्यस्य भगवतो गन्धर्वपुरं । उपागता समीपं प्राप्ता ॥ योगिनी ॥७॥

सहसा मृतिमाप तत्पतिर्युवतिस्तं च शुशोच साऽधृतिः ॥
अतिदीनमतिं तु तां सतीं गुरुमूर्तिर्यतिराप सद्गतिः ॥ ८ ॥

तदा तत्पतिः सहसा मृतिं प्राप । अधृतिः गतधैर्या सा युवतिस्तद्भार्या च तं मृतं पतिं उद्दिश्य शुशोच । तदा अतिदीनमतिं तां सतीं तु सद्गतिर्यतिः भगवान् गुरुमूर्तिरवधूतमूर्तिः सन् प्राप ॥योगिनी ॥८॥

**धृतभूतिरुवाच मा शुचः सति कस्ते पतिरन्ति मे वचः ॥**
**वद चित्प्रतिबिम्बितोऽथवासदचिद्वर्ष्म समीपवर्ति वा ॥९॥**

धृता भूतिर्भस्म येन स तां उवाच । हे सति, मा शुचः । चित्प्रतिबिम्बितो जीवः ते पतिः, अथवा अचिज्जडं समीपवर्ति वर्ष्म मृतदेहः ते पतिः । अनयोर्मध्ये कस्ते पतिरिति मेऽन्ति मम समीपं वचः वद ॥ योगिनी ॥ ९ ॥

**उभयं न वयं यशस्विनि प्रवदामः परमं मनस्विनि ॥**
**न गमागमनेऽस्य सोऽजरो निगमाद्योऽप्यवरोऽपरोऽमरः ॥**

उभयराद्धान्तं नो जाने इति ते शरणं चेच्छृणु । हे यशस्विनि सत्कीर्तिमति, हे मनस्विनि प्रशस्तमानसे सति, वयं उभयं, देहं जीवं च परमं तात्त्विकं न वदामः । तर्हि देहस्तावत् परमो मास्तु जडत्वाद्विकारित्वाद्दृष्टनष्टस्वभावत्वात्, चेतनो जीवो न कुतः पारमार्थिक इत्यत आह नेत्यादि । अस्य स्वयंप्रकाशस्यापरोक्षस्यात्मनः गमनागमने देहान्तरगमनं मरणं, गर्भागमनं जननं च न विद्येते । स आत्माऽजरः जरोपलक्षितजन्मादिविकारशून्यः। निगमाद्यः वेदकर्ता 'शास्त्रयोनित्वात्' इत्यधिकरणन्यायात् । अवरः श्रेष्ठः । अपरः सर्वनिषेधावधिभूतोऽतः न म्रियत इत्यमरः । 'स वा एष महानज आत्माऽजरोऽमरः'इति श्रुतेः ॥योगिनी॥

**यदनीदृगतादृगीक्षकं पुरुषाख्यं परमं ह्यमायिकम् ॥**
**निरुपाधिकमाद्यमेककं तदु शोकं कथमर्हति व्यकम् ॥११॥**

'अक्षाणां विषयस्त्वीदृक् परोक्षस्तादृगुच्यते । विषयी नाक्षविषय' इत्याद्युक्तेः। यत् अमायिकं आवरणादिरहितं ईक्षकं साक्षिभूतं । परमं पुरुषाख्यं ब्रह्म तत् ईदृक् तादृक् च न भवति । कुतः । निरुपाधिकं अविद्यामायोपाधिरहितं। आद्यं सर्वकारणं। एककं अद्वितीयं तं सृष्टिकालेऽप्यसहायं 'एकादाकिनिच्चासहाये' इति पाणिनीयात् । तदु तदेव ब्रह्म कथं शोकं अर्हति । कथमपि नेति भावः ॥ योगिनी ॥ ११ ॥

यदु भाति जगत्यनेकवत्तदु मायामयमेणनीरवत् ॥
गुरुदर्शिततत्त्वदीपतः पुरुदृङ् मुक्तिमियाद्भ्रमादतः ॥१२॥

तर्हि प्रत्यक्षस्य कथमपलापः क्रियत इत्यत आह – यदु यदेव जगति लोके सुरनरतिर्यगादिरूपेणानेकवद्भाति तदु तदेव मायामयं एणनीरवन्मृगजलवन्मिथ्याभूतं न तात्त्विकम् । तर्ह्ययं भ्रमः कथं निवर्तेताऽत आह– गुरुणा शाब्दपरब्रह्मविदाचार्येण दर्शितो यस्तत्त्वदीपः जीवब्रम्हैक्यलक्षणतत्त्वज्ञानं । तस्मात् पुरुदृक् अपरिच्छिन्नदृक् विविक्तदृक् पुरुषः।अतो मिथ्याभूताज्जगद्भ्रमात् मुक्तिं इयात् मुक्तिं यातुं शक्यो भवेत् नान्यथा । 'नायमात्मा'इत्यादिश्रुतेः ॥ योगिनी ॥ १२ ॥

नरजन्मनि चेन्न रेमृतं परजन्मन्यत आसुरे मृतम् ॥
सति मुञ्च शुचं न चंक्रमं प्रति गच्छाश्रय मोक्षसत्क्रमम् ॥

रे साध्वि, अस्मिन्नरजन्मनि मोक्षो न संपादितश्चेत्तर्हि आसुरे असुपु रमन्ते पोषणादिना ते असुराः तेषां स्वभावभूते परजन्मनि मृतं मरणमेव नामृतवार्तापीति भावः। यस्मादेवं तस्मात् हे सति, शुचं शोकं मुञ्च । न चंक्रमं अतिशयेन पौनःपुन्येन वा जन्ममरणलक्षणगमनं प्रति गच्छ । अतोऽत्रैवेश्वरभजनस्वधर्माचरणादिना मोक्षसत्क्रमं आश्रय ॥ १३ ॥

स्वातंत्र्यं न हि योषितां सति पतिः स्त्रीणां सुरो नेतरो हित्वा शाठ्यमतः पतिं भज ततः श्रेयो गुरोरुक्तितः ॥ सेवा तस्य सुरार्चनं पदुदकं तीर्थं प्रसादस्तदुच्छिष्टं धर्म उतास्य वाक्यकरणं संतोषणं भूषणम् ॥ १४ ॥

हि यस्मात् योषितां कदापि स्वातंत्र्यं नास्ति तस्मात् हे सति, स्त्रीणां पतिरेव सुरः देवः नेतरः शिवविष्ण्वादिरूपः । यस्मात् स्त्रीणां पतिरेव देवः अतः अस्माद्धेतोः शाठ्यं कापट्यं हित्वा हे सति, पतिं भज । ततः तद्भजनात् । लोपामुद्रास्तुतिप्रसङ्गोदितगुरूक्तितः बृहस्पतिप्रोक्तप्रकारेणे-

त्यर्थः । श्रेयो भवेत् । तस्य भर्तुः सेवा सुरार्चनं साध्व्या देवपूजा नान्या। तस्य पत्युः पदुदकं पादोदकं तीर्थं नान्यत् । तदुच्छिष्टं पत्युर्भुक्तावशिष्टं प्रसादः । उतापि च अस्य पत्युः वाक्यकरणं धर्मः नान्यः । पत्युः संतोषणमेव साध्व्या भूषणं नान्यत्स्वर्णादिकम् ॥ शार्दूलविक्रीडितम् ॥ १४ ॥

**नित्यं तज्जनगौरवं च सुहितं मर्यादयाऽदो व्रतं धार्यं स्वापभुजीतयस्तमनु च प्राक् स्नानबोधोत्थितिः॥ सर्वैनःशमनं धवानुगमनं गोत्रत्रयोद्धारणं भूशय्यावपनार्चनव्रतवृषैर्वैधव्यसेवाऽथवा ॥ १५ ॥**

च परं नित्यं तस्य पत्युर्जनस्य मातृपितृभ्रात्रादिरूपस्य गौरवं कार्यं तच्च सुतरां हितं उभयलोकप्रापकत्वात् । श्रुतिरपि 'सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु'इति। अद एतत्सर्वं व्रतं मर्यादया धार्यं । तथा तमनु पत्युः स्वापाद्यनन्तरं सत्याः स्वापभुजीतयः स्वापः शयनं पत्युः शयनानन्तरं । भुजिर्भोजनं पत्युर्भोजनानन्तरं । इतिर्गमनं पत्युः पश्चादेव । पत्युः स्नानादेः प्राक् स्नानादि कार्यम् । स्नानं पत्युः स्नानात् पूर्वं । उत्थितिरुत्थानं पत्युरुत्थानात्प्रागेव कार्यम् । एवं वर्तमानायाः सत्याः दैवात् पत्यौ मृते मुख्यं अनुगमनं कार्यं इत्याह –सर्वैनःशमनं धवानुगमनं गोत्रत्रयोद्धारणम् । गोत्रत्रयं च 'मातृकं पितृकं चैव यत्र सा च प्रदीयते' इति । अथवा भूशय्यादिः वैधव्यसेवा वैधव्यधर्मपालनं तत्र खट्वादिवर्जनं भूशय्या शिरसो वपनं च । यदुक्तं 'विधवाकबरीबन्धो भर्तृबन्धाय कल्पते। शिरसो वपनं तस्मात्कार्यं विधवया सदा'इति । अर्चनं विष्ण्वादेः । व्रतानि कल्पोक्तानि नित्यानि एकादशीजयन्त्युपवासादीनि कार्तिकमाघवैशाखश्रावणचातुर्मास्यादीनि स्नानोपोषणदीपाराधनदानादिरूपाणि। एभिर्व्यस्तैः समस्तैः वैधव्यसेवा विधवाधर्मपालनं कार्यम् ॥ शार्दूलविक्रीडितम् ॥ १५ ॥

सा प्राह वैधव्यसुपालनं हा कष्टं युवत्या अपि धर्मवत्याः ॥
अतोऽनुयानं मतमित्यथाऽक्षान्दत्वा विभूतिं च तथेत्यगात्सन्॥

सा सती । धर्मवत्या अपि युवत्याः -तरुणास्त्रियः वैधव्यसुपालनं हा कष्टं । अतः अनुयानं ममाभिमतमिति प्राह । अथ तच्छ्रुत्वा सन् साधुः तस्यै पत्युः कण्ठकर्णधारणार्थं अक्षान् रुद्राक्षान् अङ्गलेपनार्थं विभूतिं भस्म च दत्त्वा तथेति यथा त्वं वदसि तथा कुर्वित्युक्त्वा अगात् । उपजातिः ॥ १६ ॥

साऽपि श्मशानेऽनुपदं हयेष्टिप्रदं मुदा भर्तृशवाग्रयानम् ॥
कृत्वाऽखिलानन्दपदं पदं च गुरोर्दिदृक्षुर्लघु संगमेऽगात् ॥

साऽपि पतिव्रता । मुदाऽऽनन्देनानुपदं प्रतिपदं हयेष्टिप्रदं अश्वमेधपुण्यप्रदं । श्मशाने भर्तृशवाग्रयानं कृत्वा अखिलानन्दपदं सर्वानन्दास्पदं गुरोः पदं दिदृक्षुः लघु शीघ्रं संगमे भीमामरजासंगमेऽगात्॥उपजातिः १७

सौभाग्यसंततिदया स दयासमुद्रस्तामाशिपालमभिनन्द्य शवं वितन्द्रः ॥ आनाय्य चाथ जलसिक्तमजीवयत्तं ताभ्यां स्तुतो ऽवददजो निजदैवमुक्तम् ॥ १८ ॥

हे सति,त्वं अष्टपुत्रा सौभाग्यवती भवेति सौभाग्यसंततिं ददातीति सौभाग्यसंततिदा तया आशिषा आशीर्वादेन तां आगतां सतीं अलं अभिनन्द्य । श्रीगुरुरिति शेषः। विगता तन्द्रा यस्य सः भक्तकार्ये सदोद्युक्त इत्यर्थः। दयासमुद्रः स भगवान् शवं आनाय्य । अथ च जलसिक्तं कमण्डलुजलोक्षितं तं मृतमप्यजीवयत् ताभ्यां मृतपुत्रतत्पत्नीभ्यां स्तुतोऽजो भगवान् मृतोऽप्ययं कथं जीवेत इति विस्मयमापन्नेषु लोकेषु सत्सु। उक्तं निजानां भक्तानां दैवं प्राक्तनकर्म अस्मिन्जन्मनि त्रिंशद्वर्षायुष्यरूपं अग्रे जन्मनि शतवर्षायुष्यरूपं स्थितमपि कर्म मया निजदैवं व्यत्यासेनोप्तं इत्यवदत् ॥ वसन्ततिलका ॥ १८ ॥

**ततः परेद्युः प्रतिचोदितोऽवदद् वदद्वरेण्योऽक्षविभूतिसंभवे॥**
**वाराङ्गनामर्कटकुक्कुटोद्भवक्षमेशभद्रात्मजरुद्रसत्कथे ॥१९॥**

ततः परेद्युः साध्व्या प्रतिचोदितः पूर्ववृत्तज्ञानार्थं पृष्टः वदतां वरेण्यः भगवान्। अक्षाः रुद्राक्षाः विभूतिर्भस्म ताभ्यां संभवो ययोस्ते वाराङ्गना सती वेश्या तत्पालितो मर्कटः कुक्कुटश्च ताभ्यां उद्भवो ययोस्तौ च तौ क्षमेशभद्रात्मजौ तयो रुद्रस्य च सत्कथे अवदत् साध्व्यै कथयामासेत्यर्थः। तत्र क्षमेशः काश्मीरदेशराजा भद्रो भद्रसेनाख्यः तदात्मजः तत्पुत्रः तत्प्रधानपुत्रश्चात्र पुत्रपदेनाभ्युपेयः ॥वंशस्थम्॥१९॥

**स्त्रियो न देयो मनुरेतदर्थं तद्देवयान्या विकचं चरित्रम्॥**
**सतीं स ऊचे सकचं कचेन काव्यं वराङ्गं विकचं कृतं च॥**

स्त्रियः स्त्रियै मनुर्मन्त्रः न देयः एतदर्थं तत्प्रसिद्धं देवयान्या विकचं स्फुटं चरित्रं स भगवान् सतीं ऊचे[1]......॥ उपजातिः॥ २०॥

**सोमवारव्रतं साध्व्यै सोमप्रियमुवाच सः॥**
**सीमन्तिन्याप्यैन्द्रसेनिसीमन्तिन्या कृतं व्यकम्॥ २१॥**

स भगवान् विगतं अकं दुःखं यस्मात्तद्व्यकं ऐन्द्रसेनिसीमन्तिन्या इन्द्रसेनपुत्रवध्वा सीमन्तिन्या कृतं मैत्रेयीवचनात् अनुष्ठितं सोमप्रियं उमापतिप्रियं सोमवारव्रतं साध्व्यै उवाच॥ अनुष्टुप्॥ २१॥

**एवं विनाथौ शरणागतौ नतौ कृत्वा सनाथौ यशसाप्यलं-कृतौ॥प्रस्थापयामास गृहाय दंपती तौ हर्षितौ यत्यपकारदंपती॥**

---

(१ तथा सकचं कचेन सहितं काव्यं शुक्रं विकचं कचरहितं कृतं कचेन च वराङ्गं गुह्यमंत्रं विकचं स्फुटं कृतं च ऊचे। दैत्यैः पुनः पुनर्हतोपि कचो न मृत इति स चूर्णीकृत्य शुक्राय भक्ष्येण सह प्राशितः। ततो देव-यान्या शुक्रान्मत्रं गृहीत्वा कचः शुक्रश्च जीवितः परंतु स्त्र्युपदेशादग्रे मन्त्रो निष्फलोऽभवदिति तात्पर्यम्।)

पूर्वं विनाथौ पश्चात् शरणागतौ तौ दंपती एवं सनाथौ यशसा अलंकृत्वा। यत्यपकारदंपती न विद्यते पकारो यस्य सोपकारः पकाररहितः स चासौ दंपती च तथा यतिदन्ती यतिश्रेष्ठ इत्यर्थः। भगवान् हर्षितौ तौ दंपती गृहाय गृहं प्रति गन्तुं प्रस्थापयामास गमयामास ॥ इन्द्रवज्रा ॥२२॥

**पराम्नाभिलाषिण्यथ ब्रह्मयोषित्परान्नारुचिं स्वं पतिं प्रार्थ्य चेशम् ॥ परान्नाय निन्ये भुजौ वीक्ष्य दंष्ट्रिश्वकोच्छिष्टमन्नं विहायेशमाप्तौ ॥ २३ ॥**

अथ पराम्नाभिलाषिणी ब्रम्हयोषित् विप्रस्त्री परान्नं भोक्तुं अनिच्छन्तं पतिं परान्नभोजनाय प्रेरयेतीशं भगवन्तं प्रार्थ्य तेन (ना) ज्ञप्तं परान्नारुचिं स्वपतिं परान्नाय परान्नं भोक्तुं निन्ये। ततस्तौ दंपती भुजौ भोजने दातृदीयमानं दंष्ट्रिश्वकोच्छिष्टं श्वसूकरोच्छिष्टं अन्नं वीक्ष्य तदन्नं विहाय ईशं भगवन्तं आप्तौ प्राप्तौ ॥ भुजङ्गप्रयातम् ॥ २३ ॥

**तां बोधयित्वा द्विजमाह खिन्नं स्वेष्टाप्तयज्वद्विजसज्जनान्नम् ग्राह्यं तथा दानमसद्ग्रहादौ तीर्थे नृपाच्चापि न चापदादौ।२४।**

ब्राह्मणि, एवं दुराग्रहं मा कुर्विति तां बोधयित्वा स्वव्रतनियमभङ्गेन खिन्नं द्विजं आह भगवानिति शेषः। हे ब्राह्मण, त्वया स्वः सगोत्रः इष्टाः सखायः आप्ताः गुरवः संबन्धिनः कृतोपकारा वा यज्वा विधिनेष्टवान्द्विजः सज्जनः साधुः एषां अन्नं ग्राह्यं तथा एभ्यः सकाशाद्दानमपि ग्राह्यम्। आपदादौ अपि असदन्नदानं ग्रहादौ ग्रहणादौ तीर्थे दुर्वृत्तात् नृपाच्च दानं न च ग्राह्यम् ॥इंद्रवज्रा ॥ २४ ॥

**स्वाचारवान्न दुष्येत गृह्णन्नपि कुटुम्बवान् ॥**
**स्वाचारं कथयेत्युक्तो ब्रह्मण्यो ब्रह्मणाऽवदत् ॥ २५ ॥**

कुटुम्बवान् स्वाचारवान् ब्राह्मणः गृह्णन्नपि न दुष्येत इति श्रुत्वा हे भगवन्, आचारं कथयेति ब्रह्मणा ब्राह्मणेनोक्तः भाषितः ब्रह्मण्यो भगवान् अवदत्। आह्निकाचारमिति शेषः ॥ अनुष्टुप् ॥ २५ ॥

**बुद्ध्वा ब्राह्ममुहूर्ते ईशगुरुगा नत्वा दिवोदङ्मुखो भूत्वा मूत्रविशौ तृणेऽस्रपदिशि त्यक्त्वाम्मृदाऽधोबिले ॥प्रक्षाल्याऽङ्घ्रिकरान्स्ववर्णवृषविद्वक्त्रं च गण्डूषतः क्षीरीध्मेन रदाननिन्द्यदिवसे स्नायात्पुराऽब्गोमयैः ॥ २६ ॥**

ब्राह्मे मुहूर्ते ब्रह्मध्यानार्हकाले अत्र काले बुद्ध्वा शयनादुत्थाय ईशगुरुगाः नत्वा अत्र गोशब्देन धेनुर्भूमिश्च ग्राह्या। दिवोदङ्मुखो भूत्वा अर्थाद्रात्रौ दक्षिणाभिमुख इत्यर्थः। अस्रपदिशि स्वगृहान्नैर्ऋत्यां दिशि अयज्ञिये शुष्के तृणे मूत्रविष्ठे त्यक्त्वा उत्सृज्य अम्मृदा मृत्तिकायुक्तजलेन अधोबिले लिङ्गगुदे प्रक्षाल्य जलाशयमेत्य अङ्घ्रिकरान् अम्मृदा प्रक्षाल्य स्ववर्णवृषविन् स्ववर्णधर्मज्ञः वक्त्रं च गण्डूषतः प्रक्षाल्य अनिन्द्यदिवसे रविवारषष्ठ्यष्टमीचतुर्दशीदर्शादिवर्ज्यदिवसे प्लक्षादिक्षीरीध्मेन। क्षीरिपदं कण्टक्युपलक्षणार्थम्। स्मर्यते च 'सर्वे कण्टकिनः पुण्याः क्षीरिणश्च विशेषतः' इति। दन्तधावनकाष्ठानयनेन रदान् दन्तान् प्रक्षाल्य। निन्द्यदिवसे काष्ठालाभे वा आम्रादिपर्णैः द्वादशगण्डूषैर्वा रदान् प्रक्षाल्य। पुरा पूर्वं प्रातःकाले अब्गोमयैः स्नायात्॥ शार्दूलविक्रीडितम्॥ २६॥

**मध्याह्नेऽप्सु मृदा व्रती त्रिषवणं भिक्षुः प्रवाहाभिदृक् गेहे प्राङ्मुख आचमाघहृतितृप्त्युन्मार्ष्टिसंकल्पनम् ।वर्ज्यं मन्त्रितशीतलोष्णसलिलैः स्नायाच्चिरण्टी सदा नो शीर्ष्णा विधिवत्कृताचमनकः संध्यामुपासीत वित् ॥ २७ ॥**

गृहस्थः मृदाऽप्सु स्नायात् व्रती वनस्थः प्रायश्चित्तकर्ता वा भिक्षुः कुटीचको बहूदकश्च त्रिषवणं त्रिकालं स्नायात्। यदुक्तं 'स्नानं त्रिषवणं प्रोक्तं कुटीचकबहूदयोः। हंसे तु सकृदेव स्यात्परहंसे न विद्यत' इति। सर्वोऽपि स्नानकाले नद्यादौ प्रवाहाभिदृक् प्रवाहाभिमुखः स्नायात्। गेहे प्राङ्मुखः स्नायात्। गृहस्नाने आचम आचमनं, अघहृतिरघमर्षणम्,

तृप्तिर्देवर्षिपितृतर्पणम् । उन्मार्ष्टिर्मार्जनम् । संकल्पनं संकल्पः । एतत्सर्वं वर्ज्यं अर्थादेतत्सर्वं गृहादन्यत्र स्नानेऽवश्यं कार्यम् । गेहे मन्त्रितशीतलोष्णसलिलैः स्नायात् । चिरण्टी सुवासिनी सदा नित्यं न शिरसा स्नायात् । अनिन्द्यदिवसे बुधमन्दवारे सुवासिनीनां माङ्गलिकं शिरःस्नानं विहितं । विधिवत्कृतं आचमनं येन स द्विजः विन् संध्याकालज्ञाता संध्यामुपासीत । संध्याकालस्तु 'उत्तमा तारकोपेता मध्यमा लुप्ततारका' इत्यादिरन्यत्र ज्ञेयः ॥ शार्दूलविक्रीडितम् ॥ ३७ ॥

**मृद्भस्मागुरुचित्र आप्लवसवार्चोर्ध्वं पवित्रोत्तरीयाढ्योऽसूंश्च नियम्य मार्जनमुखं कृत्वोपवीती स्वकम् ॥ दत्त्वाऽर्घ्याणि परीत्य चासनगतः कृत्वा जपोपस्थिती तां संध्यां विसृजद्धुनेन्निशि दिवा संध्यावदर्चेत्सुरान् ॥ ३८ ॥**

तिलकधारणं विना कर्म न कार्यमित्यतस्तिलकमाह –आप्लवः स्नानं तदूर्ध्वं स्नानोत्तरं मृच्चित्रो मृदोर्ध्वपुण्ड्रो भवेत् । सवो होमः तदूर्ध्वं भस्मचित्रो भस्मकृततिर्यक्पुण्ड्रो भवेत् । अर्चोर्ध्वं देवपूजोत्तरं अगुरुचित्रः चन्दनतिलको भवेत् । तथा करयोर्दर्भपवित्रे अङ्के उत्तरीयं च तदाढ्यः।असून्नियम्य प्राणायामं कृत्वा यज्ञोपवीती सन् कर्मकालेऽन्यकालेऽपि कर्मसिद्ध्यर्थं पुरुषार्थसिध्यर्थं च यज्ञोपवीत(ति)ता स्मर्यते 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोत्यकृतं तु तत्'इति ॥ स्वकं गृह्योक्तं मार्जनमुखं मार्जनमन्त्राचमनपुनर्मार्जनाघमर्षणादिकं कृत्वाऽर्घ्याणि दत्त्वा असावादित्यो ब्रह्मेति परीत्याऽऽचम्य पृथ्वीत्यादिमन्त्रैरासनगतः जपोपस्थिती जपमुपस्थानं च कृत्वा दिग्गतदेवतागुरुविप्रवन्दनपूर्वकं उत्तमे शिखर इति तां संध्यां विसृजेत् । निशि दिवा हुनेत् सायंप्रातर्होमौ कुर्यात् । होमस्य सायमारम्भः। संध्यावत्त्रिकालं सुरान् पञ्चायतनदेवता अर्चेत् पूजयेत् । 'यथा संध्या तथा पूजा त्रिकाले मोक्षदा मता'इति स्मृतेः॥ शार्दूलविक्रीडितम् ३८ ॥

**यज्ञान्मासिकवार्षिकान्स्वसुगृहे नित्यांश्च पाठं सकृच्छ्राद्धं पोष्यभरोऽमृतं हितमितं सास्वग्निहोत्रं चरेत् ॥ निःशेषं लवणाज्यपायसमशब्दं मण्डले भाजने मौनी स्नानजपाशनोत्सृतिषु चामन्त्राशने काकता ॥ २९ ॥**

दर्शपूर्णमासाख्यान् मासिकान् यज्ञान् चरेत् । आग्रयणाद्यान् वार्षिकान् चरेत् । ते च स्वसुगृहे एव न परगृहे । आपदि भाटकं दत्त्वा परगृहे यज्ञादिकरणे न पुण्यहानिः। सुशब्देन संस्कृतं उपलिप्तं च गृहं ग्राह्यम्। स्मर्यते च 'अकपाटमनाच्छन्नमदत्तबलिभोजनम् । गृहं न प्रविशेद्धीमानापदामाकरो हि सः। सर्वत्र वसुधा पूता यत्र लेपो न विद्यते। यत्र लेपो भवेत्तत्र पुनर्लेपेन शुध्यति'इत्यादिः । पाठातिरिक्तान्नित्यान्देवयज्ञभूतयज्ञपितृयज्ञमनुष्ययज्ञानात्मसंस्कारार्थं अन्नसंस्कारार्थं पञ्चसूनादोषपरिहारार्थं प्रातः सायं च चरेत्। पाठं ब्रह्मयज्ञं सकृदिवैव चरेत् । नित्यं मासिकं वार्षिकं च श्राद्धं चरेत् । अग्न्यातिथिभृत्यादिपोष्यभरो गृही, सास्वाग्निहोत्रं प्राणाग्निहोत्रसहितं हितं अनिन्द्यं पथ्यं मितं परिमितं अमृतं यज्ञशेषान्नं चरेद्भक्षेत् । लवणाज्यपायसं निःशेषं चरेत् अर्थादन्यत्सशेषं चरेत् । 'सर्वं सशेषमश्नीयान्निःशेषं घृतपायसम्' इति स्मृतेः। पायसादिकमशब्दं चरेत् । तच्च मण्डले भाजने मण्डलोपरि निहिते शुद्धे भाजने पात्रे चरेत् । स्नानजपाशनोत्सृतिषु मौनी भवेत् । उत्सृतिर्मूत्रपुरीषोत्सर्गः । अमन्त्राशने आपोशनप्राणाग्निहोत्रमन्त्ररहिते यथेष्टाशने काकता काकजन्म भवेत् । अथवा अमन्त्राशने आमन्त्रणं विना परगृहभोजने काकता ॥ शार्दूलविक्रीडितम् ॥ २९ ॥

**पर्वार्केषु निशि व्रते न च चरेद्भूताष्टमीवासरे ताम्बूलं विधवा यतीतर इदं नाद्याद्व्रते चाह्निकम् ॥ निश्याद्यप्रहरान्तमन्तरितकं नैशं निशीथात्पुरा प्रायश्चित्तमतः स्वदारग ऋतौ रागी क्षणेऽनिन्दिते॥ ३० ॥**

पर्वार्केषु निशि पौर्णमासीदर्शरविवारेषु रात्रौ न च चरेत् भोजनं न कुर्यात्। तथा चतुर्दश्यष्टमीषु दिवसे,व्रते एकादश्यां अहोरात्रं न च चरेत् भक्षेत्। 'अर्कपर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा। एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत्' इति स्मृतेः। विधवा यती ताम्बूलं नाद्यात्। सोऽपि(इतरः)इदं ताम्बूलं व्रताहे नाद्यात। संकटात् अन्तरितं आह्निकं निशि आद्यप्रहरपर्यन्तं कुर्यात्। तथा नैशं कर्म निशीथात् पुरा कार्यम्। अतः परं अष्टोत्तरशतगायत्रीजपरूपं प्रायश्चित्तम्। रागी पुरुषः अनिन्दिते क्षणे स्वदारगो भवेत्। अर्थात्परदारगः निन्दितक्षणे स्वदारगश्च पतेत्। स्मर्यते च 'येऽपि गच्छन्ति रागान्धा नरा नारीं रजस्वलाम्॥ पर्वण्यप्सु दिवा श्राद्धे ते वै नरकगामिनः' इत्यादिस्मरणात्॥ शार्दूलविक्रीडितम्॥ ३०॥

**कौ न्यासी विधवा स्वपेन्न यमदिक्पादोऽखिलो यत्कृतं तं संन्यस्य हरावयं वरवृषः षट्कर्मणो ब्रह्मणः॥ नातः श्रेय इदं पराशरमुखैरुक्तं मयोक्तं तु ते श्रुत्वा सोऽपि तथाऽऽचरत्समुदितो लुप्तोऽपि धर्मः पुनः॥ ३१॥**

न्यासी संन्यासी विधवा च कौ भूमौ स्वपेन्न खट्वादौ। अखिलः सर्वो लोकः यमदिक्पादो दक्षिणादिक्पादो न स्वपेत्। यत्कृतं कर्म तत्सर्वं हरौ परमेश्वरे संन्यस्य समर्प्य स्वपेत्। इज्याध्ययनदानयाजनाध्यापनप्रतिग्रहाख्यानि षट् कर्माणि यस्य तस्य ब्रह्मणः ब्राह्मणस्य अयं वरवृषः उत्तमधर्मः। त्रैवर्णिकसाधारण्येऽपि ब्राह्मणस्य श्रेष्ठत्वमभिप्रेत्य ब्रह्मण इत्युक्तम्। सर्ववर्णाश्रमाणां प्राथमिकं अतः परं श्रेयःसाधनं नास्ति। इदं श्रेयःसाधनं पराशरमुखैः उक्तं तदेव मया ते तुभ्यं उक्तं न त्वर्वाचीनं स्वकल्पितम्। एवं श्रीगुरूक्तं श्रुत्वा सोऽपि ब्राह्मणः तथा तेन प्रकारेणाऽऽचरत्। कलौ कालवशाल्लुप्तोऽपि धर्मः पुनः सम्यक् उदितः॥ शार्दूलविक्रीडितम्॥ ३१॥

**त्रिपुंभुक्तिपर्याप्तमन्नं गृहीत्वा ययौ भास्कराख्यो द्विजो-ऽजाय भिक्षाम्॥ प्रदातुं त्रिमासं स वासं चरन्वै न लेभेऽन्तरं तं हसन्तीतरे स्म॥ ३२ ॥**

भास्कराख्यः द्विजः अजाय भगवते भिक्षां प्रदातु त्रिपुरुषभोजन-पर्याप्तमन्नं गृहीत्वा आययौ । स भास्करः तत्र त्रिमासं वासं चरन् कुर्वन् वै निश्चयेन भिक्षां दातुं अन्तरं अवकाशं न लेभे । अयं भिक्षां दातुं आगत्य प्रत्यहं गुरुपङ्क्तौ भुञ्जान आत्मानं पुष्णातीति तं इतरे हसन्ति स्म ॥ भुजङ्गप्रयातम् ॥ ३२ ॥

**गुरुः कारयामास पाकं च साकं स्त्र्यपत्यैर्द्विजैर्भोजयामास लोकम् ॥ परं चापि चान्नं न हीनं हि जातं तदाऽलौकिकं कौतुकं तत्र जातम् ॥ ३३ ॥**

तदा गुरुः पाकं कारयामास । स्त्र्यपत्यैः द्विजैः साकं लोकं चतुःसहस्रसंख्यातं स्वल्पान्नेन भोजयामास। परं पशुपक्ष्यादिकमपि भोजयामास । तथापि हि निश्चयेनाऽन्नं हीनं न जातं तदा तत्रालौकिकं कौतुकं जातम्॥ भुजङ्गप्रयातम् ॥ ३३ ॥

**प्राकाम्यसिध्या स्वल्पान्नप्राकाम्यं हीश्वरोऽकरोत् ॥**
**सकाममागतं विप्रं निष्कामं चाऽपि भास्करम् ॥ ३४ ॥**

हि निश्चयेनेश्वरो भगवान् अष्टमहासिध्यन्तर्गतप्राकाम्यसिध्या स्वल्पान्नप्राकाम्यमकरोत् । सकाममागतं भास्करं विप्रं चापि निष्काममकरोत्॥ अनुष्टुप् ॥ ३४ ॥

**गङ्गानाम्नी सोमनाथकामिनी पुष्पवर्जिता ॥**
**परजन्मनि पुत्रार्थं समर्थमजमाभजत् ॥ ३५ ॥**

अभीष्टं दातुं समर्थं अजं भगवन्तं । पुष्पवर्जिता विगतार्तवा वृद्धा । शेषं स्फुटम् ॥ अनुष्टुप् ॥ ३५ ॥

**तामाह तादृशीं तातः क्व जन्मैष्यं क्व वा स्मृतिः ॥**
**मृतिर्विस्मृतिरेवात्र सत्पुत्रौ ते भविष्यतः ॥ ३६ ॥**

जगत्तनोतीति तातः भगवान् तादृशीं वृद्धां तामाह । एष्यं ते जन्म क्व भविष्यति । क्व वेयं वरदानादिलक्षणा स्मृतिः । यतः यस्मात्कारणात् मृतिर्नाम पूर्वजन्मविस्मृतिरेव । अतः हेतोः अत्रैव वर्तमाने जन्मनि ते पुत्रौ, पुत्री च पुत्रश्च पुत्रौ इत्येकशेषः । तौ कन्यापुत्रौ मत्प्रसादाद्भविष्यतः । अनुष्टुप् ॥ ३६ ॥

**इत्युक्त्वा नारदब्रह्मवादोक्ताश्वत्थसेवनम् ॥**
**शशंसाऽस्या अपुष्पत्वे फलवत्तेत्यसूचि किम् ॥ ३७ ॥**

भगवान् इत्युक्त्वा नारदब्रह्मदेवसंवादरूपि यदुक्तं अश्वत्थसेवनं अस्यै ब्राह्मण्यै शशंस कथयामास । पुत्रप्राप्त्यर्थमश्वत्थसेवनकथनस्य कोऽभिप्राय इत्यत आह–'अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः' इति मानवात् अश्वत्थस्य वनस्पतित्वादपुष्पत्वेऽपि फलवत्ता यथा दृश्यते तथा अपुष्पाया अपि तवापि मदनुग्रहात् पुत्रवत्ता भविष्यतीति भगवताऽसूचि किम् ॥ अनुष्टुप् ॥ ३७ ॥

**ततो दृष्टरजा भूत्वा सगर्भा जरती त्वभूत् ॥**
**तां वीक्ष्योचुर्जनाः किं नु जंगमोऽसौ वनस्पतिः ॥ ३८ ॥**

ततोऽश्वत्थसेवनानन्तरं जरती तु वृद्धापि सा दृष्टरजाः रजस्वला भूत्वा सगर्भा गर्भिणी अभूत् । तां विगतार्तवेति विश्रुतां गर्भिणीं वीक्ष्य जना ऊचुः । असौ जंगमो वनस्पतिः किं न्विति । प्रसिद्धो वनस्पतिर्न चलति इयं तत्तुल्याऽपि चलतीत्यतो जंगमोऽसौ वनस्पतिरित्युत्प्रेक्षा व्यतिरेकश्च ॥ अनुष्टुप् ॥ ३८ ॥

**कन्याऽथास्या अभूत्तां सा शुध्द्यूर्ध्वं गुरुसंनिधिम् ॥**
**नीत्वोचे दारिका त्वेषा पितृहृद्दारिका न किम् ॥ ३९ ॥**

अथ गर्भधारणानन्तरं दशमे मासि अस्याः ब्राह्मण्याः कन्याऽभूत् ।

सा ब्राह्मणी शुध्द्यूर्ध्वं तां गुरुसांनिधिं नीत्वा ऊचे। एषा तु दारिका कन्या जाता इयं पितृहृद्दारिका पित्रोर्हृदयविदारिका न भविष्यति किं, अपि तु भविष्यति। यदुक्तं 'दारिका हृदयदारिका पितुः' इति। श्रुतिश्च 'सखा जाया कृपणं ह दुहिता ज्योतिर्ह पुत्राः परमे व्योमन्' इति। अतः पुत्रो मे जायतामित्याशयः ॥ अनुष्टुप् ॥ ३९ ॥

**तस्यै तदनुमत्यादादल्पायुष्यं बुधं सुतम् ॥**
**स तन्तुवर्धको जज्ञे तथा सा सद्गतिं गता ॥ ४० ॥**

मूर्खः शतायुः पुत्रः पण्डितोऽल्पायुर्वा तेऽभिमत इति गुरुणा पृष्टा ब्राह्मणी अल्पायुषं बुधं ययाच इत्याह–तस्यै ब्राह्मण्यै तस्या अनुमत्या। आयुरेवायुष्यं स्वार्थे यत्। अल्पं आयुष्यं यस्य तं बुधं सुतं अदात्। स सुतोऽल्पायुरपि तन्तुवर्धकः पञ्चपुत्ररूपतन्तुवर्धको यथा याचितस्तथा बुधो दीर्घायुश्च जज्ञे। सा सकामापि ब्राह्मणी सद्गतिं मोक्षं गता ॥ अनुष्टुप् ॥ ४० ॥

**शुष्कोदुम्बरकाष्ठसेवनमहो कष्टं सुकुष्ठाय स प्रोचे कुष्ठनिवृत्तये नृहरये नत्वा गरिष्ठं स तु ॥ भेजे शिष्टनिवारितोऽपि तरुवत्काष्ठं सुकष्टेन तल्लोका ऊचुरजं स ताञ्छबरसन्निष्ठां तथा रिष्टदाम् ४१**

कथान्तरमारभते– अहो इत्याश्चर्ये। स भगवान् कुष्ठनिवृत्तये कुष्ठरोगशान्त्यर्थं कष्टं कष्टरूपं शुष्कौदुम्बरकाष्ठसेवनं सुकुष्ठाय कुष्ठव्याप्ताय नृहरये तन्नामकायाऽऽपस्तम्बशाखीयब्राह्मणाय प्रोचे। एतत्काष्ठसेवनं कुरु एतस्मिन् पल्लविते सति तव शुद्धिर्भविष्यति त्वं कुष्ठहीनः शुभाङ्गश्च भविष्यसीति प्रकर्षेण ऊचे। स तु कुष्ठी गरिष्ठं गुरूणामपि गुरुतमं भगवन्तं नत्वा। किमनेन काष्ठसेवनेन (इति) शिष्टनिवारितोऽपि सुतरां कष्टेन तरुवत्काष्ठं भेजे। तत्तस्य कष्टरूपं कर्म लोका अजं गुरुं ऊचुः। सोऽजो भगवान् तान् लोकान् रिष्टदां क्षेमप्रदां अरिष्टहरां वा लिङ्गार्चनार्थं राज-

पुत्रोपदिष्टस्य प्रत्यहं शंभवे नूत्नं चिताभस्मार्पयतः शबरस्य सन्निष्ठां तथा उवाच ॥ शार्दूलविक्रीडितम् ॥ ४१ ॥

हन्ताऽहं तारकोऽप्येतान् चिन्तानन्ता वृथागता ॥
मयि संतारिका भक्तिर्जाता संतारयेन्न किम् ॥ ४२ ॥

तदा भगवान् स्वगतमाह – हन्त अहं तारकोऽपि अस्मि अथापि एतान् अनन्ता चिन्ता वृथा आगता। सम्यक् तारिका मयि विषये जाता भक्तिः संतारयेन्न किं अपि तु तारयेदेव ॥ अनुष्टुप् ॥ ४२ ॥

इत्युक्त्वा तत्र गत्वा प्रभुरथ करकस्थोदकैः प्रोक्ष्य काष्ठं तद्दृष्ट्या दिव्ययैक्षद्विटपिवदभितस्त्वंकुराः प्रादुरासन् ॥ सन्विप्रोऽभूद्विकुष्ठः परतरकृपया स्वर्णवर्णोऽस्तुवत्तं देवः सस्त्रीकमेतं खलु निजनिकटे स्थापयामास नित्यम् ॥ ४३ ॥

इत्युक्त्वाऽथ प्रभुर्भगवान्। तत्र गत्वा करकस्थोदकैः कमण्डलुजलैः तत्काष्ठं प्रोक्ष्य दिव्यया दृष्ट्या ऐक्षत्। तदा तस्मिन्काष्ठे विटपिवत् वृक्षवत् अभितः समन्ततोऽङ्कुराः प्रादुरासन्। परतरस्य भगवतः कृपया विकुष्ठः कुष्ठरहितः सन् साधुः स्वर्णस्य वर्ण इव वर्णो यस्यैतादृशो विप्रो भूत्वा तं भगवन्तमस्तुवत्तुष्टाव। देवः भगवान् खलु निश्चयेन सस्त्रीकं एतं विप्रं निजनिकटे नित्यं स्थापयामास ॥ स्रग्धरा ॥ ४३ ॥

प्रेष्ठदृष्ट्या तु कामादिदुष्टा नष्टाऽस्य संसृतिः ॥
विशिष्टेष्टस्य यः प्रेष्ठः कुष्ठवार्ता कुतोऽस्य तु ॥ ४४ ॥

सर्वेषां आत्मभूतत्वात् प्रेष्ठस्य प्रियतमस्य गुरोर्दृष्ट्या अस्य विप्रस्य कामादिदुष्टा संसृतिः संसारो नष्टः। विशेषेण शिष्टानां य इष्टः भगवान् तस्य यः प्रेष्ठोऽभवत्। अस्य विप्रस्य तु कुतः कुष्ठवार्ता ॥ अनुष्टुप् ॥ ४४ ॥

नामधारक ते पूर्वः सायंदेवाभिधानकः ॥
वर्षार्दितोऽप्यजं भेजे तस्मै त्वाष्ट्रकथां जगौ ॥ ४५ ॥

अथान्यत्कथान्तरं । हे नामधारक, ते पूर्वः पूर्वजः सायंदेवनामकः वर्षार्दितोऽपि वृष्टिपीडितोऽपि स्वयं शीतवातादिसहिष्णुः सन् अजं भगवन्तं भेजे । भगवान् तस्मै काशीयात्राचरणरूपां त्वाष्ट्रकथां विश्वकर्मकथां जगौ ।। अनुष्टुप् ।। ४५ ।।

यात्रानिरूपणमिषेण स दर्शयित्वा काशीं निजासनगताय नताय तेन ।। स्तोत्रेण किल्बिषहरेण सुतुष्ट ऊचे त्वं चेह दारसहितोऽवहितो वसेति ।। ४६ ।।

स भगवान् काशीयात्रानिरूपणमिषेण निजासनगताय स्वासनस्थाय न तु काशीं प्रविष्टाय नताय नम्राय सायंदेवाय काशीं दर्शयित्वा तेन सायंदेवेन किल्बिषहरेण स्तोत्रेण सुतरां तुष्टः भगवानूचे उवाच । हे सायंदेव, त्वं अवहितः समाधानमनाः सन् दारसहितः भार्यासहितः इह मन्निकटे वस निवासं कुर्विति ऊचे इति संबन्धः।। वसन्ततिलका ।। ।। ४६ ।।

उदारान्स दारान्समानीय सार्भान्विदर्भात्मजासंनिभानिन्दुभास्यम् ।। ववन्देऽभवं देवदेवं स भावं निरीक्ष्यास्य वंशाय चाऽदात्स्वभावम् ।। ४७ ।।

स सायंदेवः उदारान् सार्भान् सपुत्रान् विदर्भात्मजासंनिभान् रुक्मिणीतुल्यान् दारान् पत्नीं गुरुसंनिधौ समानीय इन्दुभास्यं प्रसन्नवदनं अभवं भवनिवर्तकं देवदेवं भगवन्तं ववन्दे । स भगवान् तस्य भावं भक्तिं निरीक्ष्य अस्मै अस्य वंशाय च स्वभावं स्वभक्तिं अदात् । (पृष्ठ)पललग्नबृहत्फणसर्पभयान्धकारगमनेन सकरकवृष्टिसहनेनापि गुरुं सेवमानस्य धवस्यानुगामित्वादुदाराः ।। भुजङ्गप्रयातम् ।। ४७ ।।

तस्मै कौण्डिण्यगोत्राय कौण्डिण्यर्षिकृतं व्रतम् ।।
उक्त्वाकारयदानन्तं पाण्डवेन हरिर्यथा ।। ४८ ।।

कौण्डिण्यगोत्राय तस्मै सायंदेवाय कौण्डिण्यार्पिकृतं अनन्तव्रतं उक्त्वा अकारयत् कारयामास। पाण्डवेन हरिर्यथा तथा ॥ अनुष्टुप् ॥ ४८ ॥

**कथां परां शृणु रुचिरां सुभाविकः कुविन्दकः प्रभुभजकः स तन्तुकः ॥ तमाह्वयच्छ्रचगगमनाय बन्धुता स तां जगावग इह मेऽर्च्यदेवता ॥ ४९ ॥**

हे नामधारक, परां रुचिरां कथां शृणु। सुभादिकः नितरां गुरुभक्तिमान् कुविन्दकः तन्तुवायजातीयः सः प्रसिद्धः तन्तुकः प्रभुभजकः भगवत्सेवकः आस। तं तंतुकं तस्य बन्धुता बन्धूनां समूहः श्रयगगमनाय श्रीशैलं गन्तुं आह्वयत्। स तन्तुकः तां बन्धुतां जगौ। इह मेऽर्च्यदेवता भगवानेव श्रयगः श्रीशैलः अस्ति ॥ रुचिरावृत्तम् ॥ ४९ ॥

**मत्वाऽज्ञं तं सा तु जगामाऽगमथोचे मध्याह्ने तं संगममाप्तं स तु नो चेत्॥ दृष्टोऽगोऽन्वेहीत्यनयत्तं स च दृष्ट्वा नृत्यन्रेजे मत्तमयूरोपम इष्ट्वा ॥ ५० ॥**

सा तु बन्धुता तं तथा भाषमाणं तन्तुकं अज्ञं मत्वाऽगं श्रीशैलं जगाम। अथ तदनन्तरं शिवरात्रिव्रतदिने मध्याह्ने संगमं आप्तं प्राप्तं तं तन्तुकं स तु भगवानूचे। अगः श्रीशैलस्त्वया न दृष्टश्चेत्तर्हि त्वं अन्वेहि मम पश्चादागच्छेत्युक्त्वा आकाशगमनसिध्द्या क्षणात्तं श्रीशैलमनयत्। स च तन्तुकः श्रीशैलं मल्लिकार्जुनं च दृष्ट्वा इष्ट्वा पूजयित्वा च हर्षेण नृत्यन् मत्तमयूरोपमः रेजे ॥ मत्तमयूरम् ॥ ५० ॥

**कृत्वा वपनं द्रष्टुं गुरुणाऽऽदिष्टः स मल्लिकार्जुनं गत्वा ॥ तत्र गुरून्स्वजनानपि दृष्ट्वैत्य पुनर्जगौ गुरुं नत्वा ॥ ५१ ॥**

गुरुणा भगवता आदिष्टः आज्ञप्तः स तन्तुकः वपनं स्नानं च कृत्वा मल्लिकार्जुनं द्रष्टुं गत्वा तत्र देवस्थाने गुरून्। पूजायां बहुवचनम्। देवालये च स्वजनानपि दृष्ट्वा पुनर्गुरुं एत्यागत्य नत्वा यद्दृष्टं तज्जगौ ॥ आर्या ॥ ५१ ॥

अवेक्ष्याप्यन्तिकस्थं त्वामुपेक्ष्यापि कुतो जनः ॥
दूरमेतीति संपृष्टो दूरदृष्टिरुवाच तम् ॥ ५२ ॥

अन्तिकस्थं निकटस्थं त्वां भगवन्तं अवेक्ष्यापि पुनश्चोपेक्ष्यापि जनः कुतो हेतोः दूरं एत्यागच्छतीति पृष्टः दूरदृष्टिः भगवान् तं तन्तुकं उवाच॥ अनुष्टुप् ॥ ५२ ॥

कारुण्यात्[1]स्वेच्छया मे जननमिह कृतं कर्म दिव्यं च तज्ज्ञा
गौण्या भक्त्या पवित्राः स्मृतिकथनमुखैश्चार्चनैर्नापराधैः ॥
पादोऽदाद्यैर्मदात्मा विदित इह तु यैर्भक्तिमाप्ताः परां ये
संमानाद्यङ्किकतास्तत्कृतवसतिषु मे नित्यवासो विभोश्च ॥५३॥

( कारुण्यादिति । न व्याख्यातमिदं पद्यम् ॥ स्रग्धरा ) ॥ ५३ ॥

इत्युक्त्वा कथयित्वाऽस्मै विमर्षणकथां पुनः ॥
सुमर्षणो धारयित्वा पादुके मठमानयत् ॥ ५४ ॥

सुमर्षणः नित्यशान्तो भगवान् इत्युक्त्वा अस्मै तन्तुकाय विमर्षणराज्ञः कथां कथयित्वा पुनः पादुके धारयित्वा तं मठं आनयत् ॥अनुष्टुप्॥५४॥

जनाय पृच्छते क्षौरहेतुं तन्तुक आह सत् ॥
असन्मेने स पक्षान्ते सदासाऽऽप्तात्तु तैर्थिकात् ॥ ५५ ॥

क्षौरहेतुं पृच्छते जनाय तन्तुकः तत् सत्यं आह । तच्छ्रुत्वाऽपि स

(१ मे मया इह लोके कारुण्यात् लोककरुणया स्वेच्छया जननं कृतं अवतारो धृतोऽस्ति । दिव्यं वर्णाचारविहितं कर्म च कृतम्। अत्र ये तज्ज्ञाः मदवतारकर्माचरणादिज्ञाः स्मृतिकथनमुखैः शास्त्रानुसारिभिः नापराधैः शुद्धैः अर्चनैः तथा पादोदाद्यैः चरणतीर्थसेवनैः गौण्या भक्त्यापि पवित्राः, यैश्च मदात्मा विदितः मत्स्वरूपं ज्ञातं, ये परां भक्तिं आप्ताः मत्संमानाद्यङ्किताश्च तेषां कृतिषु वसतिषु च विभोः मे नित्यं वासः वसतिरस्ति । ' मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ' इत्युक्तिमूलकमेवेदम् ॥५३॥)

जनः असत् असत्यं मेने । ततः पक्षान्ते आप्तात् श्रीशैलात्सकाशादागतात् तैर्थिकात् जनात् सत् सत्यं आस ॥ अनुष्टुप् ॥ ५५ ॥

**दूरीकृत्यान्तरं साक्षाद्दूरीकृत्याङ्ग तन्तुकः ॥**
**परां भक्तिं ययौ साक्षात्परां भागवतीं गतिम् ॥ ५६ ॥**

अङ्ग हे नामधारक, तन्तुकः अन्तरं अविद्यामायोपाधिगतभेदं दूरीकृत्य निवार्य साक्षात्परां भक्तिं ऊरीकृत्याङ्गीकृत्य परां काष्ठां भागवतीं गतिं मोक्षं ययौ ॥ अनुष्टुप् ॥ ५६ ॥

**नन्दिशर्माऽभजद्देवीं कुष्ठान्ताय तया यतिम् ॥**
**गन्धर्वस्थं चरेत्युक्तः स्वप्ने बुद्धोऽवदत्स ताम् ॥ ५७ ॥**

कुष्ठी नन्दिशर्मा कुष्ठान्ताय कुष्ठनाशाय देवीं चन्दलापरमेश्वरीं अभजत्। तया देव्याऽपि गन्धर्वस्थं यतिं चर गच्छेति स्वप्ने स्वप्नावस्थायां उक्तः सः बुद्धः गतनिद्रः सन् तां देवीमवदत्। देव्या सह साक्षाद्भाषणाभावेऽपि देवीप्रतिमासंनिधौ वक्ष्यमाणमवदत् ॥ अनुष्टुप् ॥ ५७ ॥

**वृषाकपाय्योर्नो भेदो वृषाकप्योर्मनागपि ॥**
**संमतो देवदैवज्ञे विमतोऽमर्त्यमर्त्ययोः ॥ ५८ ॥**

वृषाकपाय्योर्गौरीलक्ष्म्योर्भेदो न संमतः एकरूपत्वात्। तथा वर्षति कामान् कम्पयति दोषानिति वृषाकपिः शिवो विष्णुश्च तयोर्भेदो न संमतः। हे देवदैवज्ञे, अमर्त्यमर्त्ययोः सुरनरयोर्भेदः विमतो न किंतु मत एव परस्परं विरुद्धत्वात्। 'विष्णुरुद्रान्तरं ब्रूयाच्छ्रीगौर्योरन्तरं तथा। तद्भ्रान्तिकस्य मूर्खस्य वाक्यं शास्त्रविगर्हितम्' इति स्कान्दोक्तेः ॥ अनुष्टुप् ॥ ५८ ॥

**नरं चरेति कथितुं देवि लज्जाऽपि ते न किम् ॥**
**तेन किं मम चात्रैव कुर्वे प्रायोपवेशनम् ॥ ५९ ॥**

त्वं नरं चर गच्छेति कथितुं हे देवि, ते लज्जाऽपि न किम्। तेन

मनुष्येण मम किं प्रयोजनम् । अतोऽत्रैव प्रायोपवेशनं 'संन्यासवत्य(न)शने पुमान्प्रायः ' इत्युक्तलक्षणं कुर्वे ॥ अनुष्टुप् ॥ ५९ ॥

**ततोऽसौ हापितो यातो यतिं तेनोदितोऽपि ते ॥**
**कृत्यं मर्त्येन किमिति स तदा वेद तं परम् ॥ ६० ॥**

ततः देव्या स्वभक्तद्वारा हापितोऽसौ विप्रः यतिं भगवन्तं यातः गतः तेन भगवताऽपि मर्त्येन मया ते तव किं कृत्यमितीत्थं उदितः स नन्दिशर्मा तदा तं भगवन्तं परं परमेश्वरं बुद्धिसाक्षिणं वेद ॥अनुष्टुप् ॥६०॥

**संगमे स्नापयित्वा स आनीतो गुरुणान्तिकम् ॥**
**एकं प्रतीकं कुष्ठाक्तं दृष्ट्वाऽभाणीत्स तं हितम् ॥६१॥**

ततो गुरुणा संगमे स्नापयित्वाऽन्तिकं आनीतः स नन्दिशर्मा एकं प्रतीकमङ्गं कुष्ठाक्तं दृष्ट्वा हितं हितकरं तं भगवन्तमभाणीत् ॥ अनुष्टुप् ॥ ॥ ६१ ॥

**कुष्ठं शिष्टमिदं कुतो वद हरे मत्संशयाच्चेत्सुधा पीताऽप्यम्बुधिया मृतिं नयति किं स्पृष्टोऽनलोऽज्ञानतः ॥ किंवाऽल्पं दहतीत्यजोऽवददमुं जन्मान्धबुध्द्या यथा भात्यर्कोऽपि तमोमयो मयि तथा त्वत्कल्पनेयं वृथा ॥ ६२ ॥**

भो हरे, इदं कुष्ठं कुतः कारणात् शिष्टं अवशिष्टं तद्वद । अयं मनुष्यो वान्यो वेति मत्संशयात् अवशिष्टमिति वदसि चेत्तर्हि अम्बुधियाऽपि पीता सुधाऽमृतं पानकर्तारं मृतिं मरणं नयति किं । वाऽथवा अज्ञानतः स्पृष्टोप्यनलोऽग्निः अल्पं दहति किं । इति तद्वचनं श्रुत्वाऽजो भगवानमुं नन्दिशर्माणं अवदत् । यथा जन्मान्धबुद्धयाऽर्कः तमोमयो भाति तथा मयि विषये वृथा इयं त्वत्कल्पना । तव दोषोऽयमेवेत्यर्थः ॥ शार्दूलविक्रीडितम् ॥ ६२ ॥

विप्राऽथाऽपि स्तुहि परधिया मां तया तेऽस्तु शुद्धिस्तद्धि श्रुत्वाऽवददयमहो विद्धि मां हीनबुद्धिम् ॥ मौने जाने न च लिपिमपीत्यत्रिजो भस्म दिव्यं तज्जिह्वाग्रेऽक्षिपदथ कविः सोऽपि भूत्वेशमस्तौत् ॥ ६३ ॥

हे विप्र, अथापि अयं पर इति धिया मां स्तुहि तया स्तुत्या ते शुद्धिरस्तु । तद्धि वचः श्रुत्वाऽयं विप्रः अवदत् । अहो मौने, मां हीनबुद्धिं विद्धि जानीहि लिपिमपि चाहं न जाने । इतीत्थं श्रुत्वाऽत्रिजः भगवान् दिव्यं मन्त्रितं भस्म तस्य जिह्वाग्रेऽक्षिपत् । अथ भस्मक्षेपानन्तरं सोऽपि विप्रः कविर्भूत्वा ईशं भगवन्तं अस्तौत् ॥ मन्दाक्रान्ता ॥ ६३ ॥

ब्रह्मन् तत्त्वमसि त्वमादिपुरुषः सन्निर्विशेषोऽकलः कालादीन्निजशक्तितः सृजति यः सोऽचिन्त्यशक्तिः स्वराट् ॥ पश्चाग्निक्रमतोंऽशकान्कृतफलप्राप्त्यै मुहुर्भ्रामयन्गर्भावासजनुर्दशादिभिरहंत्वेनापि नो लिप्यते ॥ ६४ ॥

भो ब्रह्मन्, त्वं तत्त्वं परं ब्रह्माऽसि । त्वं निर्विशेषः अतएवाकलः षोडशकलारहितः । ' अप्राणो ह्यमनाः शुभ्रः ' इत्यादिश्रुतेः । आदिपुरुषः सन् निजशक्तितः स्वमायासमावेशात् कालादीन् सृजसि । य ईदृशः स्रष्टा स त्वं अचिन्त्या सत्त्वासत्त्वाभ्यामनिर्वचनीया शक्तिर्यस्य सः स्वराट् स्वतःसिद्धज्ञानवान् अंशा इवांऽशाः अंशा एवांशकाः जीवास्तान् तत्कृतकर्मफलप्राप्त्यै द्युपर्जन्यौपधिपुरुषयोषारूपपञ्चाग्निक्रमतः । गर्भावासश्च जनुर्दशादयः जन्माद्यवस्थाश्च (नाभिः) भ्रामयन्नपि अहंत्वेनाहं कर्तेत्यभिमानत्वेन नो लिप्यसे। 'भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' इत्यादिस्मृतेः ॥ शार्दूलविक्रीडितम् ॥ ६४ ॥

निवर्तते ज्ञानमृते त्वनादिभ्रमो न न त्वद्भजनं विना तत् ॥ अतस्त्वयि प्रीतिरनारताऽस्तु यथाबुधानां विषयेषु नाथ ॥ ६५ ॥

अयं अनादिभ्रमः ज्ञानमृते ज्ञानं विना न निवर्तते । तर्हि भ्रमनिवृत्तये ज्ञानमेवालमित्यत आह । त्वद्भजनं विना तत् ज्ञानं न भवेत् । अतः हे नाथ, अबुधानां यथा विषयेष्वनारता संतता प्रीतिरस्ति तथा त्वयि अनारता प्रीतिरस्तु ॥ उपजातिः ॥ ६५ ॥

**एकस्त्वं षड्रिपून् जेतुं भगवन्न क्षमोऽसि चेत् ॥**
**जह्येकं काममेवाथो शिष्टा यास्यन्ति पञ्चताम् ॥ ६६ ॥**

ननु कामादिभ्याकुलचित्तानां कुतो मय्यनारता प्रीतिरिति चेत्तान् घातयित्वा प्रीतिं देहि यद्यपि षड्रिपुहनने प्रयास इत्यत आह – हे भगवन्, एकस्त्वं षड्रिपून् जेतुं न क्षमोऽसि चेत्तर्हि एकं काममेव जहि । अथो कामघातानन्तरं शिष्टाः क्रोधादयः पञ्च पञ्चतां पञ्चसंख्याकतां यास्यन्ति । पञ्चतेति मरणं। कामनाशे अर्थाच्छिष्टानां नाश इति भावः। सर्वेषां काममूलकत्वात् ॥ अनुष्टुप् ॥ ६६ ॥

**तौतातितातीत तात तततन्तुततीत ते ॥**
**तत्ता तूता तता तेऽन्तातीतताऽतितता ततः ॥ ६७ ॥**

तौतातितेत्यस्यान्वयः।हे तौतातितातीत। हे तात । हे तततन्तुततीत ते तता । तत्ता तु । ऊतास्ति ।(यत एवं)ततः अतितता । ते अन्तातीतता । अस्ति ॥ पाठान्तरपक्षे । हे तौतातितातीत । हे तात हे तततन्तुततीत । तता ते । तत्ता । ऊतास्ति । हे ततः अतीत । अतितता । हे ते अन्तातीतता चास्ति । इति॥(व्याख्या) ॥ तौतातितं बुद्धावान्तरभेदः क्षपणकसौगतादिमतं अतीतः अतिक्रान्तः तत्संबुद्धौ । कुत इत्यत आह–हे तात तनोति तेजोबन्नादिलक्षणप्रकृत्यादिद्वारा विस्तारयतीति तथा जगद्विस्तारकः तत्संबुद्धौ । एतेनासत्पूर्वकत्वं जगतः प्रत्याख्यातम् । 'तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेत । कुतस्तु खलु सोम्यैवꣳस्यादिति होवाच । कथमसतः सज्जायेत सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादिन्यायोपबृंहितश्रुतेः । किं तातशब्देन जग-

त्स्रष्टा ब्रह्मोच्यते, नेत्याह । हे तततन्तुततीत । तताः विस्तृताश्च ते तन्तवः प्रकृतिविकृतिलक्षणाः भूतभौतिकरूपाश्च तेषां ततयः पङ्क्तयःताः अतीतः ततोऽप्यधिकः तत्संबुद्धौ । तत्राकाशवायुतेजोजलभूमयोऽपञ्चीकृतानि तन्मात्राख्यानि सूक्ष्मभूतानि, तेषां पृथक् सात्विकांशेभ्यः श्रोत्रादीन्द्रियाणि, संहतेभ्योऽन्तःकरणं,पुनस्तेषां पृथग्रजोंशेभ्यो वागादिकर्मेन्द्रियाणि,संहतेभ्यः पञ्चवृत्त्यात्मकःप्राणश्चाभवत् । एतत्सर्वं भौतिकं। सूक्ष्मभूतान्येव पञ्चीकृतानि स्थूलानीत्युच्यन्ते । पञ्चीकरणं चेत्थम् । 'द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ॥ स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते ॥ तैरण्डस्तत्र भुवनभोग्यभोगाश्रयोद्भवः' इति । एतत्सर्वं स्थूलं भौतिकम्। प्रकृतिविकृतयस्तु 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । ( प्रकृतयश्च विकृतयश्च भवन्ति)। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ' इति । तर्हि ताततशब्देन प्रधानमुच्यते किं । तस्याप्यविकृतस्य स्वविकारातीतत्वं सांख्योक्तम् । नेत्याह–हे भगवन्, ते तव तता सर्वत्र व्याप्ता तत्ता । तच्छब्देन ब्रह्मोच्यते 'ॐ तत्सदिति निर्देशो ब्रह्मणः' इति स्मृतेः । तस्य ब्रह्मणो भावस्तत्ता ब्रह्मता । न तु प्रकृतिवत्पारतन्त्र्येण जडता तत्ता । तू ( तु ऊतेति पदविच्छेदः ) इति पाठे तत इति सार्वविभक्तिकस्तासिः । 'इतराभ्योऽपि दृश्यन्त ' इति पाणिनीयात् । ततः स्वकार्यसहितं प्रधानं अतीतेति संबुद्धिः ततोऽप्यधिकेत्यर्थः । 'विकारावर्ति च तथाहि स्थितिमाह' इति न्यायात् । ( अयं न्याय उत्तरमीमांसायाम् ) 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि'इति श्रुतेः । 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्'इति स्मरणाच्च । तर्हि ब्रह्मणः सांशता ततः परिच्छिन्नतापि प्राप्नोत्यत आह । हे भगवन्, ते तत्ता तु । तुशब्दः प्रधानादिव्यावर्तकः । ऊता प्रधानादिष्वनुस्यूता । यतः सर्वत्रोता ततस्तस्मात्कारणात् अतितता अतिशयेन तता व्याप्ता । ते तवान्ताऽतीतताऽस्ति । अन्तः परिच्छेदः देशकालवस्तुकृतः तमतीतस्तस्य भावस्तत्ता । तवानन्त्यात्त्रिविधपरिच्छेदराहित्यं निर्बाध-

मस्ति। 'सत्यं ज्ञानमनन्तं ब्रह्म'इति श्रुतेः। 'न व्यापित्वाद्देशतोऽन्तो नित्यत्वान्नापि कालतः। न वस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणि त्रिधा' इत्यभियुक्तोक्तेः। (अभियुक्तो विद्यारण्यः)। पादोऽस्येति श्रुतितात्पर्यं तु–'निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः। तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी' इति ॥ एकाक्षरी ॥ ६७ ॥

सरसासारसंसार सुरासारारिसारर ॥
सूरिसूरेऽसुरारे रैरसारेरं रसोऽसि सः ॥ ६८ ॥

स्तवेन प्रोत्साहितो नन्दिशर्मा गुरुं स्तौति–सरसेति ॥ विक्षेपावरणरहितत्वाद्विशुद्धसत्त्वोपाधित्वात् रसो नित्यो निरतिशयो निरुपाधिक आनन्दः तेन सहितः सरसः तत्संबुद्धौ हे परमानन्द। ननु संसारोऽपि ससार इत्यत आह– हे असारसंसार असारः निःसारः संसारो यस्मात्तत्संबुद्धौ। संसारे उपजीव्यभूतः सारः आनन्दो य आभाति सा आनन्दभूतस्य तव मात्रैव। 'तस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'इति श्रुतेः। पुनः कथंभूत हे सुराऽसारारिसारर। सारं बलं अस्ति एषां ते साराः। अर्शआदित्वान्मत्वर्थीयोच्प्रत्ययः। न विद्यन्ते साराः बलवन्तो ये ते असाराः अबलाः ते च ते अरयश्चासारारयः सुराणां सेन्द्रियान्तःकरणानां असारारयः रागादयः तेषां सारं बलं रात्यादत्त इति तथोक्तस्तत्संबुद्धौ। त्वं स्वभक्तानामिन्द्रियादिदुर्वृत्तिबलहारकोऽसीति भावः। न केवलमियदेव किं तु अज्ञानां संशयभावनादिनाशको बोधकः पण्डितोऽसीत्याह। हे सूरिसूरे हे पण्डितपण्डित। तथा चा सुराणां दम्भदर्पादीनां आरिः घातकः तत्संबुद्धौ असुरारे। तथा च रैरसारे। राः धनं ऐहिकामुष्मिकंधनं तस्य रसो रागः तस्यारिर्घातकः तत्संबुद्धौ। त्वं सर्वथा मोक्षानर्थनिवारक इति भावः॥ अतएव 'रसो वै सः। रसं ह्येवयं लब्धाऽऽनन्दी भवति' इति श्रुत्युक्तेः। यः स रसस्त्वमेवासि। त्वं प्रत्यक्षं ब्रह्मासीति भावः॥ ननु पूर्वं सरसत्वेनोक्त एवाधुना

रसत्वेनोक्तमिति पूर्वापरविरोध इति चेन्न। उपाधिविवक्षया सरसत्वं उपाध्यपगमे रसाभिन्नत्वमेव। 'आनन्दो ब्रह्म'इति श्रुतेः 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र तु राहोः शिर इतिवदौपचारिकोऽभेदोऽवगन्तव्यः ॥ व्यक्षरी ॥ ६८ ॥

एवं संस्तुवतोऽस्य कुष्ठमभवन्नष्टं विशिष्टेष्टसंतुष्टया तं च सदारमात्मनिकटे तुष्टे ररक्षेष्टकृत् ॥ तस्याभूत्प्रथिता क्षितौ सुकविता कश्चित्समाकर्ण्य तां मेने नृस्तुतिमण्डिताऽपि कविता गर्ह्याप्युदारेत्यवित् ॥ ६९ ॥

एवं सम्यक् स्तुवतः अस्य विप्रस्य कुष्टं विशिष्टेष्टस्य भगवतः संतुष्ट्या संतोषेण नष्टमभूत्। इष्टकृद्भगवान् तुष्टेस्तोषात् सदारं तं आत्मनिकटे ररक्षाऽरक्षत्। क्षितौ तस्य सुकविता प्रथिताभूत्। कश्चिन्नरकेसर्याख्य-कविः तां कवितां समाकर्ण्य श्रुत्वा उदारा कवितापि नृस्तुतिमण्डिताऽत-एव गर्ह्येति मेने। यतः अवित् भगवत्तत्त्वानभिज्ञः ॥ शार्दूलविक्री-डितम् ॥ ६९ ॥

स नित्यवन्मानसपूजने नवस्वसत्कवित्वं गिरिशेऽर्पयन्निव ॥ ददर्श लिङ्गे यतिनं नृकेसरी ततः स तच्छिष्यपदं गतो व्यरिः ॥ ७० ॥

स नृकेसरी नित्यवत् गिरिशे कल्येश्वराय मानसपूजने नवं च तत्स्व-कृतसत्कवित्वं च तत् अर्पयन्निव लिङ्गे उपविष्टं यतिनं भगवन्तं ददर्श। ततः दर्शनानन्तरं व्यरिः विगता अभिमानाद्यरयो यस्य स नृकेसरी तस्य भगवतः शिष्यपदं गतः ॥ वंशस्थम् ॥ ७० ॥

एवं विचित्रचरितो विचित्रगुणमण्डितः ॥
ततान भगवान्भव्यं नव्यं सेव्यं यशो भुवि ॥ ७१ ॥

एवं विचित्राणि यस्य चरित्राणि सः विचित्रगुणैर्मण्डितः भूषितः

भगवान् भव्यं क्षेमकरम् नव्यं अपूर्वं सेव्यं भजनीयं यशः भुवि ततान विस्तारयामास ॥ अनुष्टुप् ॥७१॥

सप्तर्षय इव सप्त प्रियभक्ता आप्तभक्तयः प्राप्ताः ॥
आप्तं नेतुं स्वगृहान्दीपावल्युत्सवे तमनुरक्ताः ॥ ७२ ॥

सप्तर्षय इव आप्तभक्तयः भगवति लब्धभक्तयः सप्तसंख्याकाः प्रियभक्ताः तं भगवन्तं अनुरक्ताः सन्तः दीपावल्युत्सवे स्वगृहान्प्रति आप्तं भगवन्तं नेतुं प्राप्ताः ॥ आर्या ॥ ७२ ॥

मद्गृहं चर मद्गृहं चर मद्गृहं चर मद्गृहं मद्गृहं चर मद्गृहं चर मद्गृहं त्विति तदग्रहम् ॥ सोऽवधार्य च तान्निवार्य विचार्य कार्यमथार्यवानष्टमूर्तिरुताष्टभक्तहृदिष्टकृत्परिपृष्टवान् ॥७३॥

मद्गृहं चर गच्छेति तद्ग्रहं तेषां सप्तानां आग्रहं अवधार्य श्रुत्वा अथ कलहं कुर्वतः तान्निवार्य भक्तमनोरथपूरणलक्षणं कार्यं विचार्य आर्याः साधवोऽनुग्राह्यत्वेन विद्यन्ते यस्य स आर्यवान् अष्टभक्तानां हृदां अन्तःकरणानां इष्टं करोतीति तथाभूतः सः भगवान् अष्टौ मूर्तयो देहा यस्य सोऽष्टमूर्तिः सन् परिपृष्टवान् पप्रच्छ ॥ धृतिः ॥७३॥

सप्त यूयं त्वहं केवलस्त्वेकलः सप्तगेहेषु चैकक्षणेऽतोऽनलः ॥ एष चैकत्र चैकैकगेहं हि वाऽऽनीयतामन्यथा स्याद्व्यथा सा वृथा ॥ ७४ ॥

यूयं तु सप्त अहं तु केवल एकलः अतो हेतोः सप्तगेहेषु एकक्षणे एककाले एकोत्सवे वा अलं न भवतीत्यनलः अपर्याप्तः अतः एष सप्तभिर्मिलित्वा एकत्र स्थाने नीयतां । वाऽथवाऽनुक्रमेणैकैकगेहं हि भवद्भिर्नीयतां । अन्यथा मे व्यथा पीडा स्यात् सा वृथैव (भुजंगप्रयातम्)॥७४॥

अथापि तेषां निरवद्यमाग्रहं महर्विदित्वा रह आह चैककम् ॥ न वाच्यमन्यत्र चरैष्य आलयं तवेत्यगुस्तेऽपि विभुस्तदालयान् ॥ ७५ ॥

अथापि तेषां निरवद्यं वक्तुं योग्यो वद्यः न वद्यो अवद्यः अवद्यो निन्द्यो न भवतीत्यनवद्यः तं आग्रहं निर्बन्धं महः ज्योतिः तत्स्वरूपो भगवान् विदित्वा एकैकं रह आहूय आह। त्वयाऽन्यत्र न वाच्यं त्वं चर स्वालयं गच्छतवालयं एष्ये इति एकैकमाह। तच्छ्रुत्वा ते अगुः जग्मुः। विभुर्भगवानपि तदालयान् जगाम ॥ वंशस्थम् ॥७५॥

**सप्तात्माऽसौ सप्तगेहानि गत्वा स्थित्वाऽप्यस्मिन्नेवमेकोऽपि भूत्वा॥ अष्टात्मैवं ते विदुः प्राप्तकामाः कार्तिक्यां तं तुष्टुवुर्नष्टकामाः ॥ ७६ ॥**

सप्तात्मा सप्तरूपधरः असौ भगवान् अस्मिन् गन्धर्वनगरे स्थित्वाऽपि सप्तगेहानि गत्वा एवमेकोऽपि अष्टात्मा भूत्वा भिक्षां जग्राहेति शेष. प्राप्तकामास्ते भक्ताः एवंभूतं तं भगवन्तं कार्तिक्यां पूर्णिमायां मिलिताः सन्तः ते विदुः। ततस्ते नष्टकामाः सन्तः तं भगवन्तं तुष्टुवुः॥ शालिनी ॥ ७६ ॥

**श्रवणाध्ययनार्थप्रतिषेधात् कुर्वन् गुरोस्तु परिचर्याम् ॥**
**वर्यां मर्यादातो वृषलो वृषलोभ्यगाद्गतिं वर्याम् ॥ ७७ ॥**

'श्रवणाध्ययानार्थप्रतिषेधात्स्मृतेश्च' इत्यधिकरणन्यायात् शूद्राणां वेदस्य श्रवणादिनिषेधात् मर्यादातो मर्यादया वर्यां वरेण्यां गुरोर्भगवतः नमस्कारादिरूपां परिचर्यां सेवां कुर्वन् वृषलोभी धर्मलोभी वृषलः कश्चिच्छूद्रः वर्यां मुख्यां गतिं अगात्॥ आर्या ॥ ७७ ॥

**कण्टकाश्माद्यपाकृत्य प्रत्यहं संगमायनम् ॥**
**व्यधाद्विशदमाधात्किं स्वात्मनोः संगमायनम् ॥ ७८ ॥**

कण्टकाश्मादि प्रतिबन्धकं अपाकृत्य दूरीकृत्य प्रत्यहं संगमगमनमार्गं विशदं व्यधात् व्यकरोत्। न केवलं संगमायनं विशदं व्यधात् किं तु स्वात्मनोः प्रत्यक्परात्मनोः संगमरूपं अखण्डैकरसरूपं अयनं पद्धतिं आधात् ॥ अनुष्टुप् ॥ ७८ ॥

**तं चैकदा प्राह गुरुः किमिच्छसि प्रोचे स चेति त्वमनेन गच्छसि ॥ सोऽध्वा सुसेव्यो भवदीक्षयाऽभवत्क्षेत्रे फलर्द्धिस्तु तदीक्षको भव ॥ ७९ ॥**

एकदा गुरुः तं च तमेव शूद्रं प्राह । रे शूद्र, त्वं किमिच्छसीति । एवं पृष्टः स च शूद्र इत्येवं वक्ष्यमाणं प्राह । हे भगवन्, त्वं अनेनाध्वना गच्छसि सोऽध्वा मार्गः भवत्सुखार्थं सुतरां सेव्य इतीच्छामि । भवदीक्षया भवद्दृष्ट्या क्षेत्रे फलर्द्धिः धान्यसमृद्धिरभवत् । त्वं तस्याः धान्यर्द्धेः ईक्षको द्रष्टा भव । एकदा क्षेत्रं विलोकयेत्यर्थः ॥ इन्द्रवज्रा ॥ ७९ ॥

**तथेति दृष्ट्वा तदजोऽप्यपक्वमुपादिशच्छेत्तुमथाप्यपक्वम् ॥ पत्याऽऽच्छिन्नद्वारित एव पत्न्या चूर्णोपमानीकृतपादधूल्या ॥ ८० ॥**

तथेत्युक्त्वाऽजः भगवान् अपक्वमपि तत्क्षेत्रं दृष्ट्वा छेत्तुं उपादिशदुपदिदेश । अथानन्तरमेष शूद्रः पत्या क्षेत्रप्रभुणा वारितः चूर्णोपमानीकृता पादधूलिर्यस्यास्तया पत्न्या निवारितः । एतेन स्त्रियो धावनं शूद्रस्यानुगमनं च ध्वन्यते । अपक्वमपि क्षेत्रं क्षेत्रगतसस्यं आच्छिनत् ॥ उपजातिः ॥ ८० ॥

**आगच्छन् गुरुरप्यवेक्ष्य तु दितं तं प्राह किं ते कृतं नोक्तं सत्यतया मया स च वचः प्रोचे न चेदं मया ॥ मौढ्येनापि कृतं त्वया यदुदितं मेऽभीप्सितं तन्मतं श्रुत्वा तद्वदितं तथेत्यपि गुरुर्यातो मठं स्वर्चितम् ॥ ८१ ॥**

गुरुरपि तु संगमादागच्छन् दितं कृत्तं क्षेत्रं अवेक्ष्य तं शूद्रं प्राह । रे शूद्र, ते त्वया किं कृतम् छिन्धीति मया सत्यतया नोक्तम् । तच्छ्रुत्वा स च शूद्रः वचः प्रोचे । मया मौढ्येनेदं न च कृतम् । अपिशब्दान्नापि प्रमादादिना कृतम् । यत्त्वया उदितं तन्मेऽभीप्सितं

मतं मान्यं च । एवं तद्वदितं श्रुत्वा गुरुर्भगवान् तथास्त्वित्युक्त्वापि शिष्यैः स्वर्चितं मठं प्रति यातः ॥ शार्दूलविक्रीडितम् ॥ ८१ ॥

**मूलं यातेंऽशुमालौ जलमुगलमपो मुक्तवान् तेन तत्र क्षेत्रे छिन्नेऽप्यनेके वरगुरुकृपया त्वङ्कुराः प्रादुरासन्॥ शूद्री दृष्ट्वाऽनुतप्ता तमु शरणमिता सोऽमुयाऽभ्यर्च्य देवं धान्यं लेभेऽमितं द्राग्गुरुपदमपि यद्गोत्रमद्यापि धन्यम् ॥ ८२ ॥**

अंशुमालौ सूर्ये मूलं नक्षत्रं याते सति जलमुक् मेघः अपः जलान्यलं मुक्तवान् । तेन कारणेन छिन्नेऽपि क्षेत्रे वरगुरुकृपया तु अनेकेंऽकुराः प्रादुरासन् । तां दृष्ट्वा सा शूद्री शूद्रभार्या अनुतप्ता सती तमु तमेव पतिं शरणं इता गता । स शूद्रः अमुया भार्यया सहागत्य देवं भगवन्तं अभ्यर्च्य संपूज्य अमितं अपरिमितं धान्यं लेभे । पुनश्च द्राक् शीघ्रमेव गुरुपदं मोक्षमपि लेभे । अद्यापि गुरुप्रसादाद्यद्गोत्रं कुलं धन्यं अस्ति ॥ स्रग्धरा ॥ ८२ ॥

**काश्यादिक्षेत्रमुल्लंघ्य तस्थावत्राजितः कुतः ॥**
**इति पृष्टः स तेनाऽसौ क्षेत्रमाहात्म्यमादिशत् ॥ ८३ ॥**

अजितो भगवान् काश्यादिक्षेत्रं उल्लंघ्य अत्र गन्धर्वपुरे कुतः स्थित इति तेन नामधारकेण पृष्टः सोऽसौ सिद्धः क्षेत्रमाहात्म्यं आदिशत् आदिदेश कथयामास ॥ अनुष्टुप् ॥ ८३ ॥

**जालन्धरासुरहतामृतजीवनार्थं शर्वार्पितामृतघटश्च्युत इन्द्रहस्तात् ॥ जाता ततोऽप्यमरजेति जगत्प्रतीता कालान्तभीतिदुरितान्तकरी परीता ॥ ८४ ॥**

जालन्धरासुरेण हता मृतं मृतिः नपुंसके भावे क्तः । न विद्यते मृतं येषां तेऽमृता देवास्तेषां जीवनार्थं शर्वेण शंकरेणार्पितोऽमृतघटः इन्द्रहस्तात् च्युतः ततोऽपि कालान्तभीतिः कालमृत्युभीतिश्च दुरितान्तश्च

करोतीति तथा परीता परितः गता जगत्प्रतीता लोकप्रसिद्धा अमरजेति नदी जाता ॥ वसन्ततिलका ॥ ८४ ॥

**गङ्गयाऽर्कतनया यथा तथा भीमयाऽप्यमरजाऽत्र संगता ॥**
**अष्टतीर्थयुतसंगमोऽघहृत्स्यात्प्रयाग इव सर्वकर्महृत् ॥ ८५ ॥**

यथा गङ्गयाऽर्कतनया यमुना संगता तथा भीमयाऽमरजाप्यत्र संगता। अयं अष्टतीर्थयुतसंगमः अघहृत् पापहारी सर्वकर्महृच्च प्रयाग इव स्यात् ॥ रथोद्धता ॥ ८५ ॥

**इच्छासंतोषतीर्थे अभिमतफलदे विश्वनाथोऽयमग्रे जीवन्मुक्तोऽत्र शैवो जड इव विचरन् दर्शयामास काशीम्॥ कल्पद्रवश्वत्थमूले कलुषहृदिह सा नष्टकुष्ठा स्वसाऽभूद्रत्नाख्या कोटितीर्थं हरपदिह गया द्वार्वती चक्रतीर्थम् ॥ ८६ ॥**

ततः परं इच्छातीर्थं ततः परं संतोषतीर्थं च ते द्वे अभिमतफलदे स्तः। ततोऽग्रेऽयं विश्वनाथः तस्य कथेयं स्मर्यते। अत्र जीवन्मुक्तः कश्चिच्छैवः जड इव विचरन् कल्पद्रोरश्वत्थस्य मूले बन्धुभ्यः काशीं दर्शयामास। ततोऽग्रतः कलुषहृत्पापविनाशतीर्थं। इह तीर्थे या पूर्वोक्ता रत्ना नाम स्वसा सा नष्टकुष्टाऽभूत्। ततोऽग्रतः कोटितीर्थं ततोऽग्रतः हरपत् रुद्रपादतीर्थं। इह तीर्थे गया ज्ञेया। ततोऽग्रतः चक्रतीर्थं सा द्वारिका। एवं अष्टतीर्थानि ज्ञेयानि ॥ स्रग्धरा ॥ ८६ ॥

**एवमादीनि तीर्थानि पावनानि प्रकाशयन् ॥**
**तस्थाविहैव भगवान्म्लेच्छमुद्धृत्य योगवान् ॥ ८७ ॥**

स्फुटार्थः श्लोकः ॥ अनुष्टुप् ॥ ८७ ॥

**भगवन् हीनसंभूतः को म्लेच्छः कथमुद्धृतः ॥**
**एवं द्विजेन संपृष्टस्तुष्टः स उपदिष्टवान् ॥ ८८ ॥**

द्विजेन नामधारकेण पृष्टः स सिद्धः। शेषं सुगमम् ॥अनुष्टुप्॥८८॥

कृष्णातीरे कुरुपुरे सेवको रजकोऽभवत् ॥
श्रीपदो विपदो हर्तुर्वरं तस्मै स दत्तवान् ॥ ८९ ॥

कृष्णातीरे कुरुपुरे विपद आपत्तेर्हर्तुः श्रीपदः श्रीपादश्रीवल्लभस्य रजकः सेवकः अभवत् ॥ स श्रीपादः तस्मै रजकाय सेवकाय राज्यप्राप्तिरूपं वरं दत्तवान् ॥ ८९ ॥

भवान्तरे म्लेच्छकुलेऽभवत्स क्षमापतिः सन्मतिरात्तनीतिः ॥
प्राक्संस्कृतिप्राप्तसुरद्विजातिभक्तिर्निजज्ञातिसुशिक्षितोऽपि ९०

भवान्तरे जन्मान्तरे म्लेच्छकुले सन्मतिः प्रशस्तबुद्धिः निजज्ञातिभिः सुतरां स्वधर्मे शिक्षितोऽपि पूर्वसंस्कारेण प्राप्ता सुरद्विजातिभक्तिर्यस्य ईदृशः स म्लेच्छः क्षमापती राजाऽभवत् ॥ उपजातिः ॥ ९० ॥

वक्त्राद्यैर्देहसाम्येऽपि कथमवयवैर्वर्णभेदो विभेदो देवत्वं मृच्छिलादौ कथमिति स पतिर्ज्ञातिपृष्टः स्म वक्ति ॥ धीमान्द्यं वोऽदयेते गुणचरणभिदा देवसृष्टास्त्वनादिर्वेदः सत्यः स्मृतिश्च प्रभुरिह भजतामस्ति सर्वत्र पूर्णः ॥ ९१ ॥

वक्त्राद्यैः अवयवैः सर्वेषां देहसाम्येऽपि विविधाः भेदाः यस्येदृशः वर्णभेदः ब्राह्मणादिजातिभेदः कथमित्येकः प्रश्नः । मृच्छिलादौ जड-पदार्थे कथं देवत्वमिति द्वितीयः प्रश्नः । इति ज्ञातिपृष्टः स पतिः प्रभुः वक्ति स्म । ' लट् स्मे ' इति भूतार्थे लट् । भो ज्ञातयः, अदः इदं वो युष्माकं धीमान्द्यं बुद्धिमान्द्यमेव । यतः एते ब्राह्मणादयः चत्वारो वर्णाः गुणचरणभिदा गुणकर्मविभागशः देवेनेश्वरेण सृष्टाः । ' चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ' इति स्मृतेः । तत्प्रतिपादको वेदस्तु अनादिर-पौरुषेयः अतः सत्यः स्वतःप्रमाणभूतोऽप्रामाण्यशङ्काकालुष्यरहितः । स्मृतिश्च तथा सत्या वेदानुसारित्वादित्याद्यप्रश्नोत्तरं । अपरप्रश्नोत्तरं तु इह भजतां सर्वत्र मृच्छिलादौ पूर्णः प्रभुरस्ति ॥ स्रग्धरा ॥ ९१ ॥

श्रुतिस्मृती निश्चित ईश्वराज्ञे राज्ञेह नीतिर्विहिता यथाऽज्ञा ॥
भवेदलंघ्याऽपि तथैव लोके लोकेश्वराज्ञे निहिते किलाऽज्ञे ९२

'श्रुतिस्मृती ममैवाज्ञे इत्यपीश्वरभाषितम्' इत्युक्तवात्। श्रुतिस्मृती ईशाज्ञे निश्चिते। यथा इह लोके राज्ञा या नीतिर्विहिता सा तद्राष्ट्रवर्तिजनानां अलंघ्या भवेत् तथैवापि अज्ञे तत्त्वज्ञानविकले विषये लोके श्रुतिस्मृतिरूपे लोकेश्वरस्य आज्ञे निहिते स्थापिते अलंघ्ये एव। किलेति संभावनायाम् ॥ उपजातिः ॥ ९२ ॥

तस्मादस्मानसूयामुखमकदमदः संविहायाऽऽश्रयंतु भक्त्ये-
त्यूचे स चेशः स्वयमभजदिमान्भूसुरांस्तत्सुरांश्च ॥ तस्याप्येवं
सतोऽभूदनिशमसुखदः स्फोटकाऽङ्के स तेन क्लिष्टोऽनिष्टेन
शिष्टक्षितिसुरमवरः पृच्छति स्मास्य शान्तिम् ॥ ९३ ॥

यस्मादेवं तस्मात् अकदं दुःखदं अदः असूयामुखं असूयादिकं संविहाय भवन्तोऽस्मान् ब्राह्मणादीन् भक्त्या आश्रयन्तु इति स चेशः राजा ऊचे। स्वयमपि भूसुरान् ब्राह्मणान् तत्सुरान् तेषां सुरान् हरिहरादिदेवान् अभजत्। एवं सतो वर्तमानस्य तस्याङ्केऽनिशं असुखदः दुःखदः स्फोटकः अभूत्। तेन विस्फोटकेन अनिष्टदेन क्लिष्टः अवरः नीचः 'न नीचो यवनात्परः' इति स्मरणात्। स राजा शिष्टक्षितिसुरं शिष्टब्राह्मणं तस्य स्फोटकस्य शान्तिं उपशमं पृच्छति स्म। 'दुह्याच्पच्दण्ड्रुधिप्रच्छि 'इत्यादिनाकथितत्वाद्द्विकर्मकत्वम् ॥ स्रग्धरा ॥ ९३ ॥

जनापवादात्स च विप्रवर्यो भीतोऽघहन्नामकतीर्थदेशे ॥
तस्मै रहः प्राह दशार्णराजस्त्रीपुत्रकष्टं त्वृषभप्रसादम् ॥ ९४ ॥

स च पृष्टः विप्रवर्यः जनापवादाद्भीतः सन् अघहन्नामकतीर्थदेशे पापविनाशतीर्थप्रदेशे रह एकान्ते तस्मै राज्ञे मात्सर्येण सपत्नीदत्तसर्पगरलतः संजातं दशार्णराजस्त्रीपुत्रकष्टं मृतपुत्रस्य पुनर्जीवनरूपं ऋषभप्रसादं च प्राह ॥ उपजातिः ॥ ९४ ॥

**मृतस्यापि भद्रायुषो जीवनं तत्समाकर्ण्य स प्राह नाहं हि वेद्मि ॥ कुहेदृङ् महासाधुरास्ते नमस्ते समस्तेष्टकृच्छंस मे दीनबन्धो ॥ ९५ ॥**

तन्मृतस्यापि भद्रायुषः पुनर्जीवनं श्रुत्वा स राजा प्राह । ईदृक् महासाधुः कुह कुत्राऽऽस्ते तन्नाहं वेद्मि । भो ब्रह्मन्, ते तुभ्यं नमोऽस्तु । भो समस्तेष्टकृत् भो दीनबन्धो ब्रह्मन्, तं मे शंस कथय ॥ भुजङ्गप्रयातम् ॥ ९५ ॥

**स प्राह गन्धर्वपुरेऽस्ति साधुर्म्लेच्छोऽभिपूज्यापि च तं स साधु ॥ क्षेत्रं ययौ षड्बलयुक् तरस्वी ददर्श देवं स गुरुं मनस्वी ॥ ९६ ॥**

स साधुः विप्रः तं प्राह । गन्धर्वपुरे साधुरस्ति । तच्छ्रुत्वा चापि स म्लेच्छो राजा तं विप्रं साधु सम्यग्यथा तथाऽभिपूज्य षड्बलयुक्तः तरस्वी त्वरितगतिः सन् क्षेत्रं गन्धर्वपुरं ययौ । मनस्वी प्रशस्तमनाः स राजा देवं गुरुं भगवन्तं तत्र ददर्श ॥ उपजातिः ॥ ९६ ॥

**दृष्ट्वा तं गुरुराह रे रजक किं हृष्टोऽसि मां नागतः कस्मादित्यवधार्य हृष्टहृदयस्तं प्राह लब्धस्मृतिः ॥ स्वामिन्मां रजकं स्वसेवकमकप्राये भवाब्धौ प्रभो कस्मात्पातयसि प्रियं कमनयं प्रागाचरं वेद्मि नो ॥ ९७ ॥**

तं म्लेच्छराजं दृष्ट्वा गुरुर्भगवानाह । पूर्वजन्म स्मारयन् संबोधयति- रे रजक, त्वं हृष्टोऽसि किं त्वं एतावन्तं कालं कस्मान्मां नागतोऽसि तद् ब्रूहि इति अवधार्य भगवद्वाक्यं श्रुत्वा हृष्टहृदयः राजा लब्धस्मृतिः सन् तं भगवन्तं प्राह । भो स्वामिन्, प्रियं दयितं स्वसेवकं रजकं मां अकप्राये दुःखप्राये भवाब्धौ कस्मात्पातयसि, कृतान्यायत्वादिति चेत् प्राक् पूर्वं कमनयं अन्यायं आचरं तं नो वेद्मि ॥ शार्दूलविक्रीडितम् ९७

सती पतिवियोगेन प्राणेश्वर यथा तथा ॥
भगवन् त्वद्वियोगेन सदा दुःखातुरोऽभवम् ॥ ९८ ॥

हे प्राणेश्वर भगवन्, सती पतिव्रता नारी पतिवियोगेन प्रोषितपति-विरहेण यथा तथा त्वद्वियोगेन सदा दुःखातुरोऽभवम् ॥अनुष्टुप् ॥९८॥

दिष्ट्या स्फोटकदुर्निमित्तत इदं जातं भवद्दर्शनं श्रीशः प्राह कुहास्ति दर्शय स तं सन्तं निजाङ्के स्थितम् ॥ नापश्यत्स सुविस्मितोऽथ बहुशस्तं प्रार्थ्य निन्येऽर्थितः पूर्वं पापविना-शतीर्थमगमत्प्राङ् नागनाथार्चितः ॥ ९९ ॥

स्फोटकरूपदुर्निमित्तात् इदं भवद्दर्शनं जातं एतद्दिष्ट्या शोभनं जातम् । श्रीशो भगवान् प्राह--स्फोटकः कुह कुत्रास्ति तं मे दर्शय । स राजा निजाङ्के स्थितं सन्तं विद्यमानमपि तं स्फोटकं नापश्यत् । अथ सुतरां विस्मितः स राजा तं भगवन्तं बहुशः प्रार्थ्य निन्ये । स्वराष्ट्रमिति शेषः । अर्थितः तेन प्रार्थितो भगवानग्रतो गत्वा प्राक् पूर्वं नागनाथेन सायंदेवपुत्रेणार्चितः पूजितो भोजितश्च राजगमनात् पूर्वं पापविनाशतीर्थं अगमत् ॥ शार्दूलविक्रीडितम् ॥ ९९ ॥

राजा स्वैर्निन्दितोऽपि प्रभुमपि पदगः पालकस्थं द्विजेड्यं नीत्वा वाद्यादिघोषैः पुरमतिमुदितोऽन्तःपुरे भद्रपीठे॥ स्वास्तीर्णे चोपवेश्य स्वविभवमखिलं दर्शयामास तस्मै दत्त्वाऽजो भक्ति-माप्तः स्वमठमिति जगौ पृच्छते सिद्ध एतत् ॥ १०० ॥

राजा स्वैर्ज्ञातिभिः निन्दितोऽपि पदगः स्वयं पादचार्यपि सन् पाल-कस्थं शिबिकोपविष्टं द्विजैः ईड्यं स्तुत्यं प्रभुं भगवन्तं वाद्यादिघोषैः पुरं नीत्वा स्वयं अतिमुदितः अन्तःपुरे स्वास्तीर्णे भद्रपीठे सिंहासने च भगवन्तं उपवेश्य तस्मै भगवतेऽखिलं विभवं दर्शयामास । अजः भग-वान् तस्मै राज्ञे भक्तिं दत्त्वा स्वमठं आप्तः प्राप्तः । इत्येतत् पृच्छते नाम-धारकाय सिद्धः जगौ ॥ स्रग्धरा ॥ १०० ॥

सदानन्दति विद्वत्त्वात्सर्वदाऽति विभुत्वतः ॥
मृत्युंजयति योगित्वाद्यः स मे हृदि तिष्ठतु ॥ १०१ ॥

यो भगवान् विद्वत्त्वात् सदानन्दो ब्रह्मदेव इवाचरतीति सदानन्दति सर्वदा विभुत्वाद्व्यापकत्वात्। अः वासुदेव इवाचरतीति अति। योगित्वात् मृत्युंजयः शिव इव आचरतीति मृत्युंजयति स भगवान् मे हृदि तिष्ठतु ॥ अनुष्टुप् ॥ १०१ ॥

वन्देऽहं देवदेवं धृतिमतिगतिदं साङ्गयोगप्रगम्यं पारावाराभरागाद्यरिकरिहरिमाह्लादकं दत्तदक्षम् ॥ ज्ञेयज्ञं यज्वयज्ञं सुरवरपरदं पारदं रम्यरम्यं पातारं तारतारं खलबलदलनं श्रीवरं चक्रचक्रम् ॥ १०२ ॥

प्रकाशकत्वाद्देवानां सूर्यादीनां चक्षुरादीन्द्रियाणां च देवम्। 'श्रोत्रस्य श्रोत्रम्'इत्यादिश्रुतेः। धृतिर्धैर्यं मतिः बुद्धिः गतिः ज्ञानं च ददातीति तं साङ्गयोगोऽष्टाङ्गयोगस्तेन प्रगम्यम्। पारावारः समुद्रः तन्निभाः दुष्पारा अगाधाश्च ये रागाद्यरयस्त एव करयो हस्तिनस्तेषां हरिः सिंह इव घातकस्तं भक्तानामाह्लादकं। दत्तदक्षं दानदक्षं। ज्ञेयं स्वरूपं जानातीति तं यज्वनां विधिनेष्टवतां यज्ञं। सुरवराणां इन्द्रादीनां परं पदं ददातीति तं स्वभक्तानां संसारपारं ब्रह्म ददातीति तं। रम्येभ्योऽप्यतिरम्यं स्वसेवकानां पातारं यतीनां तारेण प्रणवेन तारयतीति तं खलानां दुर्जनानां बलं दलयतीति तं श्रीवरं लक्ष्मीपतिं मोक्षलक्ष्मीविलासं वा चक्राणां कुटिलानां चक्रं ईदृशं भगवन्तं अहं वन्दे ॥ हारबन्धः ॥ स्रग्धरा ॥ १०२ ॥

वनजतु स तु वनजतु स तु यदि वा सुरवरतु स तु नरवरतु स तु वा ॥ निजचरणशरणतरणचरणकृद्य उ महितमहिमयुगिह तमु नुमः ॥ १०३ ॥

वनजो जलजो मत्स्यः कूर्मश्च स इवाचरतु। वनजः अरण्यजः वराहो नृसिंहश्च स इवाचरतु। यदि वा स तु सुरवरतु सुरवरो वामनः। नरवरतु स तु नरवरो रामो दाशरथिः कृष्णो बुद्धः कल्की च वा भवतु। निजचरणशरणानां भक्तानां तरणोपायभूतं चरणं आचरणं करोतीति तथा। य उ यस्तु महितः पूज्यश्चासौ महिमा च तेन युज्यत इति महितमहिमयुक् इह लोके वर्तते तमु तमेव नुमः॥ १०३॥

द त्तं यो भ ज ते नि त्यं मुक्ति मे ति न सं श यः॥
त्रि त्तं यो भ ज ते ऽनि त्यं भु क्ति मे ति न सं श यः॥१०४॥

स्पष्टार्थः श्लोकः॥ गोमूत्रिकाबन्धः॥ १०४॥

॥ सर्वतोभद्रः॥

सा का र ता ता र का सा॥ का पि सा र र सा पि का॥
र सा य मे मे य सार॥ ता र मे य य मे र ता॥ १०५॥

॥ मुरजबंधः॥

अ व रं श्री व रं वं दे॥ श्री व रं श्री क रं व दे॥
दे व रं श्री ध रं सं तं॥ नृ व रं श्री प रं सतं॥ १०६॥

हे भगवन्, यतः निराकारोऽसि ततः तव प्रतिमा नास्ति। 'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः' इति श्रुतेः। तथापि सोपाधिकस्य तव भक्तेच्छोपात्तविग्रहत्वेन साकारत्वं श्रुत्यादौ प्रसिद्धम्। तथाच शाण्डिल्योपनिषदि 'अथास्य देवस्यात्मक्रीडस्य भक्तानुकम्पिनो दत्तात्रेयस्य सुरूपा तनूरवासा इन्दीवरदलप्रख्या चतुर्बाहुरघोराऽपापकाशिनी' इति। पुराणादौ द्विभुजा षड्भुजा चोक्ता। प्रभोरनेकावतारत्वेन तन्निर्वाहः। हे भगवन्, या तव साकारता सगुणत्वेन विग्रहवत्ता सा अस्माकं तारका अविद्याकर्मभ्योऽनर्थबीजेभ्यस्तारयतीति तारका कैवल्यदात्री। काऽपि वाङ्मनसयोरगोचराऽपि। यद्वा कापि षड्भुजचतुर्भुजद्विभुजरूपश्रीदत्तात्रेयश्रीपाद-नृसिंहसरस्वतीसंज्ञितसाकारतानां मध्ये काप्येकाप्यविशेषात्। सार-

भूतो यो रस आनन्दस्तदापिका तत्प्रापिका। मे ममैकनिष्ठस्य भक्तस्य रसाय परमानन्दप्राप्तयेऽस्तु। हे अमेय प्रत्यक्षादिप्रमाणैर्मातुं योग्यः मेयः तथा न भवतीत्यमेयः प्रमाणागोचरः तत्संबुद्धौ। तर्ह्यप्रामाण्यं प्राप्तमित्यतः संबोधयति। हे सारतारमेय 'ॐकारः सर्ववेदानां सारस्तत्त्वप्रकाशकः' इत्युक्तेः सारभूतो यस्तारः प्रणवः तेन मात्राख्यपादविभागशो मेयः शैब्यप्रश्नमाण्डूक्याद्युक्तप्रकारेण तत्संबुद्धौ। कथंभूता ते साकारता। यमे रता तत्परा। यम इत्यष्टाङ्गयोगोपलक्षणम्। परोपकारार्थं तव यमादौ रतत्वं नान्यथा विपर्यासमनोविकाराभावात्। 'विपर्यस्तो निदिध्यासे (तृ) किं ध्यानमविपर्यये' इत्यभियुक्तोक्तेः॥ सर्वतोभद्रः॥ १०५॥ १०६॥

दासपं गतिदं वन्देऽत्रिजं चारुहितं वृतम्॥
तं वृतं हि रुचाऽजं त्रिदेवं दन्तिगपं सदा॥ १०७॥

दासपं भक्तपालकं गतिदं मोक्षदं चारु मोक्षपर्यवसायित्वाच्छोभनं हितं यस्मात्तं भक्तैः प्रेम्णा वृतं रुचा प्रभया च वृतं भास्वन्तं त्रयाणां भूर्भुवः-स्वर्लोकानां सत्त्वरजस्तमसां वा गुणानां विश्वतैजसप्राज्ञानां वा देवं प्रकाशकं दन्तिभिर्हस्तिभिर्गच्छन्तीति दन्तिगाः राजानः हैहयार्जुनयद्वलर्कप्रभृतयस्तान् पातीति तथा। स्वतोऽजं जन्मादिविकारशून्यं तथापि भक्तवात्सल्यादत्रिजं अत्रिपुत्रं तं दत्तात्रेयं सदा वन्दे। वाक्शुद्ध्यर्थं च सदा मधुरवाण्या वदे॥ गतप्रत्यागतम्॥ १०७॥

वस्वश्विनागभूतुल्ये (१८२८) शालिवाहशके कृता॥
मार्गशीर्षे सिते पक्षे टीकैषाऽस्तु गुरोर्मुदे॥ १॥
कारनाटकदेशे तु श्रीगुल्हासुरसंज्ञके॥
ग्रामे मलापहातीरे टीकेयं पूर्णतां गता॥ २॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वासुदेवानन्दसरस्वतीविरचित-श्रीगुरुचरित्रकाव्यत्रिशती स्वकृतटीकासहिता संपूर्णा॥ ॐतत्सत् ब्रह्मार्पणमस्तु॥

श्रीवासुदेवानन्दसरस्वतीविरचिता

# श्रीदत्तचम्पूः

ग्रन्थकृट्टीकासहिता

श्रीगणेशदत्तगुरुभ्यो नमः

# श्रीदत्तचम्पूः

स्मृतोऽप्यवति यो विघ्नं निघ्नन्नम्बासुतः स्तुतः ॥
गन्धर्वस्थः स हि कलौ मलौघघ्नोऽस्तु मे हृदि ॥ १ ॥

श्रीगणेशदत्तगुरुभ्यो नमः ॥ यस्मिन्विश्वानि काव्यानि चक्रे नाभिरिवेत्यृचः ॥ षष्ठाष्टकेऽस्त्यतः सर्वं काव्यमीशैकदेशभाक् ॥ १ ॥ योऽस्याध्यक्षः स परमः स्वात्मानं वेद वा न वा ॥ इत्यष्टमाष्टकश्रुत्या नेशज्ञानं हि नः स्फुटम् ॥ २ ॥ अथापि सगुणस्यास्य गुणवर्णनपुण्यतः ॥ स्वशक्त्या गां पुनामीति प्रवृत्तिरियमेव मे ॥ ३ ॥ यच्छ्रीदत्तपुराणोक्तं श्रीदत्तस्य यशोऽपि तत् ॥ चम्प्वाख्यकाव्यान्तरेण संक्षेपात्कथितं स्फुटम् ॥ ४ ॥ दत्तभक्तप्रार्थनया तदर्थस्फुटबोधदाम् ॥ टीकां कुर्वेऽनया प्रीयाद्दत्तात्रेयस्तदीरकः ॥ ५ ॥ अथ पावनश्रीगुरुदत्तात्रेयगुणबोधकं काव्यं चिकीर्षुश्चिकीर्षितस्य निर्विघ्नपरिसमाप्तिप्रचयगमनार्थं शिष्टाचारगतं वस्तुनिर्देशात्मकं मङ्गलमनुष्टुभा निबध्नाति-- स्मृतोऽपि कार्यगतं विघ्नं निघ्नन् योऽवति। भक्तानिति शेषः। स्मृतोऽपि अविद्याकामकर्मभ्यो भक्तान्रक्षतीति चेदर्चनादिना रक्षतीति अप्यर्थस्य कैमुत्यर्थसिद्धिः। स गन्धर्वस्थः, गणेशपक्षेऽश्वस्थः, श्रीदत्तपक्षे गन्धर्वपुरस्थः। हीति प्रसिद्धं। देवैर्मनुष्यैश्च स्तुतः। कलौ मलौघघ्नः सर्वपापहरः। ईदृशः अम्बा एतन्नामिका ब्राह्मणी तस्याः सुतः नरसिंहसरस्वतीति प्रसिद्धो दत्तात्रेयः। अम्बा पार्वती तत्सुतः कलौ द्विभुजोऽश्ववाहश्च भविष्यति स मे हृदि अस्तु ॥ अत्र 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति वचनाध्दृत्स्थस्यापि मे हृदि तिष्ठत्विति पुनः प्रार्थनावरणनिरासेन सूक्ष्माग्र्यबुद्ध्यापरोक्षसाक्षात्कारार्थं। श्रुतिश्च 'एष सर्वेषु भूतेषु गुढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति ॥ १ ॥

**योगभ्रष्टः कश्चन ब्रह्मपुत्रः पित्रे प्रोचे यां चकारात्रिपुत्रः ॥ सल्लीलां तां वच्मि संक्षेपतश्चिच्छुद्ध्यै यायाद्ध्येतदन्तं न कश्चित् ॥ २ ॥**

अथ वक्तव्यं प्रतिजानीते शालिन्या-- मार्कण्डेयोक्तः कश्चन ब्राह्मणपुत्रः। अत्रिपुत्रः यां सल्लीलां चक्रे तां स्वपित्रे प्रोचे। तां लीलां। चिच्छुद्ध्यै, बुद्धिशुद्ध्यै, संक्षेपतो वच्मि। कुतः, हि यः एतदन्तं एतस्याः पारं कश्चित्कोऽपि न यायाद्यातुं न शक्यात्। शकि लिङ् चेति शक्यर्थे लिङ् ॥ २ ॥

**पुरा प्रतिष्ठानपुराग्र्य आसीद्द्विजो रुजार्तोऽक्षम एव गन्तुम्॥ दृष्ट्वा दिनस्त्रीं स जगौ निजस्त्रीं तद्धाम मां साध्वि नयाद्य रन्तुम् ॥ ३ ॥**

कोऽसौ अत्रिपुत्र इति वक्तुं तावत्तदुपोद्घातत्वेनानसूयामाहात्म्यमाह पञ्चदशभिः तत्राद्यमुपजातिवृत्तम्॥ पुरा कृतयुगे। प्रतिष्ठानाख्ये पुराग्र्ये। कौशिकाख्यो द्विज आसीत्। स रुजार्तः, रोगपीडितः पद्भ्यां गन्तुमपि अक्षमः, असमर्थः। कदाचित्सः मार्गतो गच्छन्तीं दिनस्त्रीं, वारवनितां वेश्यां दृष्ट्वा तद्रूपलावण्यसौन्दर्यप्रलोभेन निजस्त्रीं, स्वस्त्रियं। जगौ, जगाद। किं, हे साध्वि, प्रिये। तस्याः धाम गृहं। मामद्य नय। नयतेरकथितत्वाद्द्विकर्मकत्वं। किमर्थं, रन्तुम् ॥ ३ ॥

**इति पतिगदितं सती निशम्य स्मितवदना सदनान्निजान्निजाप्तम् ॥ निजभुजमुपरि[1] प्रगृह्य याता निशि तडितापथमावलोक्य शान्ता ॥ ४ ॥**

साप्यनुमुमोदेत्याह पुष्पिताग्रया–इति पत्या गदितं वाक्यं निशम्य, श्रुत्वा। मयि प्रसादो जात इति बुद्ध्या स्मितं हास्यं वदने यस्याः सा।

( १ भुजशिरसीति साधु स्कन्धे गृहीत्वेत्यर्थः।)

निजाप्तं पतिं । निजभुजमुपरि, स्वस्कन्धोपरि । उपर्यध्यधस इति द्वितीया । प्रगृह्य, निजात्सदनात् स्वगृहात् । याता, बहिर्गता । निशि, रात्रौ । निबिडध्वान्तेऽपि तडिता दर्शितं पथं । 'पंथा वाटपथ' इति त्रिकाण्डशेषादजंतत्वं । यद्वा वेश्यागृहगमनलक्षणं अपथं आवलोक्य तडिद्भासा किञ्चित्किञ्चिदवलोक्यावलोक्यैव । शान्ता सती, अकार्यं कर्तुं मां पतिर्योजयतीति बुद्ध्या न क्रुद्धा किन्तु शान्ता याता ॥ ४ ॥

**कान्ताकान्ताय सा कान्ता प्रयाताकान्तरे स्थिता ॥**
**कान्तारेऽवीक्ष्य माण्डव्यं शूलोतं तं व्यताडयत् ॥ ५ ॥**

एवं गच्छन्त्याः दैवात्पथि सङ्कटं प्राप्तमाहानुष्टुभा -- स्वयं कान्तापि, कान्तस्य, पत्युः, अकान्ताय, कामरूपदुःखनाशाय, दुःखनाशं कर्तुमित्यर्थः । तुमर्थाच्चेति चतुर्थी । प्रयाता, प्रस्थिता । अकान्तरे, अन्धतमसगमनलक्षणदुःखान्तरे, दुःखमध्ये, स्थिता सा सतीनामिका ब्राह्मणी कौशिकपत्नी 'कौशिकस्य यथा सती' इति श्रुतेः । कान्तारे, दुर्गपथे स्थितं । राज्ञा चोरभ्रान्त्या शूलोतं, शूले प्रोतं । निरपराधं माण्डव्यं ऋषिं अवीक्ष्य, अदृष्ट्वा गमनवेगेनाताडयत् स्वदेहस्य शूलस्तम्भाघात एव ताडनं न तु साक्षात्तद्देहताडनं । शूलस्तम्भचालनेन राजभृत्यैः प्रमादेनाप्रवेशितः शूलस्तत्ताडनतो गुदप्रवेशद्वारा मुनेरन्तर्गत इति पुराणप्रसिद्धम् ॥ ५ ॥

( गद्यम् )

**ततः क्रुद्धेन मुनिना मुनिनाथेनापीनालोकनादेतत्पतिना कीनाशभवनातिथिना भाव्यमित्यभिहितमाकर्ण्योद्गतिं मैहीति धुनाथं शत्प्राभीष्टं सम्पाद्य स्वसदनं सागमत् ॥ ६ ॥**

ततः मुनिनाथेन, मुनिश्रेष्ठेनापि क्रुद्धेन माण्डव्यमुनिना इनालोकनात्, सूर्यदर्शनात् । एतत्पतिनास्या भर्त्रा । कीनाशलोको यमलोकस्तदतिथिना भाव्यं । एतत्पतिर्यमलोकातिथिर्भवतु मरणं यात्वित्यर्थः । इति अभिहितं

मुनिनोक्तं, आकर्ण्य, श्रुत्वा । हे सूर्या३ उद्गतिं उदयं मैहि मागच्छेति ज्ञुनाथं शप्त्वा । पत्युरभीष्टं संपाद्य सा स्वसदनं अगमत् ॥ ६ ॥

ततः किं जातमित्यत आह शालिन्या—

**शापाद्भीतो नोदितोऽर्कः सशोकः सर्वो लुप्ताचार आसात्र लोकः ॥ ध्वान्ते गाढेऽप्येवमेवास नाकः शोकाविष्टो यज्ञभोक्ताप्यनाकः ॥ ७ ॥**

साध्व्याः शापाद्भीतोऽर्कः नोदितः । 'भीषोदेति सूर्य' इति ब्रह्मभयादेवोदयादिनियतप्रवृत्तिः कथं साध्वीभयान्नोदित इति चेत् 'एष सेतुर्विधरण' इति श्रुत्या धर्मस्य ब्रह्माभिन्नत्वप्रतिपादनात् धर्मस्येश्वररूपत्वं स्फुटमुक्तं । स धर्मः स्वाधिकारेण सत्या सेवितोऽतः पतिव्रताधर्मवत्याः सत्याः सूर्यो भीतो, राजाधिकृतादिव प्रजा एतत्स्थाने । तदा सूर्यगत्यभावात् गाढे ध्वान्ते । लुप्त आचारो नित्यादिलक्षणो यस्य स शोकेन सहितः लोकः भुवनं आस । एवमन्यत्राप्यतिदिशति एवमेव यज्ञभोक्तापि नाकः नाकलोकवासिजन इति ग्राह्यं मञ्चाः क्रोशन्तीतिवत्। न विद्यते अकं यस्य सः नाकः, दुःखरहितः । तथा न भवतीत्यनाकः, यज्ञरूपभोजनाभावाद् दुःखी आस ॥७॥

**अथ धातृगिरामरावरा अगमन्नत्रिसतीं सतीवराम् ॥ अभिवाद्य सतीगृहं सुरा लघु निन्युः सदराः कृतादराम् ॥ ८ ॥**

ततो देवाः सतीशापं विज्ञाय दुष्परिहारस्य तस्योपशमाय ब्रह्माणं शरणं गत्वा तं न्यवेदयन् । ततो ब्रह्मणानसूयां शरणं यातेत्युक्तास्ते तां शरणं ययुरिति योगिन्याह-अथ दुःखप्राप्त्यनन्तरं अमरावराः न म्रियत इत्यमरो ब्रह्मा ततो अर्वाचीना इन्द्रादयः । वरे ह्यगमन्निति वा पाठः । सतीवरां पतिव्रताग्रगण्यां । अत्रिसतीमनसूयां । अगमन् । तां अभिवाद्य, प्रार्थ्य च सदराः, भययुक्ताः । सुराः कृतादरामनसूयां सती कौशिकपत्नी, तद्गृहं निन्युः ॥ ८ ॥

प्राब्रवीद्द्विजपतीमनसूया भारतीमथ सतीमनसूया ॥ साधु साध्वि वृष एष धृतस्ते लोक एष हि वशे विहितस्ते ॥ ९ ॥

स्वागतार्थं स्वागतावृत्तम्—गुणेष्वपि दोषाविष्करणमसूया। उपलक्षणमिदं स्पर्धादेः। साऽविद्यमाना यस्याः सानसूयाऽभिधानतोऽपि। अनसूयेति पौराणिकाः। अनुसूयेति वैदिका वदन्ति। श्रुतिश्च 'अत्रेर्यथानुसूया स्यात्'इति। साथ द्विजस्य, कौशिकस्य,सतीं। सतीं, कल्याणीं। भारतीं। प्रकर्षेणाब्रवीत्। चित्रूशास्वित्यादिनाकथितत्वाद्द्विकर्मकत्वं। हे साध्वि एषः, विद्वद्बुद्धिगोचरः, 'धर्मस्य तत्त्वं विहितं गुहायाम्'इति वचनात्, पातिव्रत्यलक्षणो धर्मः। साधु सम्यग्यथा तथा निष्कपटमित्यर्थः। ते, त्वया। धृतः। ततस्ते त्वया एष लोकः वशे विहितः, वशवर्ती कृतः ॥ ९ ॥

कथं साधु वृषो धृत इत्यत आहेन्द्रवज्रया—

छायेव यानन्यगतिः पतिं भजेत्प्राक्स्वापभुक्ती गतिमत्र या त्यजेत्। उत्थानबोधाप्लवमग्रतश्चरेत्पत्योर्ध्वलोकं सति सैव संचरेत् ॥ १० ॥

'न स्त्री स्वातन्त्र्यमर्हति'इति स्मरणात् पतिं विना न विद्यते अन्या गतिर्यस्या ईदृशी या। छायेव, प्रतिबिम्बमिव। पतिं भजेत्। भजनप्रकारमाह। पत्युः स्वापात्प्राक् तथा भोजनात्प्राक् गमनात्प्राक् च या अत्र लोके यथाक्रमं स्वापभुक्ती गतिं च त्यजेत्। तथा पत्युरुत्थानादग्रतः पूर्वमेव उत्थानं, तन्निद्रामोक्षादग्रतः बोधं, जागृतिं, तत्स्नानात्पूर्वमाप्लवं, स्नानं च याचरेत्। हे सति, सैव पत्या सहोर्ध्वलोकं पतिलोकं सम्यक् चरेत्। 'अदुर्मङ्गलीः पतिलोकमाविश'इतिश्रुत्याशीर्वचनात् ॥ १० ॥

इति श्रुत्वा सा प्रत्युवाच वंशस्थया—

**इति ब्रुवन्तीमवदत्सतीं सती प्रशस्तमुक्तं कुत आगमः सति।**
**इनोदयायेति तयोदिता सती सतीक्ष्णदृक्प्राह तदा मुनेः सतीम् ॥ ११ ॥**

सती, कौशिकपत्नी। इति ब्रुवन्तीं, सतीं, अनसूयां प्रति अवदत्। हे सति। इदं प्रशस्तमुक्तं। भवत्याः कुतः कारणादागमः। इति तद्वचः श्रुत्वा, इनोदयायेति तयानसूयया उदिता सती, ब्राम्हणी। तदा सतीक्ष्ण-दृक् तिग्मदृष्टिसहिता सती मुनेः सतीमनसूयां वक्ष्यमाणं प्राह ॥११॥

( रथोद्धतावृत्तम् )

**अत्ति का निजसखीं प्रियं वदाप्यत्तिकाद्य भवती प्रियंवदा।**
**वक्ति कागिरमहो न वेद्म्यहं पुत्तिकासमतनुर्भवाम्यहम् ॥१२॥**

हे अनसूये। प्रियं यथा तथा मां वद। लोके का नाम निजसखीं अत्ति, भक्षति घातयतीत्यभिप्रायः न कापि अत्ति। अद्याधुना अत्ति-कापि ज्येष्ठा भगिनी तत्तुल्यापि धर्मोपदेशात्प्रियंवदापि। प्रियवश इति खच् ईदृशी भवती अक्का। कागिरं, कुत्सितवाणीं वक्ति। हा कष्टं बत अहो न वेद्मि। कागिरमितिशेषः। सूर्येभ्युदिते पत्युर्मरणस्यावश्यंभावित्वात्त्व-द्वाक्यं कर्णयोरुपर्यपि न गृह्णामि इति भावः। अहहा त्वद्वाक्यश्रवणमात्रे-णापि अहं काष्ठशिलादिनिर्मितपुत्तिकासमा तनुर्देहो यस्या ईदृशी जड़ा निश्चला भवामि ॥ १२ ॥

तच्छ्रुत्वानसूयोवाच भुजङ्गप्रयातेन—

**उवाचानसूयाह्वयार्कं मया ते प्रियाग्र्ये दयालो हरेर्धाम याते।**
**ततोऽसौ निवर्त्यापि नीरुक्सुराभो द्रुतं दीयते यर्हि ते रोचतेऽद्य ॥ १३ ॥**

अनसूयोवाच। हे साध्वि, अर्कं आह्वय। हे दयालो, ते प्रियाग्र्ये, प्राणप्रिये। प्राणान्हरतीति हरिर्यमस्तस्य धाम, गृहं याते, मृते सत्य-

पीत्यर्थः। ततो यमलोकादपि निवर्त्य, परावर्त्य। अधुना रुग्णो निस्तेजा अपि मत्प्रभावतो नीरुग्, रोगरहितः। सुराभो, देवसदृशः। असौ ते पतिः मया द्रुतं दीयते। यदि ते रोचते चेत्तर्हि, न तु हठात्। अत्र यमप्रेष्याणां सत्याः पत्युः प्राणाकर्षणाक्षमत्वात्सावित्र्याः पत्युरिव यमस्य कथंचिदक्षमत्वाद्धरेरित्युक्तम्। भारते च–'अथ सत्यवतः कायात्पाशबद्धं महा. वशं गतं॥ अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्'इति। हरेरिन्द्रस्य धाम स्वर्गं वा। साध्व्या भर्तुर्यमलोकगमनासंभवात्। हरेर्विष्णोर्धाम वैकुंठं वा। यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिरित्यमरः। नानार्थसंश्रयाच्छ्लेषः। अधुना रुग्णोऽपि शापान्मृतोऽपि पुनर्मयोत्थापितो नीरुक्सुराभश्चिरजीवी च भविष्यत्यतो लोकानिष्टनिवृत्तिपूर्वका(क) धर्म्यमहालाभे का तव हानिः। न काप्युत च स्वधर्माविरोधेन महालाभः एवातोऽर्कमाह्वय तवाह्वानं विना नोदेष्यतीति भावः॥ १३॥

( वंशस्थावृत्तम्–)

**तथेति सार्कं प्रणताऽऽह्वयत्सती सतीक्ष्णगुः स्रागुदितोऽब्जिनीततिम्॥ प्रहर्षयंश्च व्यथयन्भृशं सतीं हरन्द्विजासूंश्च समं तमस्ततिम्॥ १४॥**

तथेति यथा त्वं वदसि तथाहं करिष्यामीति सा सती प्रणता सती अर्कां उदयमेहीत्याह्वयत्। तीक्ष्णा गावो, रश्मयो यस्य सोऽर्कः। स्रागाह्वानाव्यवधानकाल एवोदितः। किं कुर्वन्, अब्जिनीनां ततिं पङ्क्तिं प्रहर्षयन्विकसयन् स, हैकवारे सतीं भृशं व्यथयन् भीषयन्कम्पयन्वा। व्यथ भयसञ्चलनयोरिति स्मरणात्। समं युगपदेव द्विजासून्कौशिकप्राणान् तमस्ततिं तमिस्रां च हरन्॥ १४॥

( स्वागतावृत्तम्–)

**देवहूतिदुहिता दयितांघ्रिं सा विचिन्त्य सहसा सहसाऽऽह॥ यद्यनन्यशरण चरणं मे भर्तुरेव स तु जीवतु जीर्णः॥१५॥**

देवहूतिदुहितानसूया। सा दयितांघ्रिं, अत्रिचरणं। विचिन्त्य, ध्यात्वा। सहसा, मयाश्वत्तापीयं व्यथितेति हास्यसहिता सती। सहसाऽऽह। भर्तुरेव चरणं मेऽनन्यशरणं यर्हि, तर्हि स तु मृतः जीर्णः वृद्धब्राह्मणः जीवतु॥ १५॥

(उपजातिवृत्तम्—)

**सत्यां वदन्त्यामिति तत्र सत्यां सत्याः प्रमीतो दयितोऽपि विप्रः॥ स जीवितो देव इवास नीरुङ् नितान्तशान्तश्च सतीप्रभावात्॥ १६॥**

तत्र तस्मिन्क्षणे। इति उक्तप्रकारेण। सत्यां वदन्त्यां सत्यां। प्रमीतो, मृतोऽपि। सत्याः दयितः विप्रः स कौशिकः जीवितः। सतीप्रभावान्नितान्तमत्यन्तं,शान्तः कान्त्याऽऽयुना च देव इव नीरुग्रोगरहितश्चाऽऽस सत्या नाश्चर्यमिदम्॥ १६॥

तदा हृष्टा देवाः वरैः सह द्रुतं पुष्पाणि ववृपुर्विलंबितं च स्वपदं जग्मुरिति द्रुतविलंबितवृत्तेनाह—

**सुमनसो ववृषुः सवरास्तदा सुमनसोऽपि ययुः स्वपदं मुदा॥ यदनुभावत आस सुरत्रयमिह हि कर्दमजात्रिसुतत्रयम्॥ १७॥**

तदा सुमनसो देवा अपि, ब्रह्मविष्ण्वीशास्ते पुत्रा भवन्त्वित्यादिवरैः सह सुमनसः पुष्पाणि ववृषुः। मुदा स्वस्वपदं च ययुः। यदनुभावतः, देववरप्रभावतः। इह लोके। सुराणां, ब्रह्मविष्ण्वीशानां त्रयं। कर्दमजात्रिसुतत्रयं आस अत्रेरनसूयायां पुत्रत्वेन ब्रह्मविष्ण्वीशा अवतीर्णा हीति श्रुतिपुराणेतिहासप्रसिद्धम्॥ १७॥

ते किंनामान इत्यत आह प्रहर्षिण्या—

**लोकेशो दिविचर आस तारकेशो दुर्वासा गविचर आस चण्डकेशः॥ श्रीदत्तस्त्विह भगवान्स्वयं त्र्यधीशो यद्दृष्ट्यंशत उभयर्द्धिगाः क्षमेशाः॥ १८॥**

लोकेशो, ब्रह्मा तारकेशश्चन्द्रो भूत्वा दिविचर आस। चण्डिकेशो रुद्रः दुर्वासा नाम लोकशिक्षार्थं गविचरो, भूचर आस। स्वयं भगवान्त्र्यधीशस्त्रिगुणमायामृगीनर्तकस्तु नाम्ना श्रीदत्त आस। यस्य दृष्ट्यंशतः, कृपाकटाक्षलेशात्क्षमेशा राजानोऽन्ये च बहवः उभयर्द्धिगाः, ऐहिकामुष्मिकसिद्धिगा जाताः ॥ १८ ॥

ते के क इत्यत आहाखिलग्रन्थेन तत्र तावदर्जुनचारितम्—

( गद्यम् ) **अथ खलु कश्चन सोमवंशीयोऽत्र क्षत्रियो हैहयोत्तमः कृतवीर्यो मृततनयोऽपि गुरुवर्योपदेशेन सूर्यसप्तमीव्रतं स्वयमनुष्ठाय मैत्रेय्याज्ञयापि जायया द्वादशमासात्मकमनन्तव्रतं कारयित्वा कुमारपराक्रमं शूरतरं कुमारमलभत् ॥ १९ ॥**

अत्र लोके कश्चिद्राजा हैहयकुलश्रेष्ठः कृतवीर्याख्य आस च्यवनशापान्मृतास्तनया यस्य सोऽपि बृहस्पतिवचनेनादित्यसप्तमीव्रतं स्वयं कृत्वा, मैत्रेयीकथितं वर्षात्मकमनंतव्रतं शीलधराख्यजायया कारयित्वा, कार्तिकेयपराक्रमं महाशूरं पुत्रं लेभे ॥ १९ ॥

( गद्यम् ) **अथ काले तमेव सुतमुपनीय ताते दिवमिते सत्यमात्यमुख्यैः पित्र्यं राज्यं कुर्वित्युदितो विनीतोऽपि स सुतो हसन्नाह ॥ २० ॥**

अथैकादशेऽब्दे तमेव पुत्रं अर्जुनाख्यं उपनीय कृतवीर्ये मृते सति अमा सह भवा अमात्याः सचिवाः। अव्ययात्त्यप्। तदादिभिः। पितुरागतं पित्र्यं,। तत आगत इति यत्। राज्ञः कर्म प्रजापालनात्मकं कुरु इत्युक्तोऽपि स्वयं विनीतोऽपि एते राज्यतत्त्वं न जानन्तीति हसन्सुतोऽर्जुन आह ॥ २० ॥

—तदेवाह शालिन्या—

**भूषष्ठांशं पण्यकद्वादशांशं भुङ्क्तेऽपश्यन्यः प्रजाः स्वप्रजावत् ॥ दण्ड्यादण्ड्यौ वेत्ति नो स्तेनमेनं कालो हन्तीदृङ् न राज्यं ममेष्टम् ॥ २१ ॥**

यः प्रजाः जनान्स्वसन्ततिवत् अपश्यन्। भुवः षष्ठांशं, पण्यद्वादशांशं च भुङ्क्ते। दण्डमर्हतीति दण्ड्यस्तदन्योऽदण्ड्यश्च तौ यो न वेत्ति एनं स्तेनं चोरं। यमो हन्ति; ईदृगनिष्टपरिणामं राज्यं ममेष्टं न पुरुषार्थाभावात् ॥ २१ ॥

—ईदृग्ज्ञातासि त्वं नीत्या चरेति चेत्तद्दुर्घटमित्याहानुष्टुभा—

**धार्मिकोऽपि नृपो भृत्यकृतांहस्तुर्यभागभाक् ॥**
**अतो न तोषदमिदं प्राज्यं राज्यमपूज्यवत् ॥ २२ ॥**

भृत्यैर्विना राज्यं न भवति स्वयं धार्मिकोऽपि नृपः भृत्यकृतपापतुर्यभागभाग्भवति अत इदं अपूज्यवन्निन्द्यं प्राज्यमपि राज्यं न तोषदम् ॥ २२ ॥

—तच्छ्रुत्वा गर्ग आहानुष्टुभा—

**मुनिवर्गोत्थितो गर्गो भर्गोपम उवाच तम् ॥**
**निर्गच्छानिर्गलं दत्तं स चित्तं ते प्रसादयेत् ॥ २३ ॥**

मुनिसमाजादुत्थितः भर्गोपमः पापभर्जनसामर्थ्यादिना शिवसदृशः गर्ग आचार्यः तं अर्जुनं उवाच। हे अर्जुन त्वं अनिर्गलं अप्रतिबन्धं यथा तथा श्रीदत्तं निर्गच्छ। स श्रीदत्तात्रेयस्ते चित्तं प्रसादयेत् ॥ २३ ॥

—तेन कस्य चित्तं प्रसादितमित्यत आह अनुष्टुभा गद्याभ्यां च—

**यदा पदानि देवानां बलाज्जम्भासुरोऽहरत् ॥**
**तदा पदार्थिनो देवाः श्रीदत्तपदमाश्रिताः ॥ २४ ॥**

यदा इन्द्रादिदेवानां पदानि स्थानानि बलाज्जम्भासुरः अहरत् तदा पदार्थिनः देवाः श्रीदत्तपदं आश्रिताः दैत्येन स्वपदेषु हृतेषु देवा अन्यपदमाश्रिता इत्युक्तिचातुर्यम् ॥ २४ ॥

( गद्यम् )—

**तदनु दनुजा अपि योद्धुकामास्तमाश्रमान्तमासाद्य मायामयीं दत्ताङ्क आसीनामनुत्तमां मानिनीं विलोक्य कामातुरतया बलात्तामादाय द्रुतं निर्ययुः ॥ २५ ॥**

तदनु देवानां पश्चात् दनुजा अपि योद्धुकामाः सन्तः तमाश्रमान्तं दत्ताश्रममध्यं आसाद्य प्राप्य ते श्रीदत्तस्याङ्के उत्सङ्गे उपविष्टां न विद्यते उत्तमा यस्यास्तां मायामयीं न तु वास्तवीं मानिनीं दृष्ट्वा कामातुरत्वेन बलात्तां कामिनीं गृहीत्वा ततो द्रुतं निर्ययुः ॥ २५ ॥

( गद्यम् )—

**ततो निमित्तभूतैर्देवैस्तानसुरान्घातयित्वा भगवता स्वपदं प्रवेशिता देवता अद्यापि तं भगवन्तं भजन्त एवंप्रभावं भावज्ञं भावलभ्यं सदयहृदयं दत्तात्रेयं शरणं व्रजेति ॥ २६ ॥**

ततो भगवता श्रीदत्तात्रेयेणेन्द्रादिदेवता निमित्तीकृत्य कालात्मना स्वयमेव तान्मृतप्रायान्कृत्वा निःशङ्कमेतान्हतेति प्रेषितैर्निमित्तभूतैर्दैवतैस्तानसुरान्घातयित्वा स्वस्वाधिकारं प्रवेशिता देवा अद्यापि तं भगवन्तं भजन्ते एवं प्रभावः सामर्थ्यं यस्य तं । सर्वस्वभावज्ञं । भावेन भक्त्या लब्धुं योग्यं । स्मृतिश्च ‘ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया’ इति । सदयहृदयं दत्तात्रेयं शरणं व्रजेति ॥ २६ ॥

**तथेत्युरीकृत्य तदर्जुनोऽगं सह्यं गतोऽसह्यपराक्रमोऽङ्गम् ॥ निपात्य दत्ताग्रत आह नम्रस्तं मां प्रभो पाहि तवास्मि कम्रः २७**

तथेति तद्वाक्यमङ्गीकृत्य असह्यपराक्रमोऽर्जुनः सह्यमगं सह्याद्रिं गतः । भक्त्या नम्रोऽर्जुनः । अङ्गानि सन्ति यस्य तदङ्गं, अर्श आदित्वान्मत्वर्थीयोच् । देहं, दत्ताग्रतो निपात्य, दण्डवत्प्रणम्य तं श्रीदत्तं आह हे प्रभो मां पाहि अहं तव कम्रः त्वत्कामयितास्मि ॥ २७ ॥

निर्भर्त्स्यमानोऽपि नृपःसकोपं दत्तेन भावं सगतोऽप्यकंपम्॥
न विव्यथे सेवनतत्परस्तं प्रोचे गुरुर्येन भयं निरस्तम् ॥ २८ ॥

दत्तेन सकोपं यथा तथा निर्भर्त्स्यमानोऽपि सेवनतत्परः अकंपं निश्चलं भावं भक्तिं गतः सोऽपि नृपोऽर्जुनः न विव्यथे भजनान्न चचाल येन दर्शनमात्रादेव भयं निरस्तं स गुरुर्दत्तात्रेयस्तं प्रोचे। अथवा श्रीदत्तसङ्गतिमात्रेण येन भयं बिभेत्यस्मादिति भयं द्वैताभिनिवेशरूपं विधिनिषेधलक्षणं पापादिरूपं तत्फलं वा माया वा निरस्तं तं अर्जुनं प्राह ॥ २८ ॥

( गद्यम् )—

आयुष्मंस्ते भद्रमितो गच्छ गच्छाहं स्त्रिया उच्छिष्टभाग्वि-वसनो धर्माधर्मानभिज्ञो भक्ष्याभक्ष्यविवर्जितोऽङ्कगतवनिता-संसर्गदूषित उन्मत्तवदतो मत्संगतस्तेऽशुभं भावीत्युक्त्वा दृङ्-मात्रेण तद्भुजावपातयत् ॥ २९ ॥

प्रशस्तमायुर्यस्य स आयुष्मान् तत्संबुद्धौ। प्राशस्त्यार्थे मतुप्। ते तुभ्यं भद्रमस्तु। इतो मत्सकाशाद्गच्छ गच्छ। यतोऽहं स्त्रिया मद्यादुच्छिष्ट-भाक्। विवस्त्रो धर्माधर्माप्रवीणः भक्ष्याभक्ष्यविवर्जितश्च उत्सङ्गस्थस्त्रीसं-सर्गदुष्ट उन्मत्तवदस्मि अतो मत्सङ्गात्ते शुभं न भावीत्युक्त्वा स्वदृष्टि-मात्रेणैव न तु शस्त्राघातेन तद्भुजौ भुवि अपातयत् ॥ २९ ॥

—क्रमेण यथार्थविद्वाननुरूपमुत्तरं दास्यन्गद्येनाह—

भगवन् त्वदभिन्नत्वादितः क्वास्य गमनं भवान्मायारचित-पदार्थभागिव विक्षेपावरणाभावाद्विवसनो नित्यमुक्तत्वाद्धर्मा-द्यतीतः स्वयमनश्नन्नश्नतो जीवस्य साक्षीतो भक्ष्यादिवर्जितो भवतो मायाया एकदेशस्थितत्वाद्वनितायाश्चासङ्गतत्वं लोक-दृष्ट्या तु दूषितत्वमुन्मत्तत्वं चातो मम शुभं भावीत्युक्त्वा मां

पाहीति प्रणिपतन्तं शोचन्तं वरान्वृणीष्वेत्याश्वास्यार्जुनमशोकं चकार ॥ ३० ॥

भगवन् 'जीवो ब्रह्मैव नापर' इत्युक्तेस्त्वदभिन्नत्वादितस्त्वत्तः क्वास्य गतिः न क्वापि। भवतो मायारचितपदार्थभाक्त्वमिव मूढैः कल्प्यते तन्न घटतेऽसङ्गत्वादितीवपदेन सूचितम्। वसनमावरणं तद्रहितः। अनश्नन्नभुञ्जानः 'नादत्ते कस्यचित्पापम्' इति स्मृतेः। 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति श्रुतेः। अङ्कगतत्वमेकदेशस्थितत्वं। 'पादोस्य विश्वा भूतानि०' 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्'इति श्रुतिस्मृती। शेषं सुगमं। अत्रार्जुनमशोकं चकारेत्याश्चर्यं शोचन्तमर्जुनं वरछंदनेन शोकरहितं चकार ॥ ३० ॥

कृतवीर्यसमुद्रेकः कृतवीर्यनृपार्भकः ॥
दत्ताभयं नमस्कृत्य दत्तात्रेयमिदं जगौ ॥ ३१ ॥

प्रभुणा पुनः पुनर्विचाल्यमानोऽपि धृत्या स्थितत्वात्कृतः वीर्यस्य बलस्य समुद्रेको येन स चासौ कृतवीर्यनृपार्भकश्च सोऽर्जुनः। शेषं स्पष्टम्॥३१॥

( शार्दूलविक्रीडितं वृत्तम् )–

सप्तद्वीपधरेशतान्यवशता युद्धेऽप्रतिद्वंद्वता।
बाहूनां च सहस्रता विजयता ख्यात्याधिकात्पश्चता ॥
वित्ता सिद्ध्यनुकूलतार्थबहुताकुण्ठोतिता दातृता
युष्मत्ता भवदङ्घ्रिभक्तिदृढता चान्तेऽस्तु सायुज्यता ॥३२॥

सप्तद्वीपपृथ्वीश्वरत्वं, ममैकस्यैवास्त्विति सर्वत्र। अन्येषां वशत्वं, युद्धे अप्रतिद्वंद्वत्वं, इच्छया बाहूनां सहस्रत्वं, यत्र कुत्रापि विजयत्वं, ख्यात्याधिकाद्भवादृशात्सकाशान्मरणं, वित्ता, सर्वज्ञत्वं, सर्वसिद्ध्यनुकूलत्वं, अर्थबहुता, अक्षय्यं धनं, अकुण्ठगतित्वं, दातृत्वं, युष्मत्पदभक्तिदार्ढ्यं, अन्ते पुनरावृत्तिरहितं सायुज्यं चास्तु ॥ ३२ ॥

( वंशस्थवृत्तम् )–

तथेति भूपोऽर्थविदोदितो गतो नतोऽभिषिक्तो मुनिभिः पदे स्थितः ॥ अधर्मकर्ता परपीडकोऽस्त्रभृन् मया विना हन्मि तमित्यघोषयत् ॥ ३३ ॥

अर्थविदा, वृत्तिज्ञेन श्रीदत्तेन । तथेत्युदितो नतोऽर्जुनः पुरं गतः । मुनिभिः यथाविध्यभिषिक्तः । राज्यपदे स्थितः आह । भूतले अधर्मकर्ता, परपीडकश्च, मया विना शस्त्रभृच्च, यः कोऽपि भवेत्तं हन्मीति सर्वत्र भेरीघोषपूर्वकमाघोषयामास ॥ ३३ ॥

( उपजातिवृत्तम् )

पूर्ग्रामगोक्षेत्रधनाश्वपाता स्मृतोऽपि सर्वार्तिहरोऽरिहन्ता ॥ त्राता प्रपन्नस्य रुगाधिहर्ता नैकाङ्गधर्ताऽत्रिजवद्विहर्ता ॥३४॥

पूरादीनां स्वयं पालकः । स्मृतोऽपि सर्वेषां सर्वार्तिहरः । अपिशब्दादस्मृतोऽपि, कृपातिरेकेण स्वयमेव सार्वज्ञ्यादार्तं विज्ञायाप्यार्तिहरः अरीणां हन्ताथापि प्रपन्नस्य त्राता । सर्वेषां रुक् रोगः आधिर्मनस्तापस्तन्नाशकः । कार्यपरत्वेन नैकाङ्गधर्ताऽनेकदेहधरः । दत्तात्रेयवद्विहारकर्ता चासीत् ॥ ३४ ॥

( प्रहर्षिणीवृत्तम् )—

नाकाले मृतिररिभीतिरास राज्यं भूपाले नयविदि शासतीज्यपूज्यम् ॥ दुर्भिक्षं न हि न हि मारिकेतिभीतिर्न स्तेनाग्निजभयमास कूटनीतिः ॥ ३५ ॥

नयविदि, नीतिज्ञेऽर्जुने । ईज्यपूज्यं, श्रेष्ठमान्यं । राज्यं शासति सति । कस्याप्यकाले मृतिर्नास । नारिभीतिः । न हि दुर्भिक्षं । मारिकेतिभीतिर्न हि । तत्रेतयस्तु ‘ अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः’इति । स्तेनाग्निजभयं न स्तेनश्चोरः । कूटनीतिश्च नास ॥ ३५ ॥

—संक्षेपतस्तल्लीलामाह—

**कार्कोटकाहिजिद्रेमे परावर्त्य च नर्मदाम् ॥**
**शर्मदां तत्पतिं सिन्धुं जित्वापि बहुनर्मदाम् ॥ ३६ ॥**

बहूनि नर्माणि ददातीति तां। शर्मदां, सुखदां,। नर्मदां, रेवां। परावर्त्य तत्पतिं सिन्धुं क्रोधेनायान्तं सहस्रभुजताडनेन जित्वा। सापराधिकर्कोटकपुत्रजिद्राजा नर्मदायां स्त्रीभिः सह रेमे ॥ ३६ ॥

—तस्य वैराग्यमाह षड्भिः—

(द्रुतविलंबितवृत्तम्)—

**चतुरशीतिसहस्रसमा व्यधात्स भुवि राज्यमहो सुयशोऽप्यधात् ॥ त्रिभुवने भुवनेशकृपावशादथ विरागमगात्स विधेर्वशात् ॥ ३७ ॥**

चतुरशीतिसहस्रवर्षाणि। अत्यन्तसंयोगे द्वितीया। भुवि राज्यं व्यधात् व्यकरोत्। भुवनेशः श्रीदत्तस्तत्कृपावशात् त्रिभुवने सुयशोऽपि अधात्। अहो इत्याश्चर्ये। भुवनेशकृपावशादित्युभयत्राप्यन्वेति। ईशानुग्रहं विना नाद्वैतमतिः। 'यमेवैष वृणुते तेन लभ्य' इति श्रुतेः। 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' इति स्मृतेः। 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' इत्यभियुक्तोक्तेश्च। अथ भुवनेशकृपावशादुदितो यो विधिः प्राक्तनकर्मयोगः तस्य विधेर्वशाद्विरागं वैराग्यं अगात् ॥ ३७ ॥

(उपेन्द्रवज्रावृत्तम्)—

**क्व चात्मरूपानुभवप्रमोदाः क्व कुस्त्रियां वर्णरतिप्रमोदाः ॥**
**य इन्द्रियाणां जरयन्ति तेजो रमेत तैः किं चिरजीवितेऽजः ३८**

विरागमाह—कुत्सितस्त्रीणां वर्णरतिप्रमोदाः क्व। आत्मस्वरूपानुभवप्रमोदाश्च क्व। बुद्धिग्राह्यातीन्द्रियात्यन्तिकसुखापेक्षया दुःखयोनि-

सोपाधिकसातिशयानित्यसंस्पर्शजभोगसुखस्यात्यन्तं गर्ह्यत्वात्। ये कुस्त्रियां वर्णरतिप्रमोदाः इन्द्रियाणां तेजो जरयन्ति। अजो, ब्रह्मापि, तैः सह चिरजीविते रमेत किं अपि तु न। किं पुनरल्पायुषां नृणां कथा॥ ३८॥

( इन्द्रवज्रावृत्तम् )--

जन्मान्तरे येऽद्य च ते श्व एव तद्भुक्सदा श्वा स खरोऽश्व एव॥
धिक्तान्मनोविभ्रमबन्धहेतून् धिङ्मां न चेक्षे सत आत्मसेतून् ॥ ३९ ॥

जन्मान्तरे ये भोगास्ते चाद्य जन्मनि। उपलक्षणमिदं, ये गतदिने भुक्तास्ते चाद्य एव, येऽद्यैव भुक्तास्तेऽपि श्व एव। अतः यः सदा तान्भुनक्तीति तद्भुक् स च श्वा खरोऽश्व एव विवेकाभावात्। मनसो विविधभ्रमबन्धहेतून्तान्धिगस्तु। तथा योऽहं आत्मनः सेतुभूतान्सतः साधून्नेक्षे तादृशं तं मां धिक्॥ ३९॥

( द्रुतविलंबितवृत्तम् )--

चलदलान्तजलोपमजीविते मृगजलोपमभोग उ सेविते ॥
क्व सुखमद्य विवेक उपस्थितस्तत इतस्तु भजेऽजमुपस्थितः ४०

चञ्चलपत्रान्तस्थोपमे जीविते अत्यल्पे आयुषि, मृगजलोपमे भोगे स्वाप्नसदृशे सेविते सति सुखं क्व न क्वापि। परिणामतापादिना दुःखमेव विवेकिनामिति पातञ्जलात्। यतोऽद्यायं परमदुर्लभो विवेक उपस्थितोऽस्ति ततस्तस्मात्कारणात् इत उपरि तु उपस्थितः समीपवर्ती सन्नजं जन्मादिशून्यं, स्वेच्छोपात्तविग्रहं श्रीदत्तं भजे॥ ४०॥

( अनुष्टुप् )--

एवं सुनिर्विण्णमतिर्नृपतिः प्राप सत्पतिम् ॥
सद्गतिस्तत्परीक्षार्थं व्यर्थं ध्यानस्थवद्बभौ ॥ ४१ ॥

एवं सुनिर्विण्णा मतिर्यस्य स नृपतिः सतां पतिं श्रीदत्तं प्राप। सतां

गतिः श्रीदत्तस्तत्परीक्षार्थं, व्यर्थं निरर्थकं, यद्वा विविधाः शिष्यपरीक्षादिलक्षणाः अर्थाः यस्मिन्कर्मणि यथा तथा, ध्यानस्थवद्बभौ ॥४१॥

—तादृशं गुरुं दृष्ट्वा तुष्टावेत्याह शालिन्या—

**भूयो भूयो नामभिर्देवमुच्चैर्भूयो भूयो हन्त संबोध्य नीचैः॥ कं साकं सास्रं गिराधाय देवं स्मारं स्मारं तद्यशोऽस्तौत्तमेवम् ॥ ४२ ॥**

भूयो भूयः, पुनः पुनः। उच्चैः भूयो भूयो नामभिः, बहुभिर्बहुभिर्नामभिः। देवं उच्चैः संबोध्य। गिरा, वाण्या साकं, सास्रं, नेत्रोदकसहितं। कं, शिरः। नीचैः आधाय। भक्तानुग्रहलक्षणं तद्यशः स्मारं स्मारं, स्मृत्वा स्मृत्वा। आभीक्ष्ण्ये णमुल्। तमेव देवं एवं वक्ष्यमाणप्रकारेणास्तौत् ॥ ४२ ॥

( योगिनीवृत्तम् )--

**भगवन् सविधे दयानिधे मघवन्मान्य तवाद्य सन्निधे ॥**
**पतितं किमुपेक्षसे हि दृक्पतितं पावयतीश ते स्वदृक् ॥ ४३ ॥**

हे मघवन्मान्य हे दयानिधे। सन्तो निधीयन्तेऽस्मिन्निति सन्निधिः तत्संबुद्धौ हे सन्निधे भगवन्। अद्य तव सविधे, सन्निधौ, पतितं मां उपेक्षसे किं सर्वथा भक्तोपेक्षा ते नोचिता। हे स्वदृक्, स्वरूपानुभवज्ञ। हि, यस्मात्। ते तव। दृक् कृपाकटाक्षलेशः। पतितमपि पावयति किं पुनर्भक्तान् धार्मिकान्पावयतीति वक्तव्यम् ॥ ४३ ॥

—पापी अयमित्युपेक्षसे इत्याशंक्याह योगिन्या—

**अघवानयमित्युपेक्षते भगवान्माद्य भवान्न चेक्षते ॥**
**मघवाप्यवितो नतो यथाप्यघवानप्यव मां नतं तथा ॥ ४४ ॥**

अयं पापवानिति भगवान्भवानद्य मामुपेक्षते चेत्तर्हि अघवानपि नतो मघवा यथावितो जंभासुरभयाद्रक्षितस्तथापि अघवन्तमपि मां अद्याविद्याकामकर्मभ्योऽव, रक्ष ॥ ४४ ॥

( योगिनीवृत्तम् )

**प्रथमं तव माययावृतस्तत एतद्विभवो मया वृतः ॥**
**स्वयमेव निजाहितोऽभवं शरणं त्वाद्य ततो गतोऽस्म्यहम् ४५**

कुतः पूर्वं संपदो वृत(ता)इति चेन्मौर्ख्यादित्याह–पूर्वं ते माययाऽऽवृतः तत एष विभवो राज्यादिर्मया वृतः। यतः स्वयमेव स्वस्य शत्रुरभवं ततोऽद्य त्वां शरणं गतोऽस्मि ॥ ४५ ॥

—अनर्थप्रापकराज्यदातुर्ममायं दोष इत्यत आह—

**क्व च दोष उ एष वदान्यतस्तुषकांक्षिवदेव वदान्यतः ॥**
**भवतोषधिया भव ईप्सितो भवतोभव नाभव ईप्सितः ॥४६॥**

हे भगवन्। एष उ एष एव। मोक्षमनादृत्य राजवैभवादिवरणलक्षणः दोषः अन्यतः, सार्वविभक्तिकस्तसिः। मत्तोऽन्यस्य क्व च वद, भगवन्निदं ब्रूहि। कथंभूतस्य मम। वदान्यतः, यथाकामं वृणीष्वेति वदतो दानशौण्डात्तुषं धान्यत्वचं कांक्षतेऽसौ तुषकांक्षी तेन तुल्यस्तद्वत्। तेन तुल्यमिति वतिः। धान्यत्वचि तुषः पुमानित्यमरः। भवे तोषः स्त्रीपुत्रादिसुखलक्षणः, तस्मिन्तात्पर्येण धीर्यस्य सः तेन मया। राज्यादिलक्षणः पुनर्जन्मज्ञापकः भव एवेप्सितः। हे अभव, भवनिवर्तक। भवतः अभवः, मोक्षः, नेप्सितः ॥ ४६ ॥

**द्विरदाश्वधनादिषु किं सुखं वरदाभवधूत्थमु किं सुखम् ॥**
**सुखरूपनिजात्मविघातकैः किमु तैर्भवसागरपातकैः ॥ ४७ ॥**

हे वरद। गजाश्वधनादिषु किं सुखं न किमपि। अथवा कुत्सितं सुखं किंसुखं। तथा अभवधूत्थं, उ, अपि। किं सुखं। प्रत्युतानर्थ इत्याह। सुखरूपो यो निजात्मा स्वरूपभूत आत्मा तस्य विशेषेण घातकैः। उत च भवसागरपातकैः तैः पूर्वोक्तैर्द्विरदादिभिः किमु किं कर्तव्यं। प्रमादेनात्मतिरस्कार आत्मघातः न तूरभेदमात्रम् ॥ ४७ ॥

भवत्प्रसादादजय्यसंसारलक्षणमृतिपराकृतिं विनेह सर्वं संपादितमित्याह योगिन्या—

**अहिता विहिता मयानुगा विहिता श्रीः सुहितापि सानुगा ॥**
**अनुगायकवत्सुराः कृता अनुगा नैव मृतिः पराकृता ॥४८ ॥**

अहिताः, शत्रवः । मयाऽनुगाः, दासाः । विहिताः, कृताः । सानुगापि, अष्टमहासिद्धिसहितापि । श्रीर्लक्ष्मीः। सुहिता कृता । सुरा, देवाः अनुगायकवत्कृताः । अथापि अनुगा, जन्मनि जन्मनि पृष्ठतो लग्ना । मृतिर्मृत्युर्नैव परावर्तितः अतो मां धिक् ॥ ४८ ॥

'निचाय्य तं मृत्युमुखात्प्रमुच्यत' इति श्रुतेस्त्वत्पदप्राप्त्या तां मृतिं परावर्तयेत्याशयेन प्रार्थ्यते योगिन्या—

**न यमाच्च बिभेम्यहं तथा नयमानी भवचक्रतो यथा ॥**
**न यमादिभिराप्यते पदं नय माद्याभयमीश ते पदम् ॥ ४९ ॥**

यथा मृत्युलक्षणभवचक्रतोऽहं बिभेमि तथा नयं न्यायं मन्तुं शीलं यस्य स तथा । ताच्छील्ये णिनिः । अहं यमाच्च दण्डधरादपि न बिभेमि नयशीलस्य यमदण्डाभावात् । ईदृग्भवचक्रं भवत एकदेश एव स्थितं(त) दुपरिपदवाच्यं भवचक्ररहितं तेऽमृताख्यं स्वरूपं । 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः । तदेव मयापेक्षितं तच्च ते पदं यमादिभिरपि अष्टाङ्गयोगादिभिरपि नाप्यते, तस्य चतुर्विधक्रियाफलत्वाभावात् । हे ईश, अद्य आद्येति संबोधनं वा । हे आद्य । सर्वकारणकारण । अभयं, भयनिर्वतकं । 'अभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति' इति श्रुतेः । तत्ते पदं मां नय ॥ ४९ ॥

अविरक्तस्य तु तद्दुर्लभमित्यत आह योगिन्या—

**स्पृहयामि न भौमवैभवं स्पृहयामीश न दैववैभवम् ॥**
**स्पृहयामि न सिद्धिवैभवं स्पृहयामीश्वर दास्यवैभवम् ॥ ५० ॥**

हे ईश्वर ते दास्यवैभवं स्पृहयामि अन्यत्स्पष्टम् ॥ ५० ॥

दास्यं पारतन्त्र्यमित्यत आहैकरूपेण--

**अपि दासवतः परतन्त्रता तव दास्यत इन्निजतन्त्रता ॥**
**अत एव मतं तव सेवनं तत एव चरे वनसेवनम् ॥ ५१ ॥**

दासा विद्यन्ते यस्य तस्य दासवतोऽपि राजादेः परतन्त्रता विध्यधीनता लोके दृश्यते। तव दास्यत इत् एव निजतन्त्रता भगवद्भक्तस्य विधिनिषेधातीतत्वात्स्वाधीनत्वं अत एव तव सेवनं मतं ममेति शेषः। मतिबुद्धीत्यादिना षष्ठ्यर्थेपेक्षितत्वात्। ननु त्वं राजाहं वनगोचरोऽतो मम सेवनं कथं घटत इत्यत आह यस्माद्भवत्सेवनं मतं तत एव भवत्सेवार्थं राज्यादि सर्वं विहाय वनसेवनं चरे। अहमिति शेषः ॥ ५१ ॥

वने वानप्रस्थार्पितकन्दादिभैक्ष्यसेवनमहो महाकष्टं अहहा प्राप्तवैभवानादरः कुबुद्धिरेवेत्यत आहैकरूपेण----

**नरको नरकोट्यधिपस्य यदा नरकोत्तरकोशभृतोऽपि तदा ॥**
**वरमेव हि भैक्ष्यममानदं परमेव लभेत्तव यत्पदम् ॥ ५२ ॥**

यदा, यर्हि। नरकोट्यधिपस्य नरपतेरन्ते नरकः। तथा नरकः उत्तरा येषां तादृशकोशभृतोऽपि यदा यर्हि नरकः। तर्हि हि, निश्चयेन। अमानदं मानहरमपि। भैक्ष्यं वरं। किं तेनेत्यत आह तेन तव यत्परमं पदं तदेव लभेत् दुर्लभस्याप्यनेनोपायेन सुलभत्वं। तव पदमित्यत्र षष्ठ्यर्थो राहोः शिर इतिवदौपचारिको भेदोऽवगन्तव्यः ॥ ५२ ॥

( अनुष्टुप् )

**अत एव स्वतःपूर्ण योग्यं योग्याय देहि मे ॥**
**उत्तिष्ठोत्तिष्ठ मद्दृष्ट्या प्रभो जागृहि जागृहि ॥ ५३ ॥**

यतो दृढवैराग्यसत्वाद्योग्याय, विरक्ताय पात्रभूताय, योग्यं ज्ञानं देहि। किंचित्सेवाद्यादाय दास्यामीति चेत्संबोधयति हे स्वतः पूर्ण, आप्तकामेति। ननु निद्रितोऽहमित्यत आह 'गतिस्थित्यासनस्वप्ना न कदापि

चिदात्मनि'इति, भगवतो निद्राभावेऽपि मद्दृष्ट्या निद्रित इवापि भगन्नुत्तिष्ठोत्तिष्ठ आदराद्द्विरुक्तिः। हे प्रभो, समर्थ। जागृहि जागृहि॥५३॥

इति स्तुवति मूर्छां च याति भूभृति भूभृति॥
उषस्यृषय एत्येशं नत्वा देवाश्च निर्ययुः॥ ५४॥

भूभृति, भूपालेऽर्जुने। इति स्तुवति सति, चापरं भूभृति, सह्यपर्वते मूर्छां याति सति। याते शरदिति सप्तमी। उषः कश्यपादिऋषयः दर्शनार्थमागत्य ईशं श्रीदत्तं नत्वा पुनर्निर्ययुः देवा इन्द्रादयश्चैत्येशं नत्वा निर्ययुः॥ ५४॥

( गद्यम् )

तदनूत्थितः श्रीदत्तः शिष्याभिवादितः स्वीकृतशिष्यदत्तामृत आचान्तः श्रितनैर्ऋतदिक्प्रान्तः कृतमलोत्सृतिर्जलाशयमितः शोधितपद्धस्तमुखदन्तः सुस्नातः कृतसंध्योपास्तिस्तर्पितदेवतादिः श्रीपत्तनादाहृतयाचितकः कृतभुक्तिराचान्तः पुनर्ध्यानमास्थितस्तदा प्रणतः शान्ततपा भगवन्नुपोषितं मूर्छितं स्थितमेतं कृतवीर्यसुतं द्रष्टुमर्हसीति प्रणिपपात॥ ५५॥

तदनु तदनन्तरं उत्थितः श्रीदत्तः शिष्यैः अभिवादितः स्वीकृतं शिष्यदत्तं अमृतं जलं येन स तथा। आचान्तः कृताचमनः। मलोत्सर्गार्थं श्रितः नैर्ऋतदिक्प्रान्तो येन सः। कृतमलोत्सर्गः, जलाशयं प्राप्तः, मृज्जलाभ्यां शोधितौ पदौ हस्तौ मुखं दन्ताश्च येन सः। सुस्नातः, कृतसन्ध्योपासनः, तर्पिता देवतादयो येन, एतेन ब्रह्मयज्ञ उक्तः। श्रीपत्तनात्करवीरपुरात् आहृतं आनीतं याचितकं याञ्चयाप्तं भैक्ष्यं येन सः। 'शान्ता विद्वांसो भैक्ष्यचर्यां चरन्त'इति लोकसंग्रहार्थं, न तु साधकत्वेन। कृतभोजनः, आचान्तः, पुनर्ध्यानमास्थितः। तदा प्रणतः शान्ततपा नाम शिष्यः आह भगवन्नित्यादि स्पष्टम्॥ ५५॥

( उपजातिवृत्तम् )—

**उवाच दत्तस्तमुदारचित्तः प्रियाय दत्तः ससुसिद्धिवित्तः ॥**
**भूगोल एवाद्य ददाम्यदत्तं स्वरादिमस्मै यत एष भक्तः॥५६॥**

उदारचित्तः दत्तः तं शिष्यमुवाच । प्रियायार्जुनाय सुसिद्धिवित्तसहितः सप्तद्वीपात्मकभूगोल एव दत्तः अथाप्यद्यास्मै अदत्तमसमर्पितं स्वरादि ब्रह्मलोकान्तं ददामि यत एषः मम भक्तः मम भक्तायादेयं किमपि नास्ति ॥ ५६ ॥

**कृतवीर्यसुतो ह्रीतः नतो वव्रेऽमृतं यतः ॥**
**श्रुतभ्रान्तिनिवृत्तिश्च प्राचामाचार्य आह तम् ॥ ५७ ॥**

अर्जुनो ह्रीतः लज्जितः। नतः नम्रः। अदत्तं स्वरादिमित्यादिना प्रलब्धोऽपि अमृतं मोक्षं वव्रे, आचकांक्ष न स्वर्गादि। यतोऽमृतात् श्रुतभ्रान्तिनिवृत्तिः, शास्त्रभ्रमनिवृत्तिः। चकाराद्धृदयग्रन्थिभेदादि। तदा प्राचां ब्रह्मादीनामाचार्यः श्रीदत्तः तमर्जुनमाह ॥ ५७ ॥

शासनाच्छास्त्रमिति व्युत्पत्तेः सर्वेषामपि शास्त्राणामद्वैते ब्रह्मणि तात्पर्यमिति वक्तुं तावत्सप्तगाथा अनुक्रमते दशभिरुपजातिभिर्द्वाभ्यामनुष्टुभ्यां च। तत्राद्यगाथा[1] त्वाष्ट्रशास्त्रविदोऽसौ—

**बृहस्पतिर्देवपतिं स्म वक्ति गाथाततिं तां शृणु भूतिनाथ ॥**
**पुराभवच्छास्त्रविदत्र शास्त्रं त्वाष्ट्रं स विद्वान्कृतभूरिगेहः॥५८॥**

हे भूतिनाथार्जुन। बृहस्पतिर्देवपतिमिन्द्रं यां गाथानां ततिं पङ्क्तिं वक्ति स्म। लट् स्म इति भूतार्थे लट्। तां मत्तः शृणु। पुरा युगान्तरेऽत्र लोके कश्चिच्छास्त्रवित् आसीत्। त्वाष्ट्रं शिल्पशास्त्रं विद्वान्सः कृतानि भूरिगेहानि अन्येषां येन सः ॥ ५८ ॥

---

१ गाथा नामेतिहासः

**आयादिविद्यस्य गृहं स चक्रे सायासदुःखार्तिरुगादिहीने ।।**
**यज्ञादयस्तद्भवनेऽमिताःस्युर्मृतस्ततः स्वर्गमितः सुपुण्यः।।५९।।**

स शास्त्री आयव्ययादिवित् यस्य यस्य गृहं चक्रे निर्ममे आयास-दुःखपीडारोगवर्जिते तद्भवने यज्ञदानादयोऽमिताः स्युः ततः शोभन-पुण्यः सः मृतः स्वर्गं इतः गतः ।। ५९ ।।

**भूयोऽत्र मृत्वापि नृपस्ततोभूद्भूयोऽपि विप्रः स गतोऽमृतं हि ।।**
**गाथादिरेषा त्वपरा तु गाथा विप्रोऽभवत्कश्चन कामशास्त्री।।६०।।**

भूयः सोऽत्र नृपो भूत्वा ततो भूयोऽपि मृत्वा विप्रो भूत्वाऽमृतं मोक्षं गतः । हीति पुराणप्रसिद्धं । इयं क्षुद्रशास्त्राधारेण क्रममुक्तिकथनरूपा आदिः एषा गाथा कथिता । अपरा तु गाथा कथ्यते कश्चन कामशास्त्री विप्रः अभवत् ।। ६० ।।

**स स्त्रीसुमान्यो वृतराजकन्यो वात्स्यायनोक्तं सुरतं स वेद ।।**
**गन्धर्वतां प्राप्य मृतः स धातृप्रसादतस्तत्र गतः स मुक्तिम्।।६१।।**

स कामशास्त्री । स्त्रीणां सुतरां मान्यः । वृता राजकन्या येन सः । वात्स्यायनोक्तं सुरतं कामशास्त्रोक्तवन्मैथुनक्रियां वेद । शास्त्रोक्तानन्दा-नुभवपुण्येन, मृतः सः गन्धर्वत्वं प्राप्य, तत्र, गन्धर्वत्वेऽपि, धातृ-प्रसादतः ब्रह्मदेवप्रसादान्मुक्तिं गतः । देवत्वेऽपि मोक्षाधिकारः स्मर्यते 'तदुपर्यपि बादरायणः संभवात्' इति न्यायाधिकरणात् ।। ६१ ।।

**तथान्यगाथां शृणु सन्विकंप्रः सप्तग्रहग्रस्त इहास विप्रः ।।**
**क्षिप्रप्रसादो भगवांस्तदोकः प्राप्तः सुगुप्तः खलु येन लोकः ६२**

इयं द्वितीया गाथा । हे राजन् । विकंप्रः सन् समाहितान्तःकरणः सन् । तथा तेन प्रकारेणान्यगाथां शृणु । इहात्र देशे । सप्तभूतग्रहग्रस्तः विप्रः आस । क्षिप्रं प्रसादोऽनुग्रहो यस्य स भगवान्, अहमिति वक्तु-राशयः । तदोकः, तद्गृहं प्राप्तः । येन प्राप्तेनावधूतवेषदर्शनेन लोक्यत इति लोकः देहः सुतरां गुप्तः खलु ।। ६२ ।।

**तल्लब्धमन्त्रैः क्रमतो द्विजस्य पिता प्रसादाद्विधिनाऽजस्य ॥**
**न्यवारयद्यद्वदिहात्मदोषा योगैः क्रमान्मुक्तिमगात्तदेषः ॥६३॥**

तस्मै भिक्षां प्रदायालौकिकीं तच्छविं दृष्ट्वा यत्नतस्तत्पृष्ठलग्नो भूत्वा तं प्रसादयामास। ततः ग्रहग्रस्तद्विजस्य पिता, तस्माद्भिक्षुरूपाद्दत्तात्रेयाल्लब्धमन्त्रैः न्यासध्यानादिविधिनाजस्य प्रसादाद्दत्तात्रेयकृपावशात्क्रमत एकैकशो भूतं न्यवारयत्। यद्वत् इह मोक्षमार्गे, क्रमाद्योगैः दोषदृष्ट्याद्युपायैः आत्मदोषा, मनोदोषा आगन्तुका रागादयो निवार्यन्ते तद्वत् सर्वभूतग्रहान्न्यवारयत्। यदा भूतनिष्क्रान्तिर्जाता तदा एषः ग्रहमुक्तः विप्रसुतः क्रमाच्छ्रवणाद्यभ्यासेन मुक्तिमगात् एवं क्षुद्रमपि शास्त्रं महोपकारकम् ॥ ६३ ॥

**तथान्यगाथां शृणु विष्णुदत्तः स्वकर्मणाभ्यर्चितदेवदत्तः ॥**
**भूतेन वल्यन्नभुजापि दत्तस्त्रिर्दर्शितो येन परोऽपि दत्तः ॥६४॥**

एवं तृतीया गाथा। तथान्यगाथां शृणु। फलाभिसन्ध्यभिमानराहित्येन नित्यनैमित्तिकरूपस्ववर्णाश्रमोचितकर्मणा अभ्यर्चितः, देवः स्वयं प्रकाशमानश्चासौ दत्तो येन सः विष्णुदत्तः। माहुरे आसेति शेषः। तद्दत्तभूतबल्यन्नभुजा केनाचिद्भूतेन प्रसन्नेन त्रिस्त्रिवारं दत्तोऽपि दर्शितः। येन तेन दर्शितदत्तेन श्राद्धीयक्षणमाश्रुत्य तद्गृहमेत्य विप्ररूपधराभ्यां सूर्याग्निभ्यां सह श्राद्धे भुक्त्वा परोऽपि मोक्षोऽपि दत्तः किमन्यद्वक्तव्यम् ॥ ६४ ॥

**तथापि गाथा पिशुनो झुटिङ्गः साध्वीशतुल्याकृतिगः सतीगः॥**
**स्वरादिसाम्येऽपि तयोर्झुटिङ्गो बद्धो द्विजेनानृतिवक्रसङ्गः ६५**

तथापि पञ्चमी गाथापि कथ्यते। पिशुनः खलः। झुटिङ्गः ब्रह्मचार्यवस्थायां कामार्तो मृतः पिशाचयोनिं गतो भूतविशेषः। रूपलावण्यसंपन्नां सतीं वीक्ष्य तां भोक्तुं साध्व्याः पत्यौ प्रोषिते सति। साध्व्या

ईशः पतिस्तत्तुल्याकृतिं गच्छतीति साध्वीशतुल्याकृतिगः। सतीं गच्छतीति तथा। सत्या कापट्येन मिथुनीभूय रतिसुखं प्रत्यहं लेभे। ततः प्रोष्यागतं तत्पतिं दृष्ट्वा झुटिङ्गः कस्त्वं मद्रूपधर इत्यादिना निर्भर्त्स्य गृहान्निष्कासयामास। तदा; तद्बन्धवो ग्रामस्थाश्चोभयोः साम्यं दृष्ट्वा चकिताः सन्तस्तौ विष्णुदत्तं प्रति निन्युः। तदा द्विजेन विष्णुदत्तेन तयोः स्वरादिसाम्येऽपि कुत्सितः सङ्गो यस्य सः झुटिङ्गः अनृतिवत् मन्त्रप्रभावतो बद्धः। सस्तनीं कुंभीमानीय मुखेनाविश्य नालान्निर्गत्येयं स्त्री गृह्यतामित्युक्ते झुटिङ्गस्तथेति प्रविष्टोऽभूत्तदा निष्क्रमणात्पूर्वमेव तं कीलयामास। अनृतिवदित्यत्र तप्तपरशुग्रहणपरीक्षादिकं छान्दोग्योक्तमनुसन्धेयम् ॥ ६५ ॥

**तथापि गाथापिबतेर्भकाय रुग्णाय निंबं प्रददौ तदम्बा॥**
**खण्डप्रलोभाद्भवपीडिताय श्रुतिर्यथाऽमुख्यफलं स्वरादि ॥६६॥**

तथाऽपि षष्ठी गाथा। आरोग्यार्थं निम्बं पिबेत्युक्त्वाप्यपिबते रुग्णायार्भकाय खण्डलड्डुकं दास्यामीति खण्डप्रलोभनात्तदम्बा तस्य माता निम्बं प्रददौ यथा भवरोगपीडिताय बहिर्मुखाय मातृशतेभ्यो गरीयसी 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्'इत्यादिका श्रुतिः यथा अमुख्यफलं गौणफलं स्वरादि स्वर्गादिकं प्रतिपादयतीति तथा। मुख्यफलं तु चित्तशुद्धिद्वारा रुच्युत्पादनं तथा च वार्तिकसारे-'रुचिद्वारोपकुर्वन्ति कर्माण्यात्मविमुक्तये। अज्ञानस्याविरोधित्वान्न साक्षादात्मबोधवत् ॥ १ ॥ अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्षते। ज्ञानोत्पत्तौ तु नैवान्यच्छमादिभ्यो ह्यपेक्षते ॥ २ ॥ शमाद्युत्पत्तये नान्यद्बुद्धिशुद्धेरपेक्षते। बुद्धिशुद्धौ तु नित्यादिकर्मभ्यो नान्यदिष्यते ॥ ३ ॥ पारंपर्येण कर्मैवं विज्ञानायोपयुज्यते'इति ॥ ६६ ॥

**प्रायश्चित्यस्तगुल्मादिरुजं सत्यर्थितो द्विजम् ॥**
**निन्ये रसेन प्रकृतिं भवार्तमिव तं कृती ॥ ६७ ॥**

सप्तमी गाथा। पतिप्राणार्पणेन सौभाग्यं मे देहीति सत्याऽर्थितः। कृती कुशलः विष्णुदत्तः। देवद्रोहादिपापोत्थगुल्मादिरोगशान्त्यै कर्मविपाकोक्तप्रायश्चित्तिभिः अस्ता निरस्ताः रुजः यस्य तं द्विजं। रसेन रसायनदानेन। पूर्वप्रकृतिं आरोग्यं निन्ये। कमिव भवार्तमिव, यथा भवरोगार्तं दृष्ट्वा कश्चित्परमकारुणिको ज्ञानरूपप्रायश्चित्तदानेन पूर्वकृतब्रह्महत्यात्महत्यादिपापनिरासेनान्ते रसेन नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्तादिलक्षणां प्रकृतिं नयति तथा। रसोऽत्र ब्रह्म। 'रसो वै सः रसꣳ ह्येवायं लब्ध्वानन्दीभवति' इति श्रुतेः॥ (एवं सप्त गाथा उक्ताः) ॥६७॥

**गाथांतिमाथार्भक आस योगभ्रष्टो द्विजस्योज्झितभोगसङ्गः॥**
**संसर्गहृत्यै कृतदुष्टचेष्टः संबन्धभीत्यास्य गुरुर्न चेष्टः॥ ६८॥**

'अथ हास्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इति श्रुतेर्ज्ञानिनोऽपीषदन्तरत्वे न सर्वथा भयनिवृत्तिरिति कथयितुं गाथांतरमाह—अथान्तिमा गाथा कथ्यते। कश्चन योगभ्रष्टः द्विजस्यार्भकः आस। उज्झितः त्यक्तः भोगसङ्गो येन सः लोकसंसर्गहृत्यै कृताः दुष्टाः मलमूत्रोत्सर्गभक्षणरूपाश्चेष्टा येन सः। अयं पितेयं मातेति संबन्धभीत्यास्य योगभ्रष्टस्य गुरुः पिता मातापि न चेष्टो बभूव॥ ६८॥

( अनुष्टुप् )

**अन्तःसङ्गविसर्गेण तस्य व्यस्य भयं नयं॥**
**आदेश्य विष्णुदत्तस्तं सतीं प्रकृतिमानयत्॥ ६९॥**

विष्णुदत्तमाहात्म्यं श्रुत्वा तत्पितरौ तं बालं तद्गृहं नीत्वा प्रार्थयामासतुः। तदा विष्णुदत्तः अन्तःसङ्गत्यागेन तस्य भयं व्यस्य, दूरीकृत्य। अलेपवादाश्रयेण स्वातन्त्र्यलक्षणं नयं आदेश्योपदिश्य। तं, सतीं, दुश्चेष्टारहितां प्रकृतिं आनयत्॥ ६९॥

फलितमाहानुष्टुभा—

**आर्ये पर्यवसानन्तु शास्त्राणां स्रोतसामिव ।**
**सिन्धौ ब्रह्मणि दभ्राणामदभ्राणां परेऽद्वये ॥ ७० ॥**

उपसंहरति–आर्येति । हे आर्यार्जुन । दभ्राणामदभ्राणां स्वल्पानां महतां च शास्त्राणां तु, स्रोतसां सिन्धाविव परे ब्रह्मणि पर्यवसानं विद्धि ॥७०॥

किं तद्ब्रह्मेत्यत आह– -( शार्दूलविक्रीडितवृत्तम् )

**ब्रह्मैवैकमिदं पुराद्वयमजं यन्माययोज्जृंभितं**
**रूपाख्यात्मकमेतदत्र सदसत्तत्कार्यकं कार्यकृत् ॥**
**मिथ्याप्येतदनुप्रवेशत इतः सत्यादिरूपं परं**
**तत्त्वं विद्धि धिया सुखी भव कृतो योगेन भोगेन किम् ७१**

इदं प्रत्यक्षादिप्रमाणगम्यं नामरूपात्मकं जगत् । पुरा, सृष्टेः पूर्वं । अजं, जन्मादिविकारशून्यं । अद्वयं ब्रह्मैवैकमासीत् । ऐक्यावधारणाद्वैत-प्रतिषेधबोधकैरेकमेवाद्वितीयमिति पदैः सजातीयविजातीयस्वगतभेद-शून्यं ब्रह्मोक्तं । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'इति श्रुतेः । ननु मायासत्वे कथमद्वयत्वमितिचेच्छक्तित्वेनावस्तुत्वेन च मायायाः पृथ-ग्गणनानर्हत्वाद्ब्रह्मैकमेव । अस्त्वेव तथा पुराधुना तु सामानाधिकरण्येन द्वैतं प्रतिभातीति चेत्सामानाधिकरण्यं तु बाधायामप्युपपद्यते । यस्त्वदीयश्चोरः सः स्थाणुरितिवत् यत्परिदृश्यते तन्मायैव न वास्तवमिति तात्पर्यं । तथाहि गौडपादाचार्याः ॥ 'एकमेवेति चाम्नानादिन्द्रो मायाभिरित्यपि ॥ अजाय-मानो बहुधा जायते माययैव तु' इति । किं तद्ब्रह्म ईक्षणपूर्वकं यन्मायया रूपाख्यात्मकं नामरूपात्मकमेतत् ब्रह्मादिस्तंबपर्यन्तं उज्जृंभितं । अत्रा-स्मिन्नधिष्ठाने ब्रह्मण्येकदेशे सत्, कार्यं, असत्कारणं, प्रकृतिमहत्तत्त्वा-हंकारतन्मात्रारूपं, तद्विकारजातं च, तथा तत्कार्यं स्थूलभूतचतुर्दशलोक-तदन्तस्थसर्वप्राणिजातं भोजनगमनादिकार्यकृदपि मिथ्या मृषैव। मिथ्या चेत्कथं कार्यकृदिति चेत्सत्यं। मिथ्याप्येतद्ब्रह्मानुप्रवेशात एव कार्यकृत् न स्वतः । यथा राजमुद्राङ्कितकूटकार्षापणादेः सत्यत्वेन व्यवहारसिद्धि-

स्तथा ब्रह्मानुप्रवेशात्तत्कार्यकृत्। ब्रह्मानुप्रवेशः श्रूयते च 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादि। इतः पूर्वोक्तात्प्रकृतिविकृतिसहितात्सर्वस्माद्भूतजातात्परं असंगं यत्सत्यज्ञानानन्दरूपं तत् त्वं, चिदंशो देहेन्द्रियमनःप्राणाहंकारविलक्षणः प्रत्यगात्मासि। एतत्सूक्ष्मं गूढं वस्तु धिया विद्धि। ननु 'न तत्र चक्षुर्गच्छति' इति निषेधात्कथं धियावगन्तव्यं। बाढं, न तत्र चक्षुरित्यादिना फलव्याप्तिर्निषिद्धा। यदुक्तं 'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता। स्वयं स्फुरणरूपत्वादाभासो नोपयुज्यते' इति। श्रुतिश्च 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुध्या' इति। किं ज्ञानेनेत्यत आह—योगेन वक्ष्यमाणेन सुखी निरतिशयानन्दरूपः, कृती कृतकृत्यश्च भव। 'एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' इति स्मृतेः। एवं महालाभे राज्यादिभोगेन किं प्रयोजनं न किमपीति भावः॥ ॥ ७१ ॥

कोऽसौ योग इत्यत आह—( उपजातिवृत्तम् )

**यमाद्यभिज्ञोऽन्वहमासनज्ञः पीत्वेडयासुं कृतकुम्भकोऽर्कात्।**
**त्यक्त्वा पुनर्व्यस्तमिति त्रिकालं कालं त्रिमास्या स जयेन्नृपालम्**

अन्वहं, अहन्यहनि सर्वदेत्यर्थः। यमनियमाभिज्ञः, पद्माद्यासनज्ञः, इडयासुं प्राणं पीत्वापूर्य, जालंधरबन्धपूर्वकं कृतः कुंभको येन सः, ततोऽर्कात्तदुपलक्षितया पिङ्गलया, त्यक्त्वा। पुनर्व्यस्तं विपरीतं यथा तथाभ्यसेत्। एतदुक्तं भवति। पिङ्गलया प्राणमापूर्य कुंभयित्वेडया शनैरेव विरेचयेन्न तु हठात्। हठात्कृते रेचके बलहानिप्रसङ्गात्। अथवा व्यस्तं बहिः कुंभकं वाभ्यसेत्। इत्येवंप्रकारेण त्रिकालं अभ्यासमाचरेत्। अनुक्तापि कुंभकसंख्या विंशतिर्ज्ञेया। पुराणान्तरे तथा दृष्टत्वात्। हे नृपार्जुन। त्रिमास्याभ्यासादलमत्यर्थं स योगी कालं जयेत् समाहितो भवेत्॥ ७२ ॥

( उपजातिवृत्तम् )

न योगसिद्धिं घटशोधनाज्ञस्त्रिबन्धयुक्ताष्टककुंभकाज्ञः ॥
उपैति मुद्रादशकानभिज्ञो विज्ञोऽपि नादश्रवणानभिज्ञः ७३

घटशोधनाज्ञः, देहशुद्धिमजानन्। मूलोड्याणनजालन्धरबंधयुक्तसूर्यभेदादिकुंभकाज्ञः, शक्तिचालनादिमुद्रादशकाज्ञः, अनाहतनादानभिज्ञश्च, स्वयं विज्ञोऽपि योगसिद्धिं जीवन्मुक्तिलक्षणां नोपैति ॥ ७३ ॥

अवधिमाहानुष्टुभा--

प्राणायामोण्डगः प्राणः सपञ्चविपले पले ॥
प्रत्याहारादयो ज्ञेया द्वादशघ्नोत्तरोत्तरम् ॥ ७४ ॥

पञ्चविपलसहिते द्वे पले। अत्यन्तसंयोगे द्वितीया। तावत्कालपर्यन्तं, अण्डगः ब्रह्मरन्ध्रगो यदि प्राणो भवेत्तर्हि प्राणायामो भवेत्। न तु केवलमुदरमध्य एव निरोधमात्रेणेत्यभिप्रायः। द्वादशघ्नोत्तरोत्तरं प्रत्याहारादयो ज्ञेयाः। पञ्चविंशतिपलैः प्रत्याहारः। पञ्चनाडीभिर्धारणा। अहोरात्रेण ध्यानं। द्वादशदिनैः समाधिरिति ज्ञेयं ॥ ७४ ॥

प्रत्याहारलक्षणमाहानुष्टुभा—

जिते प्राणे हृदार्थेभ्यः प्रत्याहृत्याखिलेन्द्रियम् ॥
अविक्षिप्तं स्थिरीकुर्यान्मन आत्मन्यचञ्चलम् ॥ ७५ ॥

प्राणे जिते सति वशीकृते सति। हृदा, सत्वप्रधानेन चित्तेनार्थेभ्यः शब्दादिविषयेभ्यः। अखिलेन्द्रियं, सर्वाणि इन्द्रियाणि। प्रत्याहृत्येति प्रत्याहार उक्तः। अविक्षिप्तं, विक्षेपो विषयान्तरगमनं तद्रहितं यथा तथा। अचञ्चलं, प्रशान्तं शान्तरजसं मन आत्मनि स्थिरीकुर्यात् इयं धारणा ॥ ७५ ॥

( गद्यम् )

तदनु श्रुत्यनुकूलयुक्त्यनुसारी गुरूक्तं षड्लिङ्गवित्तं भागत्यागलक्षितं सोऽहमात्मेत्यभेदतः श्रुतं परात्मैकत्वं विजातीय-

**प्रत्ययनिरासपूर्वकं सजातीयप्रत्ययप्रवाहीकरणमनुक्षणं विपर्यासनिरासकृन्निदिध्यासेत् ॥ ७६ ॥**

तदनु, मनःस्थिरीकरणानन्तरं। 'नैषा तर्केण मतिरापनेया' इति केवलतर्कनिषेधश्रवणात् 'श्रुतिमतस्तर्कोनुसन्धीयताम्' इति पूर्वाचार्योक्तत्वाच्छ्रुत्यनुकूलयुक्त्यनुसारी अधिकारी। गुरुणोक्तं न तु स्वतो दृष्टं। 'आचार्यवान्पुरुषो वेद' इति श्रुतेः। उपक्रमादिषड्विधलिङ्गैस्तात्पर्यावधारणेन वित्तं, ज्ञातं। विरुद्धवाच्यांशत्यागाविरुद्धलक्ष्यांशग्रहणरूपभागत्यागलक्षणया लक्षितं। सोऽहमात्मेत्यभेदतोऽखण्डैकरसत्वेन नीलोत्पलविलक्षणेन श्रुतं, श्रुत्या ज्ञापितं। परं ब्रह्म आत्मा प्रत्यक्च, तयोरेकत्वं। असज्जडदुःखलक्षणविजातीयमायिकप्रत्ययनिरासपूर्वकं सत्यज्ञानानन्दादिसजातीयप्रत्ययप्रवाहीकरणं अखण्डतैलधारावत्सांतत्येन चिन्तनं। अनुक्षणं विपर्यासनिरासकृन्निदिध्यासेत्। ध्यानप्रयोजनं विपर्यासनिरासः। यदुक्तं 'विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्यये' इति ॥ ७६ ॥

( अनुष्टुब्वृत्तम् )

**उपस्थिता इहाप्येताः सिद्धयो याः कुबुद्धयः ॥**
**ते भोगबुद्ध्याददते नृप तास्त्यज तापदाः ॥ ७७ ॥**

हे नृप। कुबुद्धयो मन्दबुद्धयो ये ते भोगबुद्ध्या याः आददते। इह मोक्षमार्गे ता एताः सिद्धयः यद्यप्युपस्थिता भवन्ति तथापि परिणामे तापदास्ताः त्यज। दूरान्वयी ॥ ७७ ॥

अभ्यासपूर्वकं फलमाह शार्दूलविक्रीडितेन—

**विक्षिप्तं शमयेत्समाधिसमये चित्तं लये बोधये-**
**दात्मन्येव न चालयेत्तदभये संस्थं न चास्वादयेत् ॥**
**मध्येसाररसं रसं परमितं निर्वातदीपस्थितं**
**चित्तं संयमितं तदेव हि मतं शान्तं समाधिं गतम् ॥ ७८ ॥**

समाधिसमये विक्षिप्तं चित्तं शमयेत्। लये स्वापे गम्यमानं बोधयेत् च तच्चित्तं अभये आत्मन्येव संस्थं न चालयेत्। मध्येन्तरालावस्थायां असाररसं नास्वादयेत्। एवं लयविक्षेपकषायरसास्वादेभ्यो रक्षितं चित्तं निर्विघ्नेन संयमितं निवातदीप इव स्थितं चेत्तदेव हि समाधिं गतं अत एव परं रसं परमानन्दं इतं गतं विद्यात्। तदेव हि निश्चयेन मतं श्रीकृष्ण-शेषपूर्वाचार्याणामिति शेषः। 'दीपोपमेनेह युक्तः प्रपश्येत्' 'यथा दीपो निवातस्थ' इत्यादिश्रुतिस्मृतिभ्यः ॥ ७८ ॥

( अनुष्टुप् वृत्तम् )

योगोयं दुःखसंयोगवियोगो भोगसंगहृत्।
हृद्दर्पसर्पसर्पघ्नः सुकृताढ्यः कृतान्तकृत् ॥
ब्रह्ममूर्तिः शून्यवृत्तिर्यतिः स्वात्मरतिः कृती ॥
भिन्नसंशयहृद्ग्रन्थिः सद्गतिर्मेऽतिवल्लभः ॥ ७९ ॥

ब्रह्मैव मूर्तिः यस्य सः, न तु ब्रह्मवित्। शून्या वृत्तयो यस्य सः। स्वात्मनि रतिर्यस्य सः न विषयरतिः। भिन्नाः संशयाः हृद्ग्रन्थिश्च यस्य सः। सति ब्रह्मणि गतिर्यस्य सः सद्गतिः। ईदृक् कृती कृतकृत्यो यतिः मे अतिवल्लभः। श्रुतिश्च 'भिद्यते हृदयग्रन्थिः' इत्यादिः। स्मृतिश्च 'प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः' इति ॥ ७९ ॥

प्रारब्धाय तनुर्यस्य जनुर्यस्य पुनर्न हि ॥
न हीयतेऽस्य महिमा हिमांशुकुलजाशुभैः ॥ ८० ॥

ज्ञानमहिम्ना संचितक्रियमाणकर्मण एव लयः प्रारब्धं त्ववशिष्यत इत्याह–प्रारब्धाय प्रारब्धमेव भोक्तुं। तनुर्यस्य बाधितानुवृत्त्या तिष्ठति। तर्हि ततः पुनर्जन्म वा नेत्याह यस्य पुनर्जनुर्जन्म न हि भविष्यति। अविद्याकामकर्मबीजाभावात्। हे हिमांशुकुलजार्जुन। अशुभैः उपलक्षणाच्छुभैश्च कर्मभिः अस्य ज्ञानिनो महिमा न हीयते 'एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्' इति श्रुतेः ॥ ८० ॥

राजन्युञ्जन्स्त्वमप्येवं कार्तवीर्य कृती भव ॥
भवदाज्ञा मतेत्युक्त्वा गत्वा दध्यौ गुहां महान् ॥८१॥

हे कार्तवीर्य राजन्। त्वमप्येवं युञ्जन्नभ्यसन्कृती कृतकृत्यो भव। इति श्रीदत्तगुरुणोक्तः महान् अधिकारी अर्जुनः भवदाज्ञा मे मतेत्युक्त्वा प्रणम्य गुहां गत्वोक्तप्रकारेण दध्यौ ॥ ८१ ॥

( अनुष्टुप् वृत्तम् )

भूयो भूयोऽभ्यसन्सभ्यस्त्रिमासं स समाहितः ।
तच्छशंसैत्य गुरवे रवेस्तुल्याय सन्नतः ॥ ८२ ॥

स सभ्योऽर्जुनः पुनः पुनरभ्यसन् त्रिमासं समाहितोऽभूत् तत उत्थाय गुरुसमीपमेत्य सम्यङ् नतः सन् रवेस्तुल्याय गुरवे श्रीदत्तात्रेयाय तच्छशंस कथयामास ॥ ८२ ॥

( अनुष्टुप् वृत्तम् )

भुक्तो गुर्वाज्ञयासक्तो योगयुक्तोऽभवत्पुनः ।
भक्तो युक्तोऽपि वर्षेण हर्षेणोत्थापितः सता ॥ ८३ ॥

असक्तो विषयासक्तिरहितो। गुर्वाज्ञया भुक्तोऽर्जुनः पुनर्योगयुक्तोऽभवत्। तदा युक्तोऽपि एकवर्षं समाधिस्थोऽपि भक्तोऽर्जुनः सता भगवता श्रीदत्तात्रेयेण वर्षेण हर्षेणोत्थापितः न तु स्वयमुत्थितः ॥८३॥

गुरुराह महामतेऽत्र ते वद किं वा अनुभूतमुद्गते ।
न रहो हि चिरं परंतप स्थितिरुर्वीश विना परं तपः ॥८४॥

गुरुः श्रीदत्त आह। तमिति शेषः। उत्कृष्टा गतिर्यस्य तत्संबुद्धौ। महती मतिर्यस्य तत्संबुद्धौ। हेऽर्जुनात्र किं अनुभूतं तत् वै निश्चयेन वद। परान्कामादिशत्रून्तापयतीति तत्संबुद्धौ हे परंतप। हे उर्वीश योगभूमिपालक। हि यस्मात्परं तपो विना 'मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तप' इत्युक्तलक्षणं विना चिरं रहः एकान्तस्थितिर्न घटते अतः किमनुभूतं तद्वद ॥ ८४ ॥

उत्तरमाह द्वाभ्याम् –

**नृप आह महानुभाव ते कृपया मय्यहहा समाहिते ।**
**त्रिपुटीं न पटीयसी मतिर्धृतिमत्यप्यज वेद भेदहृत् ॥८५॥**

नृपः आह । हे महानुभाव । ते कृपया मयि समाहिते सति । पटीयसी अतिकुशला । धृतिमती धारणावत्यपि । द्वैतभेदहृदपि । मम मतिः सूक्ष्माग्र्या बुद्धिः ध्यातृध्यानध्येयलक्षणत्रिपुटीं न वेद ॥ ८५ ॥

**मनसा सह पञ्च पञ्च च प्रिय गावः स्थिरतां गता स्थिता ।**
**मतिरप्यतिहर्ष उत्थितः स्मर एतामनुवृत्तिमीश्वर ॥ ८६ ॥**

हे प्रिय भगवन् । मनसा सह गावः, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि स्थिरतां गतानि । मतिरपि स्थिरतां गता । योगासिद्धिलक्षणमिदं । श्रुतिश्च 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते तामाहुः परमां गतिं ॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्' इति । इतोऽपि अतिशयितो हर्षो यस्य सोऽतिहर्षः उत्थितोऽहं हे ईश्वर एतां अनुवृत्तिं, वृत्तीनामनुवृत्तिं स्मरे । ननु स्मरणस्यानुभवपूर्वकत्वात्तदानीं वृत्त्यनुपलंभात्कथं अनुवृत्तिस्मरणमिति चेत्तदानीं विशेषवृत्त्यभावेऽपि प्राथमिकप्रयत्नात्तत्र सामान्येनावस्थानं स्मर्यते । 'वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः । संस्कारादनुमीयन्ते व्युत्थितस्य समुत्थितात् । वृत्तीनामनुवृत्तिस्तु यत्नात्प्राथमिकादपि । अदृष्टासकृदभ्याससंस्कारसचिवाद्भवेत्' इति ॥ ८६ ॥

**इमं मिमंक्षयानन्दह्रदमेत्य सुखांबुधिम् ।**
**गतोऽस्मि विगतोपाधिराधिव्याधी न मे सुधीः ॥ ८७ ॥**

त्रिविधतापशान्तये मिमंक्षया स्नानेच्छया । इमं योगिगोचरं आनन्दह्रदमेत्य विगतोपाधिः सन्सुखांबुधिं, निरतिशयानन्दं गतोऽस्मि । भो सुधीः आधिव्याधी मे न शिष्टौ ॥ ८७ ॥

आलिंग्यालिंग्यधीशस्तं शस्तं प्राह नृपार्जुन ।
प्रजाः प्रजाधिभूः शाधि गच्छ गच्छ न ते द्वयम्॥८८॥

आलिंगीनां परमहंसानामधीशः श्रीदत्तः । तमर्जुनमालिंग्य । शस्तं प्रशस्तं यथा तथा प्राह । हे नृपार्जुन त्वं प्रजाधिभूः प्रजानायकः । अतः प्रजाः शाधि नीत्या शिक्षय । गच्छ गच्छ, राष्ट्रमिति शेषः । तर्हि लेपो भवेदत आह विरक्तस्य ते द्वयं, द्वैतं तत्कृतहर्षामर्षादि नास्ति ॥ ८८ ॥

कथं संगो न बाधक इत्यत आहानुष्टुभा—

अन्तःसङ्गविहीनस्य बहिःसङ्गो न बाधकः
धर्मं चर परार्थं तु क्वचिद्व्यस्तं बहिश्चर ॥ ८९ ॥

रागादिपरिहारेणान्तःसङ्गविहीनस्य बहिःसङ्गो बाधको न भवेत् । स्वयं कृतार्थोऽपि त्वं परार्थं लोकसङ्ग्रहार्थं धर्मं चर । एवं सन्नपि लोकबाधानिरासार्थं तु कचिद्बहिर्व्यस्तं विपरीतं चर आचर । यदुक्तं 'तथा वर्तेत वै योगी सतां धर्ममदूषयन् । यथा जनावमन्येरन्' इत्यादि ॥ ८९ ॥

भजांघ्रिं मे यथा देही यजाद्यं मां यथा गृही ।
त्यजासक्तिं नष्टभव द्विजादेरर्चको भव ॥ ९० ॥

यथा देही दास्येन भजते तथा देहाभिमानरहितोऽपि परप्रेम्णा मेंऽघ्रिं पदं भज । फलार्थी यथा गृही तथा फलाभिमानरहितोऽप्याद्यं सर्वकारणं मां यज्ञैर्यज । हे नष्टभव, निवृत्तसंसारभ्रम । कर्मादावासक्तिं त्यज । द्विजगुर्वादेरर्चको भव ॥ ९० ॥

तथेत्याज्ञां प्रगृह्यापि श्लथच्चित्तोंघ्रिदत्तदृक् ।
दत्तदृग्जातमुदयं नैच्छत्त्यक्तुं महोदयम् ॥ ९१ ॥

तथेत्याज्ञां प्रगृह्यापि अयं राजा प्रेमभरातिरेकेण श्लथत् चित्तं यस्य । अङ्घ्र्योर्दत्तपदयोर्दत्ता दृग्येन सः । दत्तदृशा दत्तदर्शनेन जाता मुत्

आनन्दो यस्य स तथाभूतोऽर्जुनः। श्रीदत्तसंयोगलक्षणमहोदयं त्यक्तुं नैच्छत्॥ ९१ ॥

सदयं हृदयं यस्य तेन प्रस्थापितोऽपि सः।
वाचा मोचातिरसया स्थितश्चित्र इवाग्रतः॥ ९२॥

यस्य सदयं हृदयं तेन। मोचा, पक्वं रंभाफलं। ततोप्यतिरसया मिष्टवाचा गच्छ गच्छेति प्रस्थापितोपि सोऽर्जुनः चित्र इव काष्ठपुत्तिकेवाग्रतः श्रीगुरोरग्रभागे स्थितः॥ ९२ ॥

( उपजातिवृत्तम् )

प्रस्थापयामास पुनः सहासं प्रभुस्ततः प्राप नृपः स्ववासम्।
नवोदयं चंद्रमिव प्रजास्तं पपुर्दृशागाच्च तदाधिरस्तम्॥९३॥

ततः पुनः श्रीदत्तः। तमर्जुनं हासेन सहितं यथा तथा प्रस्थापयामास। अयं भावः। मत्प्रसादादतीतमायोऽयं नेच्छत्यतः कंचित्कालं परोपकारार्थमेतेन राज्य एव स्थातव्यमिति प्रभुणा किञ्चिन्मायालेशः प्रेरित इति वक्तुं सहासमित्युक्तं 'हासो मोहकरी माया' इति प्रसिद्धेः। ततः नृपः स्ववासं राष्ट्रं प्राप। नवोदयं चन्द्रमिव तं प्रजाः दृशा पपुः। तदाधिः तासां आधिश्चास्तं अगात्॥ ९३ ॥

( उपजातिवृत्तम् )

चक्रे स यज्ञाञ्छशिवंशकेतुरगर्वकामः सुरवंशकेतुः।
अकम्पतर्तेऽप्यनिलं तदैव स्थिरासनस्थोऽपि भृशं सदैवः॥९४॥

शशिवंशकेतुः सोमवंशध्वजः। अगर्वकामः अभिमानफलाभिसन्धिरहितः। सः यज्ञान् चक्रे। तदा सदैवः दैवैः सहितः। सुरवंशकेतुरिन्द्रः स्थिरासनस्थोऽपि अनिलमृतेऽपि वायुना विनापि भृशमकम्पत। वंशयष्टिध्वजस्तु वातेन कम्पते नायं तथेति कारणेन विना कार्योत्पत्तिर्विभावना यज्ञैरिष्ट्वैवायं मत्पदं अपहरिष्यतीति भीत्या देवेन्द्रोप्यकंपतेति भावः ९४

( उपजातिवृत्तम्- )

**तत्सत्त्वहृत्यै सुरनोदितोऽर्को भूत्वातिथिः प्राप नृपाधिपौकः ।**
**नृपादुपादाय स वृक्षभिक्षां नृपं स निन्ये मुनिशापशिक्षाम् ॥९५॥**

तस्यार्जुनस्य सत्त्वहृत्यै सुरैरिन्द्रादिदेवैर्नोदितोऽर्कः सूर्यः अतिथिर्भूत्वा नृपाधिपस्य ओकः गृहं प्राप । स नृपात् सप्तद्वीपवृक्षभिक्षां उपादाय नृपमर्जुनं मुनिशापशिक्षां निन्ये । एवं हि स्मर्यते सूर्यो वृक्षभिक्षामुपादायार्जुनायाक्षय्येषुधीर्ददौ ततोऽर्जुनः सूर्याज्ञया तान्बाणान्पञ्चशतधनुर्भ्यो विससर्ज तैर्बाणैर्वृक्षाः शुष्कतां गतास्तानग्निरूपेण सूर्योऽभक्षयत् तदा समाधिविरमे वसिष्ठो मुनिः दग्धान्स्वाश्रमवृक्षान्दृष्ट्वा शिष्यमुखेनार्जुनबाणवर्षं श्रुत्वा कुपितः सन् विप्रहस्तेनायं मरिष्यतीति शशापेति ॥ ९५ ॥

( गद्यम् )

**ततो दैववशादुद्धतेन तेन पराजिता देवता अपराजितमुपेत्याभिष्टूय ख्यात्याधिकात्तन्मृतिं कल्पयामासुः ॥ ९६ ॥**

ततो विधिवशादुद्धतेन तेनार्जुनेन पराभूता इन्द्रादिदेवाः । अपराजितं विष्णुं उपेत्य, तमभिष्टूय ख्यात्याधिकात्तस्यार्जुनस्य मृतिं मरणं कल्पयामासुः ॥ ९६ ॥

( गद्यम् )

**अथ ह किल गाधिभूभृति वने निवसति सति परिणयार्थं भृगुणादिष्ट ऋचीको योगप्रभावाद्वरुणादाहृतश्यामकर्णाश्वसहस्रं शुल्कत्वेन राज्ञे प्रतिपाद्य स्त्रीमुख्यां सत्यवत्यभिख्यां तत्तनयामुपयेमे ॥ ९७ ॥**

अथ विष्णुवरदानानन्तरं कथान्तरमुपक्रमते । ह किलेति निपातौ प्रसिद्धिद्योतनार्थौ । अपुत्रे गाधिभूभृति वने निवसति सति त्वं विवाहं कुर्विति परिणयार्थं भृगुणा आज्ञप्त ऋचीकऋषिः योगसामर्थ्यात् वरुणं

गत्वा वरुणादानीतश्यामकर्णाश्वसहस्रं शुल्कत्वेन गाधिराज्ञे दत्वा स्त्रीवर्यां सत्यवतीनामिकां तस्य राज्ञस्तनयां उपयेमे ॥ ९७ ॥

( गद्यम् )

**स्वस्या मातुश्चानुरूपपुत्राप्तये स्नुषार्थितेन भृगुणा कारितपुत्रकामेष्टिचरुप्राशनव्यत्ययेन जनिष्यमाणपुत्रव्यत्यासं निवेद्य स्नुषाप्रार्थनया तत्पुत्रस्यर्षित्वं पौत्रस्य क्षत्रत्वं चाकारि ॥९८॥**

आत्मनो मातुश्च योग्यपुत्राप्तये भृगुणा कारितपुत्रकामेष्टिसंबन्धिचरुप्राशनस्य मातुश्चरुः पुत्र्या पुत्र्याश्च मात्रा भक्षित इति व्यत्ययेन जनिष्यमाणपुत्रयोर्व्यत्यासं स्नुषायै निवेद्य स्नुषाप्रार्थनया मैवं क्षत्रः पुत्रो भवतु कामं पौत्रो भवत्वित्येवंरूपया तस्याः पुत्रस्यार्षित्वं पौत्रस्य क्षत्रत्वं च भृगुणा कल्पितं ॥ ९८ ॥

**विश्वामित्रो गाधिपुत्रो मन्त्रदृक्क्षत्रियोऽपि सन् ।**
**चरुप्रभावात्तपसा ब्रह्मर्षित्वं गतो मतः ॥९९॥**

गाधिराजपुत्रः विश्वस्य मित्रः विश्वामित्रः । मित्रे चर्षावित्यानङ् । क्षत्रियोऽपि सन् चरुप्रभावात्तपसा ब्रह्मर्षित्वं गतः । मतः सर्वमान्यः मन्त्रदृग् मन्त्रद्रष्टा बभूव । 'तान्विश्वामित्रेण दृष्टान्वामदेवोसृजत' इत्यादिश्रुतेः ॥ ९९ ॥

**जमदग्निः सत्यवत्याः शम्या अग्निरिवाभवत् ।**
**शिवांशो मन्त्रदृग्वव्रे शिवांशां रेणुकां सतीम् ॥१००॥**

शम्या अग्निरिव तेजस्वी सत्यवत्याः सकाशात् शिवांशः जमदग्निरभवत् । स मन्त्रदृक् मन्त्रद्रष्टा । शिवांशां पार्वतीकलां रेणुकां सतीं वव्रे ॥ १०० ॥

**पञ्चासन्तत्सुताः ख्याताः पञ्चाग्नय इवार्चिताः ।**
**रामोऽन्तिमोऽत्र परमो धीरो वीरोऽतिशूरजित् ॥१०१॥**

दक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यपञ्चाग्नय इव तयोः सुताः ख्याताः लोकप्रथिताः। अर्चिताः लोकपूजिताः। पञ्च आसन्। अत्र एषां मध्येऽन्तिमः धीरः समरधीरः। वीरः शत्रुजेता। नाम्ना रामः परमः विष्णुरवतीर्णः 'अग्निर्वै देवानामवमो विष्णुः परम' इति श्रुतेः॥ १०१॥

( आर्या )

सस्त्रीकदेवगायकरतिकौतुकदृष्टिदूषिता माता॥
ताताज्ञप्तेन हता येन स साक्षात्पयोब्धिजामाता १०२

गङ्गामध्ये नावि स्त्रीसहितगन्धर्वरतिदर्शनदूषिता माता रेणुका। तातेन जमदग्निना इमां दुष्टां जहीत्याज्ञप्तेन येन हता स रामः साक्षात्पयोब्धिजामाता विष्णुरेव॥ १०२॥

तातप्रसादतः पुनरपि येनोत्थापिता मृता माता॥
प्राप्ता चायुष्मत्ता जयितास्य गुणस्य को भवेन्माता॥

पूर्वं तातेन ज्येष्ठपुत्रेभ्य उक्तं इमां घातयतेति। तैर्नेति प्रत्युक्तेन तातेन(ते)दग्धाः। रामेण तु सद्य एव हता ततो जमदग्निः प्रसन्नोऽभून् तदा तातैतान्जीवयेति तातं प्रसादयामास तदा तातस्तान्जीवयामासेति पुराणे प्रसिद्धं। येन रामेण तातप्रसादतः मृतापि माता पुनरप्युत्थापिता। आयुष्मत्ता दीर्घजीवित्वं, सर्वत्र जयिता च प्राप्ता। अस्य रामस्य गुणस्य माता प्रमापकः को भवेत् न कोऽपि॥ १०३॥

( उपजातिवृत्तम् )

शिवाप्तविद्ये शिवतातभक्ते यातेऽटवीमाश्रमगः प्रसह्य।
जहार भूपोऽप्यृषिकामधेनुं निन्ये वशं यो निजकामधेनुम् १०४

अथार्जुनवधप्रसङ्गमाह—शिवाच्छङ्करादाप्ता विद्या येन तस्मिन्। शिवरूपितातस्य जमदग्नेर्भक्ते रामेऽटवीं वनं याते सति। जमदग्नेराश्रमगो भूपोर्जुनोऽपि प्रसह्य, हठादेव। मुनिकामधेनुं जहार। कोऽसौ यः

प्रसिद्धः कार्तवीर्योऽर्जुनः निजकामधेनुं भक्तकामधेनुं दत्तं परभक्त्या वशं निन्ये ॥ १०४ ॥

( अनुष्टुप् )—

**रामः स्वमाश्रमं प्राप्य ज्ञात्वा धेनुं हृतां नृपं ।**
**हन्तुं प्राप तमालोक्य राजा बलमचोदयत् ॥ १०५ ॥**

स्पष्टम् ॥ १०५ ॥

( अनुष्टुप् )

**एतै रंहस्विगन्धर्वपदोत्क्षिप्तकुपांसुभिः ।**
**पांसुघ्न्यप्यमलापापा कृता मन्दाकिनी किल ॥ १०६ ॥**

कथं सैन्यमचोदयत् तदाह त्रिभिः । एतैः वक्ष्यमाणैः रंहस्विनो वेगिनश्च ते गन्धर्वा अश्वाश्च तेषां पदैः खुरैः उत्क्षिप्ताश्च ते कोः पृथिव्याः पांसवो धूलयस्तैः । पांसुघ्नी दोषहन्त्री । स्वयं अमलापि मन्दाकिनी वियद्गङ्गा । अपापा कृता । विरोधाभासोऽयं । अपगताः आपः यस्याः सा निरुदका कृता किलेत्यनयातिशयोक्त्याऽश्वबाहुल्यं द्योत्यते ॥१०६॥

( अनुष्टुप् )

**पद्मिभिः सप्तधोत्सृष्टैर्दानोदैश्च सुगन्धिभिः ।**
**मुनेः पृथ्वी गन्धवतीत्युक्तिः सार्था कृता स्फुटम् ॥ ७ ॥**

पद्मिभिर्गजैः सप्तधोत्सृष्टैस्त्यक्तैः सुगन्धिभिर्दानोदकैः । गन्धवती पृथ्वीति गौतममुनेरुक्तिः स्फुटं सार्था कृता ॥ १०७ ॥

( अनुष्टुप् )

**तयोस्तु कलहात्पूर्वमन्योन्यं विजिगीषताम् ।**
**स्यन्दनानामिभाश्वानां ध्वनीनां कलहो महान् ॥ ८ ॥**

तयोः रामार्जुनयोः कलहाद्युद्धात्पूर्वं अन्योन्यं परस्परं विजिगीषतां विशेषेण जेतुमिच्छतां । रथानां गजाश्वध्वनीनां च महान् कलह आसीत् ॥ १०८ ॥

( अनुष्टुप् )

विलोक्य गर्जदुद्वेलजलध्युपमितं चलम् ।
बालो मुनेर्बलमलं तुमुलं युयुधे बलात् ॥ ९ ॥

मुनेर्बालो रामः । गर्जन्चासौ उद्गतवेलजलधिश्च तेनोपमितं चलं बलं सैन्यं विलोक्य । बलात् पितृवरबलात् । अलं अत्यर्थं तुमुलं यथा तथा युयुधे ॥ १०९ ॥

(अनुष्टुप् )

वडवातनयः खण्डपिण्डाशीतीर्ष्ययागताः ।
वडवातनयाः खण्डपिंडाः संतो मृतं गताः ॥ १० ॥

अयं रामः वडवातनयोऽपि नास्मत्सदृशः किन्तु खण्डपिण्डाशी आकण्ठं खण्डलड्डुकभक्षक एवेतीर्ष्ययाऽऽगताः वडवातनया अश्वाः । अश्विनी विप्रभार्या च वडवेत्यभिधानात् । ते निषादिभिः सह, खण्डपिण्डा भग्नदेहाः सन्तो । मृतं मृतिं । नपुंसके भावे क्तः । मृता इत्यर्थः ॥ ११० ॥

( रथोद्धतावृत्तम् )

एकया परशुतिग्मधारया राम आगतमितस्ततो रयात् ।
पञ्चधारतुरगौघमोञ्जसा सञ्जघान घनगर्जनोऽञ्जसा ॥ १११ ॥

'आस्कन्धितं रोधितकं रेचितं वल्गितं प्लुतं । गतयोमूः पञ्चधारा' इत्युक्ताः पञ्चधारा गतयो येषां तेषां तुरगाणां ओघं । ओञ्जसा, झटिति । इतस्ततो रयाद्वेगादागतं । एकया परशोस्तीक्ष्णधारया । घनस्य गर्जनमिव गर्जनं यस्य स रामः अञ्जसा शीघ्रमेव सञ्जघान ॥ १११ ॥

( शार्दूलविक्रीडितवृत्तम् )

यद्भीत्या सरथे कृते च विरथेप्याधोरणैो रणे-
जघ्नेशेषबलं तदायुधमसृङ्नद्यस्ततः सुस्रुवुः ॥

चर्मावर्तयुता मृतेभपुलिनाश्छिन्नांघ्रिहस्ताहयो
घोरा आमिषकर्दमा हतहयग्राहाः शिरःकच्छपाः॥११२॥

यद्भीत्या रामभयेन, कर्त्रा। रथेन सहितः सरथो रथी तस्मिन्विरथे कृते सति। आधोरणे हस्तिपके। रणे अधः भूतले कृतेपि सति। तदायुधं परशुः। अशेषबलं जघ्ने। न तु रामस्य सङ्कटमुपस्थितमिति भावः। ततो रणात्। असृङ्नद्यः रक्तनद्यः। सुस्रुवुः। कथंभूताः चर्माण्येवावर्तास्तैर्युताः। मृतेभाः, मृतगजाः, पुलिनानि यासु ताः। छिन्नाः वीरादीनामंघ्रयो हस्ताश्च त एवाहयः सर्पा यासु ताः। आमिषमेव कर्दमो यासु ताः। हतहया एव ग्राहा नक्रादयो यासु ताः। वीरशिरांस्येव कच्छपा यासु ताः। अतएव घोरा भयंकर्यः॥ ११२॥

सैन्ये हतेर्जुन एत्य युयुध इत्याहानुष्टुभा—

किरीटी कुण्डली छत्री प्रतापी दुर्धरो रथी।
सहस्रकर एत्यात्र मित्रवद्युयुधेऽर्जुनः॥११३॥

किरीटादियुक्तोऽर्जुनः रणमेत्य। मित्रवद्युयुधे न तु शत्रुवत्। पूर्वमेव ख्यात्याधिकान्मे वधो भूयादिति प्रार्थितत्वाद्रामस्यापि विष्णुरूपत्वात्। यद्वा केयूरवान्मकरकुण्डलवान्किरीटीत्यादित्यहृदये उक्तत्वात् किरीटी कुंडली छत्री प्रकृष्टस्तापो यस्यात्युष्णोऽत एव दुर्धरः। रथी रथारूढः। 'हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्' इति श्रुतेः। सहस्रं कराः किरणाःयस्य सः ईदृशेन मित्रेण, द्युमणिना तुल्योऽर्जुनः॥११३॥

अर्जुनस्यार्जुनस्येव स्कन्धान्स्कन्धानिवाच्छिनत्।
रामो भूयोऽपि जातान्तान्तन्निर्गममशोषयत्॥११४॥

अर्जुनवृक्षस्येवार्जुनस्य स्कन्धान् शाखा इव स्कन्धान्भुजान् रामोऽच्छिनत्। छिन्ना अपि पुनरुत्पन्नाः। भूयो जातानपि तानाछिनत्। एवं पुनः पुनः। ततः क्रुद्धो राम आग्नेयास्त्रेण तेषां भुजानां निर्गमं उरःस्थितभुजोत्पादकं बीजं अशोषयत्॥ ११४॥

मम देहान्तकाल उपस्थित इति मत्वा तदार्जुनो भगवन्तं दध्या-वित्याहोपजात्या–

**तदास्मरद्दत्तमकुण्ठचित्तो येनापवर्गस्तु पुराप्युपात्तः ।**
**कृत्तोऽपि मूर्धा न नृपेण वित्तः स्वाभेदतो ध्यात इहापि दत्तः११५**

येनार्जुनेनापवर्गः मोक्षस्तु पुरापि पूर्वमेवोपात्तः, स तदाऽकुण्ठचित्तः सन्दत्तं अस्मरत् । इहाप्यन्तकालेऽपि स्वाभेदतः प्रत्यगाभिन्नपरमात्मरूपेण दत्तः ध्यातः । अतः नृपेणार्जुनेन रामपरशुधारया कृत्तोऽपि छिन्नोऽपि मूर्धा न वित्तः ज्ञातः, श्रीदत्तभावं गत इति तात्पर्यम् । स्मृतिश्च 'अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ॥ यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः' इति ॥ ११५ ॥

( अनुष्टुप् वृत्तम् )

**हत्वा नृपं गृहीत्वा गां राम आश्रममश्रमः ।**
**एत्य ताताय तत्प्राह स हाऽसहन आह तम् ॥ ११६ ॥**

स्पष्टम् ॥ ११६ ॥

असहनत्वमाह दशेति—( अनुष्टुप् )

**दशश्रोत्रियवद्राजा तद्धन्तुस्तीर्थसेवनात् ।**
**शुद्धिस्त इति रामोऽपि तथेत्युक्त्वा तथाचरत् ॥११७॥**

स्फुटम् ॥ ११७ ॥

क्षत्रकुलसंहरणहेतुमुपक्षिपति स्वागतया—

**अर्जुनस्य तनया अनयास्ते प्राप्य यत्र सह रेणुकयास्ते ।**
**योप्युपास्य विधिवज्जमदग्निं तं विजघ्नुररिवज्जमदग्निम् ११८**

योऽपि विधिवज्जमदग्निं प्रदीप्ताग्निं उपास्य । रेणुकया सह यत्रास्ते तं देशं । अनया अन्यायवर्तिनः । ते अर्जुनस्य सुताः । प्राप्य तं जमदग्निमरिवज्जघ्नुः ॥ ११८ )

( वंशस्थवृत्तम् )

तदा वियुक्तेश्वरतोकरेणुका सार्ता यथैका विपिने करेणुका ।
ममाधिभागो यदुपर्यदेवयत् स मे प्रियः क्वेति च पर्यदेवयत् ११९

तदा सा । वियुक्तः ईश्वरः पतिः तोकः पुत्रश्च यस्याः सा चासौ रेणुका च तथोक्ता । विपिनेऽरण्ये एका करेणुका हस्तिनी यथा तथार्ताभूत् । ममाधिभागोऽधिकं सौभाग्यं यदुपरि अदेवयत् चिक्रीड । सः मे प्रियः भर्ता क्वेति च सा पर्यदेवयत् विललाप ॥ ११९ ॥

विलापमाहार्याभिः—

अहहा हतास्मि दिष्ट(ष्टात्) भ्रष्टाप्ता रुष्ट एव मे स्मरहा ।
शरणं क्वापि न शिष्टं दृष्टं कष्टं परं वरं मरणम् ॥१२०॥

अहहेति खेदे । हा दिष्टा(द)हं हतास्मि । यतः भ्रष्टः आप्तः पतिर्यस्याः सा तथा । तस्मान्मे स्मरहा शिवः रुष्ट एव । शरणं रक्षिता क्वापि न शिष्टः । यतः परं कष्टं दृष्टं ततः मरणं वरं ॥ १२० ॥

हा नाथ शुद्धगाथ प्रियकथ कथमत्र शस्त्रदितगात्र ।
गात्रमिदं तेऽर्धं रतिपात्रं तिष्ठेत्पवित्रपरगात्र ॥ १२१ ॥

हा नाथ प्रार्थनीय । शुद्धाः गाथाः कथाः यस्य । प्रियाः कथाः वार्ताः यस्य । शस्त्रेण दितं छिन्नं गात्रं यस्य च तत्संबुद्धौ । पवित्राणि परगात्राणि येन तत्संबुद्धौ हे भर्तः। रतिपात्रं रतियोग्यमिदं तेऽर्धं गात्रं मद्देहमित्यभिप्रायः तिष्ठेत्किं अपि तु पतेदेव । 'अर्धो वा एष आत्मा पत्नीशरीरम्' इत्युक्तेः ॥ १२१ ॥

हतकायाप्तेन समं स्वर्यास्येऽद्यैव दैवहतकायाः ।
हतकार्तवीर्य इह मे नार्भोऽतोऽमी भवन्ति हतकायाः १२२

हतः कायो यस्यासौ आप्तः पतिश्च तेन समं सार्कं । स्वः स्वर्गं । अद्यैव यास्ये । परन्तु दैवहतकायाः भग्नदैवायाः मे । इह हतः कार्तवीर्योऽर्जुनो येन स ईदृशः मेऽर्भः रामः । इह न विद्यते । विद्यते चेत्तर्हि अतः अर्भतः

रामकरेणेत्यर्थः । अमी शत्रवः हतकाया भवन्ति । वर्तमानसामीप्ये वर्तमानवद्वा ॥ १२२ ॥

इति सत्यां रुदत्यां तत्पुत्रो राम उपेत्य तत् ।
सर्वं श्रुत्वानुतप्तः सन्प्राह गुर्वहितोऽस्म्यसन् ॥१२३॥

स्पष्टम् ॥ १२३ ॥

गुरोरहितत्वं दर्शयन्शत्रुघातं प्रतिजानीते रथोद्धतया –

हन्त हन्त बत तात तेऽहितो जात एष न सुतो यतो मृतः ।
त्वं ततःखलकुलातिलाञ्जलैः शुद्धिरस्य न पितस्ततोऽन्यतः १२४

हन्त हन्त बतेति खेदेतिदैन्ये च । हे तात एषः ते अहितः शत्रुर्जातः यतो निमित्तात्त्वं मृतस्तत एष ते सुतो न खलु । ततः खलकुलान्येवातिलास्तैःखलकुलतिलाञ्जलिभिः अस्य मम शुद्धिर्निष्कृतिः भो पितः ततोऽन्यतः प्रायश्चित्तादिभिर्नास्य शुद्धिः ॥ १२४ ॥

( उपजातिवृत्तम् )

इति प्रतिज्ञाय वधाय तेषां रामोऽचिराय प्रययावशेषां ।
धरां करिष्यन्ननृपां कृपांशमप्यस्पृशन्प्राप नृपाधिपार्भान् १२५

इति तेषां वधाय प्रतिज्ञाय तुमर्थाच्चेति चतुर्थी । रामोऽचिराय शीघ्रं अशेषां धरां अनृपां करिष्यन् । कृपालेशमप्यस्पृशन्सन्नर्जुनपुत्रान्प्राप ॥ ॥ १२५ ॥

कथं प्रापेत्यत आह प्रहर्षिण्या–

ब्रह्माण्डान्निजजठरस्थितानन्तान्विस्मृत्य प्रपदभराच्चरन्ननन्ताम् ।
तोयस्थान्तरिमिव चालयन्महात्मा जघ्नेरीन्सपदि महारिधामहात्मा ॥ १२६ ॥

निजजठरस्थितान् अनंतान्ब्रह्माण्डान्विस्मृत्य । चरन्वेगेन धावन् । तोयस्थां तरिं नावमिवानन्तां भूमिं प्रपदभरात् चालयन् । महान्व्यापक

आत्मा देहो यस्य सः । महान्तश्च तेऽरयश्च महारयः तेषां धाम प्रभावं हन्तीति महारिधामहः ईदृश आत्मा यस्य सः रामः । सपदि तत्क्षणं अरीनर्जुनपुत्रान्जघ्ने ॥१२६॥

कथं हतवानित्यत आह योगिन्या—

**अतितीक्ष्णपरश्वधेन ताननतानाशु रणे द्विधा कृतान् ।**
**भुवि भूतगणाय सोर्पयन्निनदो यस्य च गां व्यकम्पयत् १२७**

अतितीक्ष्णपरशुना द्विधा कृतान् अनताननम्रान् तान रिपून् रणे भुवि भूतगणाय बलित्वेन स आशु अर्पयत् यस्य च निनदः गां भूमिं स्वर्गं वा व्यकम्पयत् ॥ १२७ ॥

तदा मयूरोपि चकित इत्याह मत्तमयूरया—

**विद्युद्भास्वत्स्वं परितोस्त्रं विधुनानं मेघध्वानं मेघरुचोऽलं हृत-**
**मानम् । दृष्ट्वा मेघो भुव्यवतीर्णः किमिहास्ते मत्वापीत्थं**
**मत्तमयूरा ननृतुस्ते ॥ १२८ ॥**

विद्युद्वत् भास्वत् देदीप्यमानं अस्त्रं परश्वायुधं स्वं परितः स्वस्य परितः आसमंतात् विधुनानं चालयन्तं । मेघस्य ध्वान इव शब्द इव ध्वानो यस्य तं मेघरुचः मेघकान्तेः हृतः मानो येन तं अतिश्यामं तं रामं दृष्ट्वा अयं मेघः इह भुवि आस्ते किं इत्थं मत्वापि ये मत्तमयूरास्ते ननृतुः ते हि मेघालोकनान्नृत्यन्ति । गुरुरपि मत्तमयूरा । सूच्यर्थसूचनान्मुद्रा ॥ १२८ ॥

(अनुष्टुप्)

**स जयश्रियमुद्वाह्य प्राहाम्बामेत्य भूभृतः ।**
**त्रिसप्तकृत्वा हत्वास्त्रैस्तर्पये पितृमुक्तये ॥ १२९ ॥**

स्फुटार्थः ॥१२९॥

( अनुष्टुप् )

इति प्रतिज्ञां कुर्वन्तं सुतं प्राह प्रसूः पुरा ।
कृत्वौर्ध्वदैहिकं नौ त्वं प्रतिज्ञातमृतं कुरु ॥ १३० ॥

स्फुटार्थः ॥ १३० ॥

( अनुष्टुप् )

तुलायामेकतस्तातं मृतं मामेकतस्तथा ।
धृत्वावाचीं दिशं याहि यत्र श्रोष्यसि खाद्वचः ॥१३१॥

अवाचीं दक्षिणां । खादाकाशात् ॥ शेषं स्फुटम् ॥ १३१ ॥

( अनुष्टुप् )

तत्राचार्यं विमातस्वयं लब्ध्वानुगमनं मया ।
कार्यं नौ कर्म ते कार्यं कार्यं सिद्ध्येत्ततस्तव ॥१३२॥

स्फुटः ॥ १३२ ॥

( उपजातिः )

तथेति रामोऽपि तथैव गत्वा श्रुत्वा खवाणीं रमणीं गुणीशः ।
गत्वाश्रमं मातृगिरा पवित्रं दृष्ट्वाश्रमं तत्र मुदात्रिपुत्रम् १३३
विचित्रगात्रं शतपत्रनेत्रं वृत्रघ्नमित्रं करुणैकपात्रम् ।
अङ्के कलत्रं परिगृह्य चित्रं क्रीडन्तमेतं स ददर्श सत्त्राम् ॥१३४॥

गुणिनामीशः रामः तथेति मातृवचः स्वीकृत्य तथैव तेन प्रकारेणैवावाचीं दिशं गत्वा भो राम त्वमत्र तिष्ठेति रमणीं खवाणीं श्रुत्वा इममाश्रमं प्रविशेति मातृगिरा रेणुकावाक्येन आश्रमं यथा तथा गत्वा पवित्रमाश्रमं दृष्ट्वा तत्राश्रमे विचित्रं गात्रं यस्य शतपत्रे कमले इव नेत्रे यस्य । वृत्रघ्नस्येन्द्रस्य मित्रभूतं करुणायाः एकं मुख्यं पात्रं अङ्के उत्सङ्गे चित्रं कलत्रं मायामयं परिगृह्य क्रीडन्तं सत्रं साधुतारकं एतं अत्रिपुत्रं स रामो मुदानन्देन ददर्श ॥ १३३ ॥ १३४ ॥

प्रार्थयतेऽनुष्टुभा—

भर्त्रा सह गमे मात्रा प्रार्थितो भगवान्भवान् ।
तत्राचार्यो भवत्वौर्ध्वदेहिकेऽपि च कर्मणि ॥ १३५ ॥

स्फुटः ॥ १३५ ॥

इत्यर्थितोऽपि रामेण क्रमेण ख्यापयन्नयं ।
सन्निष्ठां तमसन्निष्ठामिव यातो मतोऽवदत् ॥ १३६ ॥

अयं दत्तः रामेणेति उक्तप्रकारेणार्थितः क्रमेण सन्निष्ठां ख्यापयन् असन्निष्ठां यात इव तं राममवदत् यद्वा सन्निष्ठांतं नयं नीतिं ख्यापयन् यतो मतः सर्वमान्यः ॥ १३६ ॥

तदेवाह अनुष्टुभा—

य आचिनोति शास्त्रार्थं तथाचरति यः स्वतः ।
आचारे स्थापयत्यन्यान्सैवाचार्यो न चेतरः ॥१३७॥

आचिनोति सञ्चिनोति । शेषं सुगमम् ॥ १३७ ॥

अहं परिग्रहं त्यक्त्वा वृत्वात्मरतिमक्रियः ।
वर्ते स्वच्छन्द आनन्द आचार्यत्वं कथं मम ॥ १३८ ॥

परिग्रहं पत्नीं त्यक्त्वाऽऽत्मरतिं रतिसाधनभूतां स्त्रियं वृत्वाऽक्रियः नियतकर्मरहितः इति बाह्यार्थः। आन्तरार्थस्तु परिग्रहं आदानं आत्मन्येव रतिं प्रीतिं । ज्ञानमहिम्नाक्रियः विधिनिषेधातीतः स्वस्मिन्छन्दोऽभिलाषो यस्येदृश आनन्दे वर्ते ॥ १३८ ॥

( अनुष्टुप् )

नग्न उन्मत्तवद्वर्ते धर्माधर्मविवर्जितः ।
तिष्ठे वने वनचरप्रियोऽस्पृश्योऽस्म्यवाच्य इत् ॥१३९॥

बाह्यार्थः स्फुटः । आन्तरार्थस्तु नग्नः निरावरणः उन्मत्तवत् नतून्मत्तः । अतो धर्माधर्मतत्फलवर्जितः वनेऽरण्ये वननीये संभजनीये

चा ब्रह्मणि वर्तिष्ठे वनचराणां तापसानां ज्ञानिनां वा प्रियः अस्पृश्योऽवाच्यश्च ब्रह्मरूपत्वात् इत दे( ए )वार्थः । 'तद्वनं नाम तद्वनमित्युपासितव्यम्' इति 'अशब्दमस्पर्शमरूपम्' इत्यादिश्रुतिभ्यः ॥१३९॥

( अनुष्टुप् )

सुपेशा वयुनं वस्ते प्राग्घृतास्या ममाङ्कगा ।
नूत्नेयं युवतिर्नित्यं पुराणपुरुषस्त्वहम् ॥ १४० ॥

अघटनघटनारूपं सुष्ठु पेशो रूपं यस्याः सा । वयुनं नृणां शास्त्रीयज्ञानं वस्ते आच्छादयति । प्रागारम्भे घृतमिव मिष्टं आस्यं यस्याः सेयं नित्यं नूत्ना युवतिर्ममाङ्कगा एकदेशस्थास्ते । अहं तु पुराणपुरुषः निर्विकारोऽस्मि । बाह्यः स्फुटः ॥१४०॥

( अनुष्टुप् )

अपूज्यः कर्मणि प्राज्ञ न योज्य इति तद्वचः ।
श्रुत्वा रामोऽभवन्मौनी तदा माताह मानिनी ॥१४१॥

॥ स्फुटः ॥ १४१ ॥

( योगिनीवृत्तम् )

भवता सदवादि वादिनां मतभेदव्यतिगेन भेदिनाम् ।
भवतोदितवद् वृषाकपे भवतोऽन्यः क इह त्रिविष्टपे १४२

भेदिनां द्वैतिनां वादिनां मतभेदव्यतिगेनातीतेन भवता सत्सत्यं अवादि यतः कामान्वर्षति पापानि कम्पयतीति वृषाकपिस्तत्सम्बुद्धौ । भवता उदितवन् अहं परिग्रहमित्याद्युक्तवन् इह त्रिविष्टपे त्रिभुवने भवतोऽन्यः कः न कोऽपि ॥१४२॥

( योगिनीवृत्तम् )–

इति मातृवचो निशम्य तन्मतिमांस्तन्मुखतो निशम्य तत् ।
निखिलं तमुवाच सादरं सकलं क्षत्रकुलं हराऽदरम् ॥ १४३ ॥

इति तन्मातृवचो निशम्य श्रुत्वा मतिमान्श्रीदत्तः तन्मुखतः निखिलं जमदग्निमरणादि तत्सकलं श्रुत्वा सादरं तं रामं उवाच हे राम अदरं भयरहितं यथा तथा सकलं क्षत्रकुलं हर संहर ॥ १४३ ॥

युग्मम्–( उपजातिवृत्तम् )

इति प्रगल्भं पुरुषो वचस्तदतिप्रतापस्त्ववधार्य शस्तम् ।
देवाज्ञयानीय स तीर्थमस्त्रादेवाज्ञयाजस्य सती सवस्त्रा ॥१४४॥
स्नात्वात्र कृत्वापि सुभूषिताङ्गान्यार्याय दत्वापि सुभूषितां गां।
सौभाग्यदानानि च सा विवेश सौभाग्यदापि स्वयमग्निमीशा ॥

इति प्रौढं शस्तं तद्वचोऽवधार्य श्रुत्वातिप्रतापः पुरुषः स रामः देवस्य श्रीदत्तस्याज्ञया अस्त्रादेव पातालगङ्गातीर्थं आनीय तस्थौ । अजस्य श्रीदत्तस्याज्ञया सा रेणुका सवस्त्रालानीततीर्थोदके स्नात्वा सुभूषिताङ्गानि कृत्वार्यायाचार्याय सुभूषितां गां दत्वा सौभाग्यदानानि च दत्वा स्वयं सौभाग्यदापि सा ईशा पत्या सहाग्निं विवेश ॥ १४४ ॥१४५॥

मरुतां दिवि वीक्षतां सतां सधवा रेणुभवा सयोषिताम् ।
अधिरुह्य सती स्थिता दिवि स्वसुतायापि मुखं ददौ भुवि १४६

दिवि सयोषितां मरुतां देवानामीक्षतां सतां सभर्तृका रेणुपुत्री विमानमधिरुह्य दिवि स्थिता । आश्वासनार्थं सुताय रामाय मुखमपि भुवि ददौ अद्यापि तद्भजका अर्चन्ति ॥ १४६ ॥

( शार्दूलविक्रीडितम् )

धन्यासौ खलु रेणुका सुभविका साक्षात्स्वयं याम्बिका ।
कन्या रेणुनृपस्य या त्रिकुलजानां सम्यगुन्नायका ।
मान्यावाप हयेष्टिकोटिसुफलं प्रत्यंघ्रि या निर्मलं ।
कान्या त्वीदृगिहाग्रयेर्पयदलं वघ्मीलभन्मङ्गलम् ॥१४७॥

रेणुभूपस्य या कन्या त्रिकुलजानां सम्यगूर्ध्वगतिदा मान्या या च साक्षात्स्वयं अम्बिका सुभविका सुकुशलासौ रेणुका धन्या खलु । या प्रत्यंघ्रि प्रतिपदं अश्वमेधकोटिफलं तदपि निर्मलं सात्विकं अवाप ईदृक्तु काऽन्या न कापि इह लोकेऽग्रयेऽलं वर्ष्म शरीरं धर्मेणार्पयत् मङ्गलं चालभत् ॥ १४७ ॥

( मालिनीवृत्तम् )

इति दिवि भुवि देवैर्मानवैश्च स्तुतायाः ।
सुगतिमतिधृतिं च प्राप्य नाकं गतायाः ॥
यश इह चिरजीवि प्रौढमाप्तं समन्ता-
न्न शतमुखमुखास्तद्वक्तुमीशोऽमितत्वात् ॥ १४८ ॥

इति दिवि देवैः भुवि मानवैश्च स्तुतायाः अतिधृतिमतिधैर्यं अग्न्यावेशलक्षणं सुगतिं च प्राप्य नाकं गतायाः तस्याः इह प्रौढं चिरजीवि यशः समन्तादाप्तं व्याप्तं तदमितत्वाच्छेपादयोऽपि वक्तुं अनीशः असमर्थाः ॥ ॥ १४८ ॥

साद्यापि जागर्ति निजार्चकानामभीष्टदानाय सुभाविकानाम् ।
धरावरे मातृपुरे वरे तान्छ्राद्धान्नयत्यूर्ध्वगतिं परेतान् ॥१४९॥

सुभाविकानां स्वार्चकानामिष्टदानाय सा रेणुकाद्यापि धरावरे सह्याद्रौ मातृपुरे जागर्ति तत्र यातान्नरकगतानपि परेतान्श्राद्धान्छ्राद्धदानमात्रेणोर्ध्वगतिं नयति ॥ १४९ ॥

( अनुष्टुप् )

दत्ताचार्येण रामोऽपि दत्ताचारोऽकरोद्विधेः ।
पित्रोः समं साम्परायं निन्ये क्षत्रकुलं क्षयम् ॥ १५० ॥

दत्ताचार्येण दत्तः आचारो यस्मै सः शेपं सुगमं ॥ एकचित्यारूढयोर्न पृथक्क्रियेत्यतः सममित्युक्तम् ॥ १५० ॥

उपसंहरति गद्येन—

क्षत्रियागर्भस्रावि(वी)यदागमः क्षत्रियप्राणहरणं यदीक्षणं तेन रामेण यत्प्रभावतस्त्रिःसप्तकृत्व उरुधारपरशुना निःक्षत्रां गोत्रां विधाय क्षत्रवधदोषहतये तमेव दत्ताचार्यं वृत्वा चातुर्होत्रादि-नेष्ट्वा चार्याज्ञया सागराम्बरां कश्यपाय सर्वस्वं विप्रेभ्यश्च प्रदाय स्वनिवासायाऽसायासं समुद्रादभिनवामवनिमुपलभ्या-वस्थाय श्रीदत्तप्रसादात्सावर्णिकेन्तरे महर्षित्वमन्ते ब्रह्मभूयमु-पलब्धम् ॥ १५१ ॥

गोत्रां भूमिं । सागराम्बरां भूमिं । असायासं यथा तथा । अभिनवां नूतनां । शेषं स्फुटम् ॥ १५१ ॥

ग्रन्थालङ्कारः स्रग्धरया—

यत्कीर्तिं बाल ऊचे सुरवरवरतो योऽनसूयात्रिपुत्रो
जज्ञे जम्भासुरं योऽमरवरकरतो मारयामास भर्गः ।
गाथाभिः सप्तभिर्यद्भुजनरस इनं योजयद्योऽपि भूपं
तस्यर्षेश्चेष्टदस्तत्पद इति कवितां प्रार्पये स्रग्धरान्ताम् ॥१५२॥

बालो यत्कीर्तिं पित्रे ऊचे । देववरतो योऽनसूयात्रिपुत्रोऽभूत् । देव-हस्ततः यो जम्भासुरं मारयामास । भर्गः यः अविद्याकामकर्मभर्जकः श्रीदत्तः । बृहस्पतीन्द्रेतिहासेन योऽपि स्वयमपि गाथाभिर्यद्भुजनरसे इनं अर्जुनं भूपं योजयामास । भूपस्यार्जुनस्यर्षे रामस्य चेष्टदो यस्तत्पदे इति उक्तां स्रग्धरान्तां कवितां प्रार्पये । इति सर्वस्तबकार्थसंग्रहः ॥ १५२ ॥

इति प्रथमस्तबकः ॥

# द्वितीयस्तबकः

अथ दत्तात्रेयचम्प्वा द्वितीयस्तबकटीका—( वसन्ततिलकावृत्तम् )

सर्वात्मनोऽस्य भजको विधुतान्यभावः
कस्याप्यृणी न सकलेशितुरुत्स्वभावः ॥
हृत्स्थस्य तु प्रियतमोऽस्तयमो भवारे-
र्जेता त्वमेव स च मे कुहृदो भवारेः ॥ १ ॥

हे भगवन् सर्वात्मनो अस्य तव भजकः कस्याप्यृणी न भवति भक्तस्य विधिनिषेधनिवृत्तेः कृतकृत्यत्वादतस्त्वद्भक्तिं मे देहीत्यभिप्रायः। ननु 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायत' इति श्रुतेः। 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति स्मृतेश्च वेदाध्ययनदेवयजन-धर्मप्रजोत्पादनादिना ऋषिदेवपित्रर्णापाकृतिं विना कथं नर्णी भवतीत्यत आह–सर्वेषां देवादीनामात्मा तस्य भगवतो भजने कृते वृक्षमूलसेचनेन स्कन्धादितृप्तिवत्सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां तृप्तिः। अतः स भजकः देवर्षिपितृपोष्याणां मध्ये कस्यापि न ऋणी ऋणं देयमस्यास्तीति स तथा। यथाऽभक्तो ऋणी; अत एव देवादीनां किङ्करः, तदर्थमहरहः पञ्चयज्ञादिकर्ता, स कदाचिन्मोक्षमार्गे प्रवृत्तश्चेद्देवकृतविघ्नाभिभूतो भवति। अयं च न तथा। कुतः? सकलेशितुर्भक्तः। पुनः कथंभूतः विधुतस्त्यक्तोऽन्यभावो द्वितीयत्वं भयकारणं भगवानेवेदं सर्वमिति बुद्ध्या येन सः 'अभयं प्रतिष्ठां विन्दते। अथ सोभयं गतो भवति'। 'द्वितीयाद्वै भयं भवति' इत्यादिश्रुतिभ्यः। कुतः? उत्स्वभावः, शास्त्रीयप्रयत्नवशादुत्कृष्टस्वभावो यस्य अथवा भजनादेवोत्स्वभावः 'अपि चेत्सुदुराचार' इत्यादिस्मृतिभ्यः एवं विहितकर्मानिवृत्तिः। उद्गतः स्वभावः देहाद्यात्म-

भावो यस्येति वा विकर्मनिवृत्तिः। यच्च कथंचित्प्रमादादिनोत्पतितं पापं तन्निवृत्त्यर्थं हृत्स्थस्येत्युक्तं। ननु यमस्तन्न मन्येतेत्यत उक्तं भजनप्रभावेण दूरतः अस्तः त्यक्तः यमो दण्डधरो येन सोऽस्तयमः। ननु 'श्रुतिस्मृती ममैवाज्ञे' इति भगवदुक्तेर्भगवान्स्वाज्ञाभङ्गं कथं सहेतेत्यत उक्तं भजनमहिम्नातिशयेन प्रिय इति प्रियतमः प्रियतमत्वान्नाज्ञाभङ्गशङ्कापि। ननु नायं पापसंक्षयार्थं भजत इत्यपि न शङ्कनीयं कथंचन भजनेन भगवान्हृत्स्थश्चेत्पापक्षयसङ्कल्पाभावेऽपि स्वयमेव पापं क्षपयेत् नहि वस्तुशक्तिरर्थितामपेक्षते यदुक्तं-'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः। अनिच्छयापि संस्पृष्टो दहत्येव हि पावक' इति॥ भवारेर्भक्त इत्यनेन भक्तस्य मुक्तिरपि सुकरेति सूचिता। ईदृशदत्तात्रेयः स च स एव त्वं अरेः शत्रुभूतस्य मे कुहृदश्चञ्चलत्वात्प्रमाथित्वाद्बलवत्वाद्दृढत्वाच्च सामादिभिरजेयस्य कुत्सितमनसो जेता वशीकर्ता भव। मनोजये सर्वेन्द्रियजयः श्रुतिश्च 'मनसो वशे सर्वमिदं बभूव न चान्यस्य मनो वशमिन्वियाय भीष्मो हि देवः सहसः सहीयान्'इति। भीष्मो योगिनामपि भयङ्करः देवो मनोलक्षणः॥ १॥

अथालर्कानुग्रहं वक्तुं तदुपोद्घातत्वेन तन्मातुर्मदालसायाश्चरितमाह सप्ततिश्लोकैः—(शार्दूलविक्रीडितवृत्तम्)

> जातः शत्रुजितस्त्वृतध्वज इति ख्यातः सुतः शत्रुजि-
> द्योऽहन्गालवयज्ञभङ्क्तृदनुजं क्रोडाङ्गमुर्वीतले॥
> वव्रे तेन हृतां प्रसह्य च सुतां विश्वावसोः सन्मतां
> दैवेनोपगतां ततः कुवलयाश्वाख्यां गतोऽन्यार्पिताम्॥२॥

सोमवंशीयस्य शत्रुजितो राज्ञः सुतः। शत्रुजित् शत्रुहन्ता ऋतध्वज इति पुरा जातः। कोऽसौ यो देवदत्तमश्वमारुह्य गालवर्षियज्ञभङ्क्तारं दैत्यं क्रोडरूपधरं पातालकेतुसंज्ञं उर्व्यास्तलेऽधोभागे पातालेऽहन्। अधःस्वरूपयोरस्त्री तलमित्यमरात्। ततश्च तेन दैत्येन प्रसह्य हठात्

हृतामविवाहितां सतां मतां विश्वावसुगन्धर्वस्य पुत्रीं मदालसाख्यां केवलं दैवेनोपगतां वव्रे। ततस्तदनन्तरं अन्यैः पित्राद्यैरर्पितां दत्तां कुवलयाश्व इत्याख्यां गतः ॥ २ ॥

ननु परहृतां कन्यामयं स्वयं कथं हृतवानत आह-( इन्द्रवज्रावृत्तम् )

**गन्धर्वपुत्री तु मदालसाख्या सख्या प्रयत्नेन नृपाय दत्ता।**
**चित्तानुसारिण्यभवद्धवस्य या पात्रभूता परमोद्भवस्य ॥ ३ ॥**

मदालसेत्याख्या यस्याः सा गन्धर्वपुत्री कुण्डलाख्यया योगिन्या सख्या महता प्रयत्नेन दैत्यहस्तगतापि सा नृपाय ऋतध्वजाय कुवलयाश्वापरपर्यायाय विधिना दत्ता न तु राज्ञाऽन्यायेन वृता। या मदालसा परमोद्भवस्य उत्कृष्टोत्सवस्य पात्रभूता सा धवस्य पत्युः पातिव्रत्येन चित्तानुसारिण्यभवत् उचितमेवैतत्कुलस्त्रियाः ॥ ३ ॥

( उपजातिवृत्तम् )

**पातालकेतोर्निहतासुरस्य स तालकेतुः सहजश्चिरस्य ॥**
**वने मुनिः सन्नृपवञ्चनार्थं यथार्थमुर्वीशमयाचतार्थम् ॥ ४ ॥**

पूर्वं निहतासुरस्य पातालकेतोः सहजः भ्राता स प्रसिद्धस्तालकेतुः कुवलयाश्वनृपप्रतारणार्थं चिरस्य चिरकालं वने कापट्येन मुनिः सन् यज्ञसाङ्गतार्थं दैवाद्वनागतं उर्वीशं पृथ्वीपतिं कुवलयाश्वं अर्थं धनमयाचत याचतेरकथितत्वाद्द्विकर्मकत्वम् ॥ ४ ॥

( अनुष्टुप् वृत्तम् )

**तस्मै कुवलयाश्वोऽदाद्यज्ञसम्पत्तये मुदा ॥**
**हिरण्मयीं कण्ठभूषां वेषान्तरजुषे मृषा ॥ ५ ॥**

तत्कापट्यमविज्ञाय यज्ञसंपत्तये मुदा हर्षेण मृषा मिथ्या वेषान्तरजुषे तस्मै दैत्याय कुवलयाश्वः हिरण्यस्य विकारो हिरण्मयी तां। दाण्डिनायनेति सूत्रेण हिरण्मयेति सिद्धं। टिड्ढाणयेति ङीप्। कण्ठभूषां अदात् ॥ ५ ॥

( अनुष्टुप् वृत्तम् )

तामादाय स तद्राष्ट्रं क्षिप्रमागत्य मायिकः॥
शृण्वतां तत्र सर्वेषां भूषां दत्त्वावदन्मृषा ॥ ६ ॥

तां भूषामादाय स मायिको दैत्यः क्षिप्रं तस्य राज्ञो राष्ट्रमागत्य तत्र राजपित्रादीनां सर्वेषां शृण्वतां सतां। अनादरे षष्ठी। भूषां दत्वा मृषाऽवदत् ॥ ६ ॥

( अनुष्टुप् )

स्मरन्वैरं द्विषन्दैत्यो वनेऽहन्नेकलं नृपं ॥
दग्ध आरण्यकैरेषा तद्भूषा मे वचोऽमृषा ॥ ७ ॥

स्वभ्रातृहन्तुर्वैरं स्मरन् द्विषन् शत्रुर्दैत्यस्तालकेतुर्वने एकाकिनं नृपं अहन्। अहहा तैर्हतं दग्धुं यास्याम इति चेत्तर्हि न गन्तव्यं यतः स मृतः आरण्यकैररण्ये भवैर्मनुष्यैः ( अरण्यान्मनुष्ये ) दग्धः तेन मरणसमये भवत्प्रत्ययार्थं मह्यं दत्ता एषा तस्य भूषा। इदं मे संभावितस्यर्षेर्वचोऽमृषा सत्यमेवेति बाह्यार्थः। आभ्यन्तरार्थस्तु मे वचो मृषा मिथ्या भवद्वञ्चनार्थमिति ॥ ७ ॥

( अनुष्टुप् )

इत्युक्त्वागात्स तद्भूषां योषादाय मदालसा ॥
विवेशाग्नौ ततो भूप एत्याश्रौषीत्तदद्भुतम् ॥ ८ ॥

इत्युक्त्वा स कपटी वनमगात्। योषा मदालसा तद्भूषां गृहीत्वा पातिव्रत्यं पुरस्कृत्य विधिनाग्नौ विवेश। ततस्तु अग्निप्रवेशानन्तरं भूपः कुवलयाश्वः वनात्स्वराष्ट्रमेत्य तदद्भुतं ऋष्यागमनपत्नीनाशादिचित्रं पित्रादिमुखतोऽश्रौषीत् ॥ ८ ॥

( अनुष्टुप् )

प्रियानृण्याय राड् भोगं त्यक्त्वाऽसंगं वने वसन् ॥
कम्बलाश्वाहितनयैर्विनयैः सङ्गतोऽभवत् ॥ ९ ॥

प्रियायाः पत्न्या आनृण्याय । राट् कुवलयाश्वः भोगं त्यक्त्वा असङ्गं यथा तथा वने वसन् कम्बलश्व(श्वा)श्वोऽश्वतरश्च नामैकदेशग्रहणं नामग्रहणं । तौ च तौ अही च तयोस्तनयैः । कथंभूतैः विशिष्टो नयो येषां तैः सङ्गतोऽभवत् ॥ ९ ॥

( रथोद्धतावृत्तम् )

पुत्रमित्रसुकलत्रलब्धये वाक्प्रसादवशतः कृपाब्धये ॥
रम्यमश्वतरकाद्रवेश्वरः संजगौ प्रमुदितस्तदेश्वरः ॥१०॥

ततो राजपुत्रपत्नीविनाशं मित्रदुःखेन दुःखितेभ्यः स्वपुत्रेभ्यः श्रुत्वा पुत्रमित्रस्य सुकलत्रलब्धये सरस्वतीं वाचं पूर्वं प्रसाद्य ततो वाक्प्रसादवशतः कृपाब्धये श्रीशङ्कराय तादर्थ्ये चतुर्थी शङ्करं प्रसादयितुं तदर्थं रम्यं सुस्वरं यथा तथा अश्वतराख्यकाद्रवेश्वरः नागः सम्यक् साङ्गरागसहितं जगौ तदा गानाव्यवहितकाल एव इष्टे तच्छील ईश्वरः शङ्करः प्रमुदितोऽभवत् ॥ १० ॥

( अनुष्टुप् )

वयोवर्णाकृतिगतिध्वानैस्तुल्यां मदालसां ॥
प्राग्वद्वव्रे तथेतीश आभाष्यांतरधात्पुनः ॥ ११ ॥

वयआदिभिः प्राग्वत्तुल्यां तत्र ध्वानो ध्वनिः । मदालसां देहीति वरं वव्रे आचकांक्ष । ईशस्तथेत्याभाष्य पुरतोऽन्तरधात् ॥ ११ ॥

( अनुष्टुप् )

शिवप्रसादाच्छ्राद्धीयमध्यपिण्डाशनादहेः ॥
पत्न्या निश्वासतो जज्ञे पूर्ववत्सा मदालसा ॥ १२ ॥

'पुत्रकामश्चेत्पत्नी मध्यमापिण्डं प्राश्नीयात्' इत्युक्तेः पुत्रोपलक्षणं पुत्र्या अपि । शिववरप्रसादेन श्राद्धीयमध्यपिण्डाशनात् अहेः कम्बलाश्वतरस्य पत्न्याः निःश्वासात् न तु योनिद्वारा सा दग्धापि मदालसा वयोवर्णादिभिः पूर्ववज्जाता ॥ १२ ॥

( अनुष्टुप् )

सा स्वप्नोत्थितवद् बुध्वा दीनवत्पर्यदेवयत् ॥
हा नाथानन्यशरणां मां हित्वाद्य क्व यास्यसि ॥१३॥

दाहादि विस्मृत्य पत्युर्मरणवार्तामेव स्मृत्वा सा मदालसा सुप्तोत्थितवद् बुध्वा । हा इति खेदे । हे नाथ प्राणप्रिय न विद्यते त्वदन्यच्छरणं यस्यास्तां मां प्रियां हित्वाद्य क्व यास्यसीति दीनवत्पर्यदेवयद्विललाप॥१३॥

( अनुष्टुप् )

इत्यहिर्विलपन्तीं तामाश्वास्यानाय्य तत्पतिम् ॥
तस्मै कुवलयाश्वाय विधिनादान्मदालसाम् ॥ १४ ॥

अहिः कम्बलाश्वतर इति पूर्वोक्तप्रकारेण विलपन्तीं तां मदालसां शीघ्रमेव पतिं द्रक्ष्यसीत्याश्वास्य पुत्रान्प्रेषयित्वा तत्पतिमानयित्वा तस्मै कुवलयाश्वाय ब्राह्मविवाहविधिना मदालसां ददौ ॥ १४ ॥

सपारिबर्हामादाय हृष्टां हृष्टोऽपि तां नृपः ॥
पुरमेत्यावदत्तातं जातं यद्धूर्जटेर्वरात् ॥ १५ ॥

अहीन्द्रेण दत्तेन पारिबर्हेण सहितां हृष्टां तां मदालसां गृहीत्वा हृष्टः सन् च पुरमागत्य तातमभिवाद्यावदत् किं यद्धूर्जटेर्वरान्मदालसोत्पत्त्यादि जातं तत् ॥ १५ ॥

( अनुष्टुप् )

दृष्ट्वाद्यां शत्रुजित्सृष्टिं प्रीतो यातो वनं वनम् ॥
सुतन्यस्तधराभारो भेजे भागवतीं गतिम् ॥ १६ ॥

तत्पिता शत्रुजित् अद्ययावत्तादृशसृष्टेरभावादाद्यां शिवस्य सृष्टिं स्नुषां दृष्ट्वा प्रीतः सुते न्यस्तः धराभारो येन सः वनं वननीयं संभजनीयं । वनं यातः तत्र भागवतीं गतिं मुक्तिं पुनरावृत्तिरहितां लेभे । वनमिति ब्रह्मनामापि। 'तद्यत् तद्वनं नाम तद्वनमित्युपासितव्यम्' इति श्रुतेः। (ब्रह्मापि वनशब्देनोच्यते । ' तद्वनं नाम तद्वनमित्युपासितव्यं' इति श्रुतेः)॥ १६ ॥

( अनुष्टुप् )

पित्र्ये राज्ये स्थितः ख्यातः शस्तः शत्रुजितः सुतः ॥
प्रजाः प्रजा इवारक्षद्युक्तदण्डः समानदृक् ॥ १७ ॥

पितुरागतं पित्र्यं तस्मिन्राज्ये प्रतिष्ठितः लोके ख्यातः प्रशस्तश्च शत्रुजितः पुत्रः सः युक्तदण्डधरः सन् दण्ड्ये हितेऽहितेऽपि समानदृष्टिः औरसप्रजा इव जनानरक्षन्। कामन्दकः 'उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते' इति ॥ १७ ॥

( अनुष्टुप् )

अन्तर्वत्नी ततः पत्नी सञ्जाता सा मदालसा ॥
गंगा देवव्रतमिव ततोसूत सुतं सती ॥ १८ ॥

ततः राज्ञः पत्नी सा मदालसांतर्वत्नी गर्भिणी जाता। अंतर्वत्पतिवतोर्नुक्। ततो दशमे मासि गंगा भीष्ममिव सती मदालसा सुतं प्रासूत ॥ १८ ॥

( अनुष्टुप् )

जातमात्रं सुतं वीक्ष्य बोधदुग्धमपाययत् ॥
स्तन्यं तु प्राणधृतय उल्लापनमिषेण सा ॥ १९ ॥

सुतं जातमात्रमपि वीक्ष्य जातश्च वायुना स्पृष्टस्तन्न स्मरति जन्ममरणमित्युक्तेः द्वैतबाधानिवृत्यर्थं तदेव बोधस्तत्वज्ञानमेव दुग्धमपाययत्। ननु तेन प्राणधारणं कथमत आह सा बालाश्वासनलक्षणोल्लापनमिषेण पूर्वं बोधदुग्धं अपाययत् ततः स्तने भवं स्तन्यं दुग्धं। शरीरावयवाद्यत्। तत्तु केवलं प्राणधारणायापाययत् बाल्यमारभ्य यत्ने कृते बोधः सुकरो भवतीति भावः ॥ १९ ॥

बोधप्रकारमाह षोडशभिः—(गीतं उष्णिग्वा)

रोदिषि रे त्वं कस्मात्पूर्वमितस्त्वं यस्मात् ॥
भ्रष्टपथोऽभूस्तस्मात्कष्टमवाप्तमकस्मात् ॥ २० ॥

रे पुत्र त्वं कस्माद्धेतोः रोदिषि । मम मोक्षमार्गो भ्रष्ट इति चेद्यस्मात्पूर्वं मनुष्यजन्मनि त्वं इतोऽस्माल्लोकाद्भ्रष्टमार्गोऽभूः । तस्मात्कारणाद्निष्टाचरणान्नरकप्राप्तिरूपं कष्टं अकस्मात्प्राप्तम् ॥ २० ॥

(गीतम्)

क्वाद्य सुतास्ते वनिता क्वाद्य च माता जनिता ॥
क्वाद्य च याता जनता कोऽपि न तेऽन्ते ह्यविता ॥२१॥

पूर्वजन्मदृष्टास्ते पुत्रादयोद्य क्व संतीति वेत्सि किं पश्य पश्य यदर्थमकृत्यमपि त्वया कृतं । तथापि ते तवान्तेऽन्तकाले सुतादीनां मध्ये कोऽपि ते मृत्योरविता त्राता न हि जातः अतः किं तैर्वराकैः ॥ २१ ॥

( गीतम् )

पूर्वनिकेतार्थरथाः क्वाद्य न तस्यापि कथा ॥
प्राक्च यथाद्यापि तथा तादृशचिन्ता तु वृथा ॥ २२ ॥

पूर्वजन्मसंपादितगृहधनरथा अद्य क्व वद । तव तस्य वार्तापि न । किं च यथा पूर्वजातं तथाद्याप्यस्मिन्जन्मन्यपि भविष्यति तादृशानां शोकास्पदानां चिन्ता स्मृतिरपि वृथैव अनुपयोगात् मायामयत्वाच्च ॥२२॥

( गीतम् )

नाक्षिविभंगो यदि ते रूपविमोहः कुमते ॥
भैक्ष्ययशोत्तं यदि ते नारकभुक्तिर्न च ते ॥ २३ ॥

यमेनाक्षिभंगः कृतो नरको वा मुखे पातित इति रोदिषि चेद्धे दुष्टबुद्धे दोषदृष्ट्या स्त्रीरूपलावण्यमोहो यदि ते न, तर्हि नेत्रभङ्गोपि न । गुणबुद्ध्या रूपविमोहितत्वात्तेऽक्षिभङ्गो यमेन कृतः एवमग्रेऽपि । भिक्षालब्धं यशोन्नं यदि अत्तं भक्षितं तर्हि नरकभोजनं ते नैव ॥२३॥

( गीतम् )

नेट्परिरंभे त्वयसः स्त्रीपरिरंभः पयसः ॥
मातुरु पानं न पुनः पाहि सदातः स्वमनः ॥ २४ ॥

एवं स्त्र्यालिंगनं त्यक्त्वा ईश्वरपरिरंभे कृते तत्प्रायसः स्त्रीपरिरंभो न। न केवलमियदेव किं तु ध्यानयोगेनेश्वरपरिरंभे कृते पुनर्मातुः पयःपानमपि न। अतो नरकप्रायगर्भवासमातृपयःपानादिकष्टातिक्रमार्थं अतः परं ईश्वरध्यानेन विषयेभ्यः सदा स्वमनः पाहि रक्षाप्रमत्तो भव ॥२४॥

( गीतम् )

मा स्वप मा स्वप रे निजरूपे ॥
एव हि जागृहि जागृहि भूप ॥ २५ ॥

रे पोत त्वं मा स्वप स्वापं मा कुरु दिवेति शेषः। उक्तं च 'विद्या दिनं प्रकाशत्वादविद्या रात्रिरुच्यते ॥ विद्याभ्यासे प्रमादो यो दिवास्वापः स उच्यत' इति। हे योगभूमिप। सच्चिदानन्दनिजरूपे एव जागृहि अप्रमत्तो भव। आदराद्द्विरुक्तिः। योगभूमयो मूढक्षिप्तादयः अथवा शुभेच्छादयो ज्ञानभूमयः सप्त ॥ २५ ॥

( गीतम् )

सकलनिशायां रेऽगुणमय्यां ॥
मा भज शय्यां स्वेक्षक भूप ॥ २६ ॥

दिनोदये दिवान्धानां निशा तदन्या रात्र्यंधानां निशा सकलप्राणिनां निशा तु आत्मनिष्ठा सा गुणमयी न भवति तत्र सर्वेषां दर्शनव्यापाराभावात्। हे भूप हे स्वेक्षक स्वरूपावस्थान ( तदा द्रष्टुः स्वरूपेवस्थानमिति योगसूत्रात् ) या निशा सर्वभूतानामिति स्मृतेः। अगुणमय्यां सकलनिशायां शय्यां मा भज ॥ २६ ॥

( गीतम् )

जाग्रति सर्वे यस्यां, तस्यां रे गुणमय्यां स्वापमेहि भूप ॥२७॥

यस्यां विषयनिष्ठायां सर्वे विषयिणः जाग्रति रे पोत गुणमय्यां तस्यां स्वापमेहि हे भूप ज्ञानभूमिपालक ॥ २७ ॥

( गीतम् )

काकोलूकनिशावद्व्यवहरतस्ते ।
क्वापि न दिग्भ्रम आत्मज सुमते ॥ २८ ॥

एतद्वा कथं तत्राह यः काकस्य दिवसः सोलूकस्य निशा उलूकस्य दिवसः काकस्य निशा । हे सुमते काकोलूकनिशावत् व्यवहरतस्तव कुत्रापि दृग्भ्रमो न भवेत् अविद्यावशादात्मनो जात इवात्मजस्तत्संबुद्धौ ॥२८॥

( पुष्पिताग्रा वृत्तम् )

कनकसुकमनीयकामिनीति प्रथितमहानरकाद्कास्पदाद्द्राक् ॥
विषयविषधराद्विषय्यहीन्द्रादपसर दूरमितः प्रमादमृत्युः ॥२९॥

कनकं सुवर्णं च सुतरां कमनीया कामिनी चेति विख्यातमहानरकात् कथंभूतात् दुःखास्पदात् । द्राक् शीघ्रं दूरं अपसर । तथा विषया एव विषं तस्य धरात् विषयविषयाणीन्द्रियाण्येवाहयः सर्पास्तेषामिन्द्रान्मनआख्यान्महासर्पाद्दूरमपसर । इन्द्रियमनोवशवर्ती मा भव । इत उक्तलक्षणादहीन्द्रात्प्रमादमृत्युरवश्यं भविष्यति सर्पदंशात्प्राणवियोगवत् । 'प्रमादं वै मृत्युमहं ब्रवीमि' इति सनत्सुजातीयात् ॥ २९ ॥

( अनुष्टुप् )

यदि जातिमृतित्रासाद्रोदिषि त्वं न तेऽपि ते ॥
भावषट्कयुतो देहो भावाभावविकारभाक् ॥ ३० ॥

एवं बोधितस्यापि ते शोको नाद्यापि निवृत्तः । यदि त्वं जन्ममरणभयाद्रोदिषि तर्हि ते अपि जातिमृती तव साक्षिणो न भवतः यतः जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते नश्यतीति भावविकारषट्कयुक्तो देह एव स एव जन्ममरणविकारभाक् न च त्वम् ॥ ३० ॥

( आर्यावृत्तम् )

क्षुत्तृडुभे असुजाते मोहशुचौ ते न ते मनोजाते ॥
जाते न बन्धमुक्ती ते अपि ते नैव कर्तृसञ्जाते ॥३१॥

क्षुदाद्यार्तो रोदिषि चेत्तत्राह क्षुत् तृट् च उभे प्राणजाते तथा मोह-शुचौ तव न ते उभे मनोजाते। 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता' इत्युक्तेः। बन्धमुक्ती तु नैव जाते। कथंचिज्जाते इति मन्यसे चेत्तर्हि ते अपि ते नैव यतस्ते कर्तृसंजाते त्वं तु नैव कर्ता नापि भोक्तातस्तव सर्वसंबन्धाभावः ॥३१॥

(अनुष्टुप्)

देहाद्यतीत तत्साक्षिन् संघातव्यतिरिक्त ते ॥
विद्धि साक्षित्वबोद्धृत्वे निर्विकारत्वतः स्वतः ॥ ३२ ॥

कुत इत्यपेक्षायामाह हे देहाद्यतीत हे तत्साक्षिन हे संघातव्यतिरिक्तेति संबुद्धिभिः देहेन्द्रियमनःप्राणाहंकारेभ्यो विलक्षणः तत्साक्षी देहेन्द्रियादि-संघातव्यतिरिक्तस्त्वमिति त्वंपदलक्ष्यार्थः कूटस्थः प्रत्यगात्मेत्युक्तं। तव साक्षित्वं बोद्धृत्वं च स्वतो निर्विकारत्वेन विद्धि ॥ ३२ ॥

(अनुष्टुप्)

देशाद्यतीत तेऽनन्त गमागमविवर्जित ॥
न कर्तृत्वं न भोक्तृत्वं केवलानुभवात्मनः ॥ ३३ ॥

हे देशाद्यतीत। देशकालवस्तुपरिच्छेदरहितत्वात् हे अनन्त। अनन्तत्वात् हे गमागमविवर्जित। केवलानुभवात्मनस्ते कर्तृत्वं भोक्तृत्वं च न तात्विकं तयोरौपाधिकत्वात् एवं तत्पदलक्ष्यार्थ उक्तः। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः ॥ ३३ ॥

(अनुष्टुप्)

एकमेवाद्वितीयं सत्त्वं ब्रह्म परात्पर ॥
एवं शश्वत्स्वरूपानुसन्धानं कुरु तेऽस्तु शम् ॥ ३४ ॥

वाक्यार्थं बोधयत्यखण्डैकरसत्वेन। हे परात्पर। सर्वकारणकारण य(त्) एकमेवाद्वितीयं स१ तत्त्वं ब्रह्मासीत्यैक्यावधारणद्वैतप्रतिषेधैः स्वगतसजातीयविजातीयभेदा निरस्ताः। उपसंहरति एवं स्वरूपानु-

सन्धानं अनुभवदार्ढ्यपर्यंतं शश्वत्कुरु दृष्टफलत्वात् 'आवृत्तिरसकृदुपदेशात्' इति न्यायात्। नन्वनेकप्रतिबन्धेषु सत्सु कथं ज्ञानसिद्धिरित्यत आहाशिषं श्यति दुःखं तनूकरोतीति शं कल्याणं प्रतिबन्धाऽभावरूपं ते तुभ्यमस्तु भवतु ॥ ३४ ॥

( अनुष्टुप् )

उल्लापनमिषेणैवं बोधयामास तं सुतम् ॥
यथा यथा स ववृधे बोधोऽप्यस्य तथा तथा ॥ ३५ ॥

एवं सोल्लापनमिषेण तं सुतं बोधयामास स बालः यथा यथा ववृधेऽस्य बालस्य बोधोऽपि तथा तथा ववृधे ॥ ३५ ॥

( उपजातिवृत्तम् )

भूयोऽपि जातं च सुतं जगौ सा तथा तृतीयं तनयं न यं सा ॥
पस्पर्श सर्वत्र ततापि कामक्रुड्लोभदावाल्पशिखा स्वरामम् ३६

ततः सा कालान्तरे जातमपि द्वितीयं सुतं तथा पूर्वोक्तप्रकारेण जगौ। ततः पुनः कालान्तरे जातं तृतीयं तनयं तथैव जगौ । यं स्वरामं स्वरूप एव रममाणं तनयं सर्वत्र तता व्याप्तापि सा प्रसिद्धा कामक्रोधलोभा एव दवो वनाग्निस्तस्याल्पाशिखापि न पस्पर्श बोधामृताक्लिन्नत्वात् ॥ ३६ ॥

( आर्या )

तेषामपि त्रयाणां विक्रान्तसुबाहुशत्रुजित्संज्ञाः ॥
पुत्राणां स्त्र्यननुमता अनुक्रमेणैव योजिता राज्ञा ॥ ३७ ॥

तेषामपि त्रयाणां पुत्राणामनुक्रमेणैव विक्रान्तः सुबाहुः शत्रुजिदिति संज्ञा नामानि हास्यद्वारा स्त्रिया मदालसाया अननुमतान्यपि राज्ञा योजितानि ॥ ३७ ॥

( गद्यम् )

क्षमैकभद्रासनानामनाहताग्र्यतूर्यस्वनानां सर्वत्र समानानां हरीन्नारीधृतयशःप्रकीर्णानां पुष्करछत्राणां पुत्राणां तथाविधा-

दपि भर्तुराधिक्यं सदाप्राकृतवैभवं पश्यन्ती सती सुतरां जहर्ष ॥ ३८ ॥

क्षमा क्षान्तिरेवैकं मुख्यं भद्रासनं येषां तेषां। भर्तृपक्षे षष्ठ्येकवचनविपरिणामः सर्वत्र। क्षमायां क्षित्यां एकं भद्रासनं सिंहासनं यस्य। अनाहत एवाग्र्यतूर्यस्वनः वरेण्यवाद्यध्वनिर्येषां। पक्षे अग्र्यश्चासौ तूर्यस्वनश्च अग्र्यतूर्यस्वनः अनाहतः पुरुषान्तरेणाताडितः कुशलशिल्पिकौशल्यवशात्स्वयमेव जायमानः अग्र्यतूर्यनिःस्वनो यस्य। सर्वत्र समानानां शत्रुमित्रोदासीनभावरहितानां। पक्षे सार्वभौमत्वान्मानेन सहितः समानस्त(स्य)स्मात्। हरितो दिश एव नार्यस्ताभिर्धूतानि कीर्तिचामराणि येषां। पक्षे मनोहरनारीभिर्धूतानि गानमिषेण यशांसि वीजनार्थं प्रकीर्णानि चामराणि यस्य। पुष्करमाकाशमेव छत्रं येषां। पक्षे पुष्करनिभं श्वेतपद्मनिभं छत्रं यस्य। पुन्नामनरकादात्मानं परांश्च तारयन्तीति पुत्रास्तेषां पूर्वव्याख्यातप्रकारेण तथाविधादपि भर्तुराधिक्यं किंलक्षणं सर्वदा अप्राकृतं अलौकिकं स्वतःसिद्धं च तद्वैभवं च, भर्तुस्तु प्रकृतिसंबन्धिवैभवं प्रकृतयस्तु 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। सेनांगानि प्रकृतयः पौराणां श्रेणयोऽपि च' इत्यमरोक्ताः। एवंविधं पश्यन्ती सती प्राज्ञी विदुषी राज्ञी मदालसात्यन्तं जहर्ष ॥ ३८ ॥

(गद्यम्)

बाह्यान्तरावरणहीनानदीनान्परतरलीनान्बहिर्मलिनान् जडोन्मत्तपिशाचवत् स्थितान्सुतानपि तान्पिताऽन्वीक्ष्य प्राकृतलोचन इदं वचनमुवाच ॥ ३९ ॥

प्रावरणादि बाह्यावरणं असत्वाभानलक्षणमान्तराम्बरं तद्रहितान् अदीनान्सुप्रसन्नान्परब्रह्मणि लीनान् बहिःपङ्कादिसंपर्केण मलिनान् जडादिवत्स्थितान्तान् ब्रह्मिष्ठानपि-सुतानन्वीक्ष्य प्राकृतदृष्टिः पिता वक्ष्यमाणं वचनमाह ॥ ३९ ॥

( अनुष्टुप् )

सदावां दम्पती पूतौ सदाचाररतौ मतौ ॥
स्थितौ स्वधर्मे कर्मेदं कुपुत्रफलदं कुतः ॥ ४० ॥

आवां दंपती सदाचारनिरतौ लोकमान्यौ सदा स्वधर्मे स्थितौ अथापि कुपुत्रफलदं इदं कर्म कुत आगतम् ॥ ४० ॥

( अनुष्टुप् )

धिक्तज्जन्म कुपुत्रोऽत्र धिक्तत्सद्म वनोपमम् ॥
न यत्र पुत्रसुज्योतिर्नयत्यूर्ध्वं कुलं हि यत् ॥ ४१ ॥

अत्र यत्र जन्मनि कुपुत्रस्तज्जन्म धिक् । 'अविनीतेन पुत्रेण कुलमाशु विशीर्यत' इति कामन्दकात् । 'ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति' इति श्रुतेर्यत्र गृहे पुत्र एव सुज्योतिर्न 'ज्योतिर्ह पुत्रः परमे व्योम' इति श्रुतेः । तत्पुत्रहीनं वनोपमं सद्म धिक् अस्तु ॥ ४१ ॥

( अनुष्टुप् )

लोकजित्य मतः पुत्रो लोकपोऽपि तपोऽतपत् ॥
प्रजाकामः प्रजापाश्च कुतो लोकः प्रजा विना ॥ ४२ ॥

'पुत्रेण लोको जय्य' इति श्रुतेः लोकजित्यै पुत्रो मतः लोकपो ब्रह्मा प्रजाकामः तपोऽतपत् । 'प्रजापतिरकामयत प्रजायेय भूयां स्यामिति स तपोऽतप्यत' इति श्रुतेः प्रजाकामा दक्षादयः प्रजापाश्च तथा तपस्तेपुः । तस्मात्प्रजाः विना कुतो लोकः 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः । प्रजा इति बहुवचनं 'एष्टव्या बहवः पुत्रा' इत्यभिप्रायेण ॥४२॥

( अनुष्टुप् )

एवं भावनयाज्ञोऽसौ दीनोऽभूद्विपरीतया ॥
जायाथ गुर्विणी भूत्वा भूयोऽसूत सुतं मतम् ॥ ४३ ॥

एवमसौ राजाऽज्ञः 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रजां न कामयन्त' इति श्रुतिहार्दज्ञानरहितः । एतमिति श्रुतिपदार्थः आत्मानमेव लोकं

न तु स्वर्गादिकमिति। अत एव सुपुत्रप्राप्त्या परलोकप्राप्तिरिति विपरीत-भावनया दीनोऽभूत् अथ तुर्यवारं, जायते पुत्ररूपेण पतिर्यस्यां सा जाया श्रुतिश्च 'पतिर्जायां प्रविशति गर्भो भूत्वा स मातरं। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते। तज्जाया जाया भवति यदस्यां जायते पुनः। देवा मनुष्या न ब्रुवन्नेषा वो जननी पुनः' इति। एवं दशवार-प्रसवोर्ध्वं पतिः स्वयमेव पुत्रस्थानापन्नो भवति। तथा च श्रुतिः 'दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि' इति। जाया मदालसा भूयो गुर्विणी भूत्वा मतं सुतं प्रासूत ॥ ४३ ॥

( स्वागतावृत्तम् )

**तुङ्गगेष्वखगगेषु खगेषु प्रेक्ष्य जातमथ पञ्चसु योषा ॥**
**स्वं त्रिशक्तिजमिवाक्षयमेषा शंकिताप्युपदिदेश विदोषा ॥४४॥**

अथ दशमे मासि एषा योषा मदालसा पञ्चसु तुङ्गगेषु मेषाद्युच्चस्थान-गतेषु। खगः सूर्यस्तं गच्छंतीति खगगास्तथा न भवन्ति ते अखगगा अनस्तंगतास्तेषु सत्सु। तिस्रश्च ताः शक्तयश्च, 'षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमंत्रजा' इत्यमरः ताभ्यो जातं अक्षयं नाशरहितं स्वं धनमि-वात्मनो जातं सुतं प्रेक्ष्यायं सम्राड् भविष्यतीति शंकितापि तं पूर्ववदुप-दिदेश यतो विदोषा असंभावनाविपरीतभावनादिदोषरहिता। यद्वा 'यत्ने कृतेऽपि तु न सिध्यति कोऽत्र दोष' इति बुध्या विदोषा दोषा रात्रिरविद्या सा वीता यस्याः ' विद्या दिनं प्रकाशत्वादविद्या रात्रिरुच्यत' इत्यभियुक्तोक्तेः। ईदृगाचार्योपदेशवैय्यर्थाभावः काठके उक्तः। 'अनन्य प्रोक्ते गतिरत्र नास्ति'इति ॥ ४४ ॥

( इन्द्रवज्रावृत्तम् )—

**औत्साहितो ज्योतिषिकैः स जातकर्माकरोद् भूपतिरात्मजातं ॥**
**नाम्नाथ संस्कर्तुमुवाच भार्यां किं नाम देयं वद मेऽर्भकाय॥४५॥**

यथा पूर्वे मूढा जातास्तथाप्ययं किं कर्तव्यं संस्कारैरुत्सवैर्वेति पर्वसाधारणदृष्ट्योदासीनो राजानस्तंगतपञ्चोच्चग्रहयोगसूचितसार्वभौमराजयोगोऽस्यास्तीति प्रोत्साहितः स भूपतिः जातकर्माकरोत् अथ षोडशेह्नि आत्मजातं पुत्रं नाम्ना संस्कर्तुं भार्यामुवाच अस्मै अर्भकाय किं नाम देयं मे वद ॥ ४५ ॥

( उपजातिवृत्तम् )—

**प्राक्पुत्रनामान्ययि तेऽमतानि कुतो निरर्थान्यपि किं नु तानि॥**
**मानिन्युवाचांग गतिर्न यस्य विक्रान्तसंज्ञा न हि साध्व्यजस्य४६**

अधुनैव कुतः पृच्छसीत्यत आह अयीति कोमलामंत्रणे हे प्रिये ममैव दत्तानि पूर्वपुत्रनामानि ते तव कुतोऽमतानि यतस्त्वं प्रत्याह्वयं हसितवती अतस्तान्यपि नामानि निरर्थकानि किं नु वदेत्युक्ता मानिनी मदालसा पतिं उवाच अंग हे प्रिय यस्य गतिर्देशान्तराभावाद्गमनं न विद्यते तस्याजस्य 'न जायते म्रियते वा विपश्चित्'इति श्रुतेर्जन्मादिविकारशून्यस्यात्मनः 'स वा एष महानज आत्मा'इति श्रुतेरजशब्दादात्मैवात्र गृह्यते तस्य क्रमु पादविक्षेप इति धात्वर्थसिद्धा विक्रान्तसंज्ञा न हि साध्वी असंभवात् ॥ ४६ ॥

( उपजातिवृत्तम् )-

**नाथांगवार्तास्य न तस्य सार्था सुबाहुसंज्ञा किमतो निरर्था ॥**
**एकस्य कः शत्रुरतोऽस्य सार्था किं शत्रुजित्संविदतो निरर्था४७**

हे नाथ 'अशरीरं शरीरेषु'इति श्रुतेः यस्य अंगान्यस्या स्तीत्यङ्गं शरीरं अर्शआदित्वान्मत्वर्थीयोच्प्रत्ययः तस्य वार्तास्यात्मनो न तस्य सुबाहुरिति संज्ञा नाम न सार्था किं तु निरर्था। 'एक एव हि भूतात्मा'इति श्रुतेर्द्वितीयाभावादेकस्यात्मनः कः शत्रुः न कोऽपि अतः शत्रुजिदिति संवित् नाम न सार्था किं तु निरर्था ॥ ४७ ॥

( रथोद्धतावृत्तम् )

पारमार्थिकदृशैवमीदृशी व्यावहारिकदृशापि तादृशी ॥
सार्थता न जडमूढडिम्भवद्वर्ततामिह निरर्थताऽभवत् ॥४८॥

एवं पारमार्थिकदृष्ट्या ईदृशी सार्थता न। नाम्नामिति शेषः। किमियं वाचालेति कुपितं पतिमालक्ष्याह व्यावहारिकदृष्ट्यापि तादृशी सार्थकता नैषां नाम्नां यतः इहास्मद्गृहे जडमूढडिम्भवद्वर्ततां पुत्राणां विक्रान्तशत्रुजित्सुबाहुरितिसंज्ञानां निरर्थताऽभवत् नान्वर्थकता ॥ ४८ ॥

( योगिनीवृत्तम् )

व्यवहारसुसिद्धये यदा व्यवहारिन्मत आह्वयस्तदा ॥
कुरु जातमलर्कसंज्ञितं सुमतं ते यदि नाथ मे मतम् ॥४९॥

हे व्यवहारिन् व्यवहारशील यदा यर्हि लोकव्यवहारसुसिद्धये सुतस्य आह्वयो नाम ते तव मतं चेत्तदा तर्हि हे नाथ मे मतं ते सुसंमतं यदि तर्हि जातं सुतं अलर्कसंज्ञितं कुरु अलर्क इति संज्ञा संजाता यस्य। तदस्य संजातमितीतच्। अलतीत्यल् अल् चासावर्कश्च भ्रान्तः श्वा तत्तुल्योऽयं त्वदाग्रहाद्बहुकालं भविष्यतीति मनसि निधायान्वर्थकं नाम दत्तम् ॥ ४९ ॥

( अनुष्टुप् )

तथेत्याख्यां सुतायादाद्यथेष्टं च धनाद्यदात् ॥
विनयात्स द्विजादिभ्यस्तनयाभ्युदयार्थ्यपि ॥ ५० ॥

स राजा तथेति सुतायालर्क इति नामादात् च तनयाभ्युदयार्थी सः विनयेन द्विजादिभ्योऽपि धनवस्त्रभूम्यादिकं ददौ ॥ ५० ॥

( अनुष्टुप् )

मुदान्वितोऽपि द्वितीयं कदाचित्तनयं स्वयं ॥
मलिनं वीक्ष्य सदयं नलिनाक्षोऽब्रवीदयम् ॥ ५१ ॥

एवं मुदायुक्तो नलिनाक्षः कमलनेत्रः अयं राजा कदाचिन्मलिनं मलदूषितं द्वितीयं तनयं सुबाहुं वीक्ष्य सदयं यथा तथाऽब्रवीत् ॥५१ ॥

( अनुष्टुप् )

विज्ञाय दण्डनीत्यादि विवाह्य सदृशीं स्त्रियं ॥
विधाय नीत्या स्वराज्यं पूज्यमिष्ट्वानृणी व्रज॥ ५२ ॥

भो पुत्रक प्रथमं दण्डनीत्यादि आदिपदाद्धनुर्विद्यादि ज्ञात्वा ततोऽनुरूपां स्त्रियमुद्वाह्य विधिना युक्तदण्डेन स्वं राज्यं कृत्वा पूज्यान्देवान्पितॄन्वृद्धांश्च संपूज्यानृणी सन् तत ईदृशीं दशां वहन्वनं व्रज ॥ ५२ ॥

( उपेन्द्रवज्रावृत्तम् )

त्यजात्तमौढ्यं तनुजैधि गेही यजाध्वरैर्यैश्च कृतीह देही ॥
भजाग्रतोऽत्रैव हि सांपरायं व्रजाटवीं प्राप्स्यसि नान्तरायम् ५३

त्वं न मूढोऽसीति मे भाति अतः आत्तं स्वीकृतं मौढ्यं त्यज हे तनुज गेही गृहस्थ एधि भव। इण्धातोर्लोण्मध्यमैकवचनं। अध्वरैर्देवान्यज यैरध्वरैरिह देही कृती कृतकृत्यो भवति 'कुर्वन्नेवेह कर्माणि' इति श्रुतेः। अत्रैव गृहाश्रमेऽग्रतो वानप्रस्थात्पूर्वमेव हि सांपरायं पारलौकिकसाधनं भज ततोऽटवीं व्रज एवं क्रमेणाचरणाद्विघ्नं न प्राप्स्यसि॥५३॥

( अनुष्टुप् )

प्रहस्याह स तं ज्ञाता सद्विद्या मातृतोर्जिता ॥
स्वानुभूतिर्वृता कान्ता स्वाराज्यस्थिरताऽऽगता ॥५४॥

बहिर्मुखोऽयं ब्रह्मविद्वरिष्ठं मां न वेत्तीति प्रहस्य स ज्ञाता सुबाहुः तं पितरं प्राह सद्विद्या ब्रह्मज्ञानं मातुः सकाशात्संपादितं। स्वानुभूतिरेव कान्ता मया वृता तया सहाद्य स्वेन राजतेऽसौ स्वराट् स्वयंप्रकाश आत्मा स एव स्वाराज्यं तस्मिन्नसंभावनादिदोषपरिहारेण तत्त्वज्ञानमनोभङ्गवासनाक्षयाभ्यासपाटवेन स्थिरता जीवन्मुक्तिलक्षणा स्थितप्रज्ञताऽऽगता ॥ ५४ ॥

( अनुष्टुप् )

भार्यार्या ते न आचार्या सोदर्या हि वयं त्रयः ॥
आर्याश्च भविता तुर्यस्त्वमार्यातः कृती भव ॥ ५५ ॥

केन ते उपदिष्टेत्यत आह–आर्या साध्वी ते भार्या नोऽस्माकं आचार्या उपदेष्ट्री । 'आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि । स्वयं चाचरते यस्मात्तस्मादाचार्य उच्यते' । अत्राचारः प्रवचनादिलक्षणः । वयं त्रयोऽपि सोदर्याः सहजाः अर्य ईश्वरः तस्येमे आर्या भक्ता ज्ञानिसंज्ञका जाताः तुर्यश्चतुर्थोऽधुनातनोऽपि सोदर्यः मादृश आर्यो भविता । हे आर्य सभ्य तात त्वमपि विषयासक्तिं त्यक्त्वा अतः परं तत्वविवेकेन कृती भव इति बहिरर्थः । आन्तरार्थस्तु भो राजन्त्वमपि आर्यास्माकं आचार्या माता ततस्तस्याः सकाशात्प्रवचनादि कृत्वा मनननिदिध्यासपरिपाकजातमज्ञानवशात्कृती कृतकृत्यो भव । 'एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' इति स्मृतेः ॥ ५५ ॥

( योगिनीवृत्तम् )

द्वयतोऽद्वयमात्मविद्यया पुनरैक्यं न भजेत्पृथक्कृतम् ॥
मथनेन पृथक्कृतं पुनर्नवनीतं न हि तत्र ऐक्यभाक् ॥५६॥

ननु 'पितृवाक्यं परित्यज्य स्वतन्त्रो यस्तु वर्तते' इत्यादिदोषोक्तेः मद्वाक्यतः संसारं भज किं भ्रमपितसोदरीभावं गतः मूढस्त्रीवाक्यविश्वासेनेत्यतः आह–आत्मविद्यया द्वयतः संसारात्पृथक्कृतं बुद्ध्या निष्काशितं अद्वयं शुद्धादिलक्षणमात्मतत्वं पुनर्द्वयेन ऐक्यं न भजेत् अर्थान्तरन्यासेन दृढयति तथाहि मथनेन पृथक्कृतं नवनीतं पुनस्तक्रे क्षिप्तमप्यैक्यभाङ् न भवति । 'प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना । न नश्यति न वेदान्तात्प्रबलं मानमस्ति हि' इत्युक्तेः ॥ ५६ ॥

( अनुष्टुप् )

इत्थं सतां मतमृतममृतस्पर्धि भाषितम् ॥
ज्वरितोन्नं यथा तातो मेने तत्कर्णशूलवत् ॥ ५७ ॥

इति सतां मान्यं ऋतं निर्बाधं तेनामृतस्पर्धि ततोऽपि मधुरतमं भाषितं तथापि ततोऽसंभावनाद्यभिभूतत्वात् यथा ज्वरितोऽरुच्या मिष्टमप्यन्नं तिक्तं मन्यते तथा तद्भाषितं कर्णशूलवन्मेने ॥ ५७ ॥

(अनुष्टुप्)

सतीमेत्यासतीमुक्तिं प्राह प्राड्वित्पतिः ॥
मूढेऽश्राव्यं सुतान् ब्रूषे किं वचो वंशनाशनम् ॥ ५८ ॥

सतीं मदालसामेत्य प्रकृष्टकलहज्ञः पतिः राजा असतीमभद्रामुक्तिं प्राह हे मूढे श्रवणानर्हं वंशनाशकरं वचः सुतान्प्रति ब्रूषे किं अथवा कुत्सितं वचः किंवचः गृहस्थैरनादरणीयम् ॥ ५८ ॥

(अनुष्टुप्)

अनेन कूपदेशेन शं न नौ का गतिस्त्वितः ॥
स्वर्गादिस्थपितॄणां नः को निवापप्रदो वद ॥ ५९ ॥

मया साधूक्तमिति चेत्तत्राह अनेन-कुत्सितोपदेशेन पुत्राणां नश्च शं कल्याणं न। पुत्रास्त्वात्मज्ञानेन तीर्णा इति चेद्भवतु नाम इतः परं पुत्राभावे नौ आवयोः का गतिः। ज्ञानविचारेण सद्गतिः संपादनीया किं पुत्रेणेति चेन्नोस्माकं स्वर्गादिस्थपितॄणां को निवापप्रदोऽस्तीति चेद्वद मौनमेव तेऽन्ते शरणमिति भावः। अत्र स्वर्गशब्देन पितृलोकः आदिशब्देन नरकस्था भूतप्रेतादिभावगताश्च ग्राह्याः। निवापः पितृदानं तर्पणं श्राद्धपिण्डादि ॥ ५९ ॥

(अनुष्टुप्)

विधिनेयं कृता वृत्तिः कृत्तिवासःसुतुष्टिदा ॥
पुष्टिदा च नृणां गेहीं न हि सर्वोपजीवनम् ॥ ६० ॥

ते विधिवशाज्जीवन्तीति चेन्न यतः विधिना धात्रेयं वृत्तिः कृता सा पुनर्यथावद्विहिता चेत्कृत्तिवासस ईश्वरस्य सुतरां तुष्टिदा नेयन्मात्रमपि तु 'दातारो नोऽभिवर्धंताम्'इत्यादिपितृदत्ताशीःश्रवणान्नृणां श्राद्धकर्तॄणां

च सा वृत्तिः पुष्टिदा न केवलमियदेवापि तु नृसुरपितृकृमिकीटपतङ्गोद्भिज्जादीनामपि पञ्चमहायज्ञातिथ्यान्नदानवस्त्रनिष्पीडनोदकदानश्राद्धोच्छिष्टपिण्डदानादिना सर्वेषां तृप्तिश्रवणाद् गृही सर्वोपजीवनं न हीति काकुः अपि तु सर्वोपजीवनमेव सर्वेषां ब्रह्मचारिसंन्यासादीनामपि स गृही एव जीवनदाता । 'यथा मातरमाश्रित्य' इति मानवस्मरणाच्चेति भावः ॥ ६० ॥

( अनुष्टुप् )

गोहस्तिवीतिसंपत्तिं कुमतिर्यो जहाति ताम् ॥
देवदत्तां मतां गेही देवद्रोही पतेदधः ॥ ६१ ॥

यो गेही गृहस्थः कुमतिर्निवृत्तिमार्गरतः सन् मतां सर्वमान्यां देवेनेश्वरेण दत्तां गोहस्तिवीतिसंपत्तिं तत्र वीतयोऽश्वाः गुणबुद्धिं त्यक्त्वा दोषदृष्ट्या जहाति स देवद्रोही अधः पतेत् ॥ ६१ ॥

( अनुष्टुप् )

मान्यः प्रवृत्तिमार्गो नः सर्वोपकरणक्षमः ॥
कुमतीनां तथान्यो नो द्वारं नोऽपि हि तद्गतिः ॥६२॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः' 'यावज्जीवमग्निहोत्रं जुहोति' 'तं यज्ञपात्रैर्दहन्ति' इति सर्वायुषः कर्मभिर्व्याप्तत्वान्नोऽस्माकं प्रवृत्तिमार्गः सर्वोपकारक्षमोऽत एव मान्यः तदन्यः कुमतीनां निवृत्तिमार्गरतानां तथा तेन प्रकारेण सर्वोपकारक्षमो मान्यश्च न भवति कथंचन मन्दबुद्ध्या स्वीकृतेऽपि तस्मिन्मार्गे तद्गतिस्तेषां दैवहतकानां गतिः, नोऽस्माकं द्वारमेव ॥ ६२ ॥

( अनुष्टुप् )

दुर्दैवस्य तु मार्गोऽन्य उभयक्लेशदो न किम् ॥
अपुत्रस्य न लोकोऽस्तीत्येषा भाषा श्रुतेर्न किम् ॥६३॥

दुर्दैवस्य प्रवृत्तिमार्गोपयोगिसामग्रीविकलस्यान्यो निवृत्तिमार्गः उभय-क्लेशदो न किं अपि तु क्लेशद एव। अत्र विषयोपभोगाभावात्परत्र यज्ञादि-कर्मानिष्पत्तेः स्वर्गसुखाभावाच्च। 'अपुत्रस्य लोको नास्ति' इत्येषा श्रुते-र्भाषा वचनं न भवति किं अपि तु भवत्येव ॥ ६३ ॥

( अनुष्टुप् )

तस्मादार्योऽर्भकस्तुर्यो भ्रष्टो भवतु नान्यवत् ॥
इति श्रुत्वा पतिवचः प्राज्ञी राज्ञी तमब्रवीत् ॥ ६४ ॥

उपसंहरति। स्पष्टम् ॥ ६४ ॥

( इन्द्रवज्रावृत्तम् )

निवृत्तिमार्गः परमः सतो मतो यतोऽमृतं जय्य इहात्मलोक इत् ॥
प्रबोधपुत्रेण परेण नेत्यपि श्रुतेः पते शीर्षमशेषविन्मतम् ॥६५॥

संक्षेपेण सर्वप्रश्नोत्तरमाह–निवृत्तिमार्गः परमः। कुतः, सतः, स्वतः प्रमाणभूतस्याप्रामाण्यशङ्काकालुष्यरहितस्यापौरुषेयस्य वेदस्य 'न्यास एवात्यरेचयत्' इत्यादिना मतः। यतो निवृत्तिमार्गादमृतं मोक्षो भवति 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति श्रुतेः। तर्हि 'नापुत्रस्य लोक' इत्यादिश्रुतेः का गतिरित्यत आह–प्रबोध एव पुत्रः। प्रबोधस्य पुत्रत्वं पूर्वाचार्यैरुक्तं 'मृता मोहमयी माता जातो बोध-मयः सुतः। सूतकद्वयसंप्राप्तौ कथं संध्यामुपास्महे' इति। तेन इह मनुष्यजन्मनि लोक्यते स्वात्मतयानुभूयत इति लोकः प्रकाशको वा आत्मा परं ब्रह्मैव लोको जय्यो जेतुं शक्य एव, इदेवार्थे निपातः। न परेण कर्मादिना 'एतावदरे खल्वमृतत्वं'। 'किं प्रजया करिष्यामो येषां नोय-मात्मायं लोक' इति। 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति श्रुतेः। 'नैष्कर्म्यसिद्धिं परमाम्' इति स्मृतेश्च। हे पते त्वयोक्ता श्रुतिः कर्मकाण्डस्था दुर्बला इदं तु सर्वविन्मतं

सर्वज्ञेश्वरमान्यं श्रुतेः शीर्षमुपनिषदाख्यं प्रबला श्रुतिरियमीशमान्या चातो न देवद्रोहित्वशंकापीत्यर्थः ॥ ६५ ॥

( इन्द्रवज्रावृत्तम् )

अथापि नाथाद्य भवत्प्रियार्थं यथार्थमस्मै श्रुतदृङ् नयार्थं ॥
साधूपदेक्ष्येऽखिलमेवमुक्त्वा सापाठयत्स्वाग्रहमत्र मुक्त्वा॥६६॥

एवं श्रुत्वापि क्रुद्धपतिमालक्ष्याह हे नाथाथापि त्वत्प्रियार्थं यथार्थं नयस्यार्थं अस्मै अलर्काय साधु सम्यगकपटं अखिलमेव धनुर्वेदादुपदेक्ष्ये हे श्रुतदृक् लौकिकशास्त्रदृष्टे एवमुक्त्वात्र पाठने स्वाग्रहं मुक्त्वा सा तमपाठयत् ॥ ६६ ॥

( अनुष्टुप् )

अलर्कः सर्वविद्याः स आददे शिक्षितोऽम्बया ॥
नयादिनिपुणायास्मै दापयामास भूधुरम् ॥ ६७ ॥

मात्रा शिक्षितः सोऽलर्कः सर्वविद्याः जग्राह । 'विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत्' इति स्मृतिमनुसृत्य नयादिकुशलायास्मै अलर्काय भूधुरं दापयामास मदालसेति कर्तृपदमध्याहार्यम् ॥ ६७ ॥

( अनुष्टुप् )

वनं जिगमिषुं कांतमनुयास्यत्यदात्तदा ॥
भाविरिष्टहरं पत्रं गुप्तं पुत्राय सा तदा ॥ ६८ ॥

वनं जिगमिषुं पतिं मुदानुयास्यती सा भाविरिष्टहरसूचकं पेटकगुप्तं पत्रं तदा पुत्रायाऽदात् ॥ ६८ ॥

( योगिनीवृत्तम् )

तरुणारुणदीप्त गुप्तचित्करुणाब्धे भवतो विना क्वचित् ॥
न हि कश्चन तारको द्युमन्महिमन्नुर्भवतोऽत्रिभूर्महन् ॥ ६९ ॥

हे तरुणादित्यदीप्त हे गुप्तबुद्धे हे कृपाब्धे हे महत्पूज्य द्युमान्प्रकाशशीलः महिमा यस्य तत्संबुद्धौ हे अत्रिभव नुर्मनुष्यस्य भवतो विना कश्चन तारको न हि ॥ ६९ ॥

भवतेर्पित एष बालको भवतोऽन्यः क इहास्य पालकः॥
इति सा प्रतिपाद्य योगिनी पतिमार्यानुगतेव भोगिनी॥७०॥

अत एष बालकः मया भवतेर्पितः भवतोऽन्यः कः इहास्य पालकः अविद्यादिभ्यः एवं सा योगिनी श्रीदत्ताय पुत्रं प्रतिपाद्य दत्वा आर्या मदालसा पतिमनुयाता केव भोगिनीव इवशब्देन तु न भोगार्थं नापि पत्या सह यमादि साधयितुं किन्तु वानप्रस्थमिषेण पतिं बोधयितुं, तस्याः कृतार्थत्वात् ॥ ७० ॥

( गद्यम् )

अथ ह तातयोर्निर्वाणं गतयोः सतोः पित्र्यभद्रासनासीनं सुधर्माश्रितं विबुधगणपरीतं गुर्वभिमतं मघवंतमपरं जिष्णुमिव सन्तं चोदनाधिया रतामिषसुरासक्तं तमलर्कं बुबोधयिषुः सुबाहुरुत्सृष्टात्तमौढ्य एत्य पित्र्यराज्यभागं याचयित्वा तेन प्रत्याख्यातः प्रयत्नतः काशिराजसाहाय्येन कांश्चित्सामंतामात्यादीन्साम्ना कांश्चिद्दानेन भेदेन च वशीकृत्याग्रजोऽनुजं जिगाय ॥ ७१ ॥

तत्र वने पतिं बोधयित्वा तेन सह सा मुक्तिं गतेति पुराणप्रसिद्धमाह हेति मार्कण्डेयादिप्रसिद्धम् । अथ वनगमनानन्तरं पित्रोर्मोक्षं गतयोः पितुरागतं पित्र्यं भद्रासनं सिंहासनं तस्मिन्नासीनं जिष्णुं इन्द्रमिव सन्तं कथं सुधर्माश्रितं अकूटधर्माश्रितं पक्षे सुधर्मा देवसभा तदाश्रितं । राजपक्षे विबुधाः पण्डिताः इन्द्रपक्षे देवाः राजपक्षे गुरवो मान्या इन्द्रपक्षे बृहस्पतिः । राजपक्षे मघं धनं इन्द्रपक्षे बलमपि 'सबलधनयोर्दातृतम' इति नैरुक्ताः । राजापि जिष्णुर्जयशीलः ईदृशं चोदनाधिया विधिबुद्ध्या । 'न मांसखादने दोषो मद्यपाने न मैथुने' इति मानवस्मृतिबाह्यार्थदृष्ट्या न तु संकोचापरपर्यायनामकपरिसंख्यादृष्ट्या विवाहविधिपरि-

गृहीतपत्नीरतं। 'हुतशेषं भक्षयेत्' इति श्रौतमामिषं। 'सौत्रामण्यां सुराग्रहं गृह्णाति' इति श्रौतसुरा। न त्वेतत्कथंचिद्यथेष्टं; अन्यथा सुधर्माश्रितमित्यस्य बाधापत्तेः एवं त्रिष्वासक्तं तमलर्कं बोधयितुमिच्छु-र्द्वितीयाग्रजः सुबाहुः उत्सृष्टं त्यक्तं आत्तं बुद्ध्या स्वीकृतं मौढ्यं येनेदृशः सन् तमनुजमेत्य प्रथमं पित्र्यराज्यभागं मे देहीति याचयित्वा न दास्य इति तेन प्रत्याख्यातः प्रकृष्टेन यत्नेन काशिराजसाहाय्येन यथायथं सामादिभिः सामंतादीन्वशीकृत्याग्रजः सुबाहुरनुजमलर्कं जिगाय ॥७१॥

( अनुष्टुप् )

**अलर्को विजितो रात्रावलर्कवदगाद्वनम् ॥**

**तत्र मातृवचः स्मृत्वा पत्रं दृष्ट्वा सुविस्मितः ॥७२॥**

एवं जितोऽलर्कः ह्रिया रात्रौ अलर्कवत् क्ष्वेडितश्ववत् वनं अगात् तत्र मातृवचः स्मृत्वा पत्रं दृष्ट्वा विस्मितोऽभूत् ॥ ७२ ॥

( अनुष्टुप् )

**त्यक्त्वा स्वेषां विरुद्धानां संगं सत्संगमाचरेत् ॥**

**इति ज्ञात्वा मातृहार्दं श्रीदत्तं शरणं ययौ ॥ ७३ ॥**

विरुद्धानां स्वेषां स्वजनानां सतां तत्संगं त्यक्त्वा सत्संगं आचरेदिति मातुरभिप्रायं ज्ञात्वालर्कः श्रीदत्तं शरणं ययौ ॥ ७३ ॥

( उपजातिवृत्तम् )

**स सह्यधामानमपेतमानमसह्यधामानममानमानं ॥**

**मानं ददन्तं परमात्मने तमानन्दकन्दं नृपतिर्ददर्श ॥७४॥**

स नृपतिः सह्योद्रिर्धाम स्थानं यस्य तं। अपेतमानं व्यक्तमानं प्रमाणातीतं वा। असह्यं धाम तेजो यस्य तं। अमानेभ्यो मानः पूजा यस्य यद्वा मीयतेऽनेनेति मानं अमानानां महतामाकाशादीनां मानं। 'यस्मिन्नाकाश ओतश्च प्रोतश्च' इति श्रुतेः। परमात्मने ध्यानरूपं मानं ददन्तं यद्वा आत्मने स्वस्मै हे योगिनीपुत्रागच्छ स्वागतमिति परं मानं ददन्तं।

आनन्दकन्दं 'एष ह्येवानन्दयाति' इति श्रुतेः तं कारुणिकं दत्तात्रेयं ददर्श ॥ ७४ ॥

**निधाय योऽङ्के खलमोहनाय विधाय मायामयभीरुमार्यः ।**
**तडिन्निभां नीलनिभोस्तमारस्तडित्वदाभां धरगो जहार ॥७५॥**

खलमोहनाय तडिन्निभां मायामयस्त्रियं न तु तात्विकीं विधाय तां अङ्के स्वोत्सङ्गे निधाय अत्रिजत्वादार्यः कुलीनः स्वमहिम्नाऽस्तो निरस्तो मारो मदनो येन सः नीलमणिनिभः धरगः पर्वतस्थः यः श्रीदत्तः तडित् विद्यते यस्य स तडित्वान् मेघः तस्याभां जहार तिरश्चकार ॥ ७५ ॥

( उपजातिवृत्तम् )

**अशेषदोषक्षपणक्षमाभिर्निःशेषसत्तीर्थसमाहृताद्भिः ॥**
**कमंडलुं पूर्णमसौ दधानः स्रष्टेव रेजेऽमरदत्तमानः ॥७६॥**

सर्वदोषहरणसमर्थाभिः सर्वतीर्थेभ्यः समाहृताभिरद्भिः पूर्णं कमंडलुं दधानः अमरैर्दत्तो मानः पूजा यस्मै सः असौ श्रीदत्तः स्रष्टा ब्रह्मदेव इव रेजे ॥ ७६ ॥

( योगिनीवृत्तम् )

**अतिपिङ्गजटाकिरीटिना समतां यो गतवान्पिनाकिना ॥**
**शरदभ्रनिभाच्छभस्मना परिलिप्ताखिलकोमलात्मना ॥ ७७ ॥**

शरत्कालीनमेघनिभस्वच्छभस्मना । कोमलश्चासौ आत्मा देहश्च कोमलात्मा परितः सर्वतो लिप्तः अखिलः सर्वः कोमलात्मा येन तेन । अतिपिङ्गजटानां किरीटः मुकुटः सोस्यास्तीत्यतिपिङ्गजटाकिरीटी तेन पिनाकोजगवं धनुरस्यास्तीति तेन शिवेन यो दत्तात्रेयः समतां तुल्यतां गतः ॥ ७७ ॥

( मालिनीवृत्तम् )

**सजलजलदमित्रांगद्युतिः श्रीकलत्रो**
**विमलकमलनेत्रो मञ्जुलाशेषगात्रः ॥**

अमलसकलचन्द्रस्पर्धिवक्त्रः पवित्रः
शुशुभ इव विपत्रः सह्यगो योऽत्रिपुत्रः ॥ ७८ ॥

यः सह्याद्रिगोऽत्रिपुत्रः सः । श्री(श्रीः)कलत्रं भार्या यस्य सः । विः पक्षी गरुडः पत्रं वाहनं यस्य सः विष्णुरिव शुशुभे । कथंभूतः सजलजलदमित्रभूता अंगकान्तिर्यस्य सः । स्वच्छकमले इव नेत्रे यस्य सः । मञ्जुलं मनोहरं अशेषगात्रं यस्य सः । अमलः कलंकरहितो यः सकलः पूर्णश्चन्द्रस्तं स्पर्धत इति तथाभूतं वक्त्रं यस्य सः ॥ ७८ ॥

( उपेन्द्रवज्रावृत्तम् )

निपात्य वर्ष्माग्रत एव दण्डनिपातवत्प्राह तमात्तपीडः ॥
अतीव दुःखं हि ममोपपन्नं यतीश तस्मादव मां प्रपन्नम् ॥७९॥

पूर्वोक्तस्य तस्याग्रतः एव दण्डनिपातवद्वर्ष्म शरीरं निपात्य साष्टांगं प्रणम्येत्यर्थः। अविद्यया देहाद्यध्यासेनात्ता स्वीकृता पीडा राज्यनाशदुःखं येन सोऽलर्कः तं श्रीदत्तं प्राह हे यतीश भगवन् शत्रुद्वारातीव दुःखं ममोपपन्नं तस्माद् दुःखात्प्रपन्नं शरणागतं मामवेति गुरूपसदनं ज्ञातव्यम्॥७९॥

( स्रग्धरावृत्तम् )

श्रीदत्तः प्राह दुःखं क्व वपुषि तव तद्दर्शय त्वं च को वा ।
ब्रूहीत्युक्तः स्वदेहो घटवदिह तथाचेतनः प्राण एषः ॥
क्षुत्तृड्वानिन्द्रियाणि स्वविषयग्रहणार्हाणि चित्सन्निधाना-
द्बुद्धीश्चाकादिहेतू अपि निखिलमिदं वेद्मि योऽहं स साक्षी ॥

तमधिकारिणं ज्ञात्वा श्रीदत्तः प्राह तमिति शेषः । भो राजपुत्र तव वपुषि क्व दुःखमस्ति तद्दर्शय तत्रैव प्रतीकारं कुर्यामिति भावः । तथा च त्वं को वा देहादिरूपो वा संघातरूपो तद्विलक्षणो वा तावद्ब्रूहि इति शक्तिपातपुरःसरं शिष्यमेवाचार्यः पृष्टवान् । आगमश्च 'परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन । योजयति परे तत्त्वे स दीक्षयाचार्यमूर्तिस्थ'

इति। एवमुक्तः सः विवेचयति स्वदेहो जडः भौतिकत्वाद् घटवत्। तथेह देहे वर्तमानः प्राणः एषः पञ्चवृत्तिकः अचेतनः बाह्यवायुवज्जडः क्षुत्तृड्वान् क्षुत्पिपासाव्यतिरिक्तमन्यन्न जानातीत्यर्थः। इन्द्रियाणि श्रोत्रादीनि चित्सन्निधानाच्छब्दादिस्वस्वविषयग्रहणक्षमाणि तेषां करणत्वाद्वास्यादितुल्यत्वं। तथा हृत् मनः संकल्पात्मकं धीर्बुद्धिर्निश्चयात्मिका अत्र मनसि अनुसन्धानरूपचित्तस्यांतर्भावः बुद्धौ अभिमानात्मकाहंकारस्यान्तर्भावः एते अपि तथा। भौतिकत्वाविशेषादिन्द्रियवत्। 'अन्नमय हि सोम्य मन' इति भौतिकत्वश्रवणान्मृदपेक्षया स्वच्छकाचवत् तेषां अंतःकरणत्वेऽपि जडत्वं। एते देहादयः पृथक्पृथग्वा संहता वा नात्मरूपाः संहतानामसंहतपरार्थत्वं गृहादौ दृष्टं। अकादिहेतू सुखदुःखादिकारणभूते अप्येते हृद्धियौ अपिशद्बाद्दुःखाद्याश्रये अपि तत्रैव दुःखादि तिष्ठति एवं क दुःखमिति यत्पृष्टं तदन्तःकरण एव दुःखं इदं देहादि निखिलं योऽहं वेद्मि सोऽहं बोधरूपः साक्षी चाविकृतः। 'साक्षित्वमपि बोद्धृत्वमविकारितयात्मन' इत्युक्तेः। कस्त्वमित्यस्येदं विवेचनम्॥ ८०॥

**आत्माहं दुःखसौख्ये न मम कुमनसस्ते मतेऽध्यासतो मे**
**ते अद्यांजः सबीजे मयि विलयमिते श्रीगुरोः संप्रसादात्॥**
**नाहं दुःखी सुखी वा स्त्र्यनुगसुतधरादेरपेक्षा कुतो मे**
**सम्बन्धोङ्गस्य नो मे तत इह तु कुतः स्वात्मनः शत्रुमित्रे॥८१॥**

विविच्याह—अहं देहादिविलक्षण आत्मा तस्य मम सुखदुःखे न। ते तु कुत्सितस्य विवेकशून्यस्य मनस एव। तर्हि पूर्वं कथमुक्तमत आह ते सुखदुःखेन्तःकरणाध्यासान्मे मते श्रीगुरोर्भवतः प्रसादादद्यांजसा सबीजे मूलाज्ञानसहिते विशेषेण लयं गते अतोऽहं न सुखी नापि दुःखी उभयोर्मायिकत्वात् तर्हि स्त्र्यादिसंबन्धापेक्षास्ति न वेत्यत आह—मे अंगस्य देहादेः संबन्धो न ततः स्त्र्याद्यपेक्षा कुतः यस्मादेवं तस्मादिहावस्थायां तु स्वरूपभूतात्मनो मे शत्रुमित्रे कुतः ऐकात्म्यदर्शनात्तेऽपि नेति भावः॥ ८१॥

गुरुर्जगौ साऽप्यपि संविदस्याःस्थेम्नेऽद्य योगी मितभैक्ष्य-
भुक्स्याः ।
जितासनश्वासहृषीकचित्तः सञ्चिन्तयात्मानमभेदतोन्तः॥८२॥

तच्छ्रुत्वा गुरुः श्रीदत्तः जगौ हेऽलर्क इयं संवित्साध्वी इदं ज्ञानं समीचीनमपि पञ्चम्यादिभूमित्रयरूपजीवन्मुक्तिसंपादनावि(र्थं)द्वैतप्रतीत्या संशयविपर्ययप्रसंगादुत्पन्नतत्वज्ञानस्याबाधेन सुरक्षणार्थं वासनाक्षय-मनोनाशतत्वज्ञानाभ्यासवशाज्ज्ञानरक्षादिपञ्चप्रयोजनसिद्ध्यर्थं अस्याः संविदः स्थेम्ने स्थैर्यायाद्य त्वं योगी भव कथं मिताभिक्षान्नभुक् । मितत्वं योगशास्त्रे उक्तं 'द्वौ भागौ पूरयेदन्नैस्तृतीयं च तथांबुना । वायुसंचरणार्था-य चतुर्थमवशेषयेत्' इति । भैक्ष्यं क्षत्रियस्य निन्द्यमपि ब्रह्मचर्यवानप्रस्था-श्रमे तस्यापि विहितं । 'भवत्पूर्वां ब्राह्मणो भिक्षां याचेत भवन्मध्यां राजन्य' इति । भैक्ष्यमित्युपलक्षणं यमनियमानां । जितानि आसनादी-नि येनेत्यासनप्राणायामप्रत्याहारधारणा उपदिष्टाः । अन्तः शुद्धान्तःकरणे प्रत्यगभिन्नमात्मानं सम्यग्लयविक्षेपनिवारणपूर्वकं चिन्तय ॥ ८२ ॥

( अनुष्टुप् )

पीयूषविषदृष्ट्यात्तौ मानामानौ सुबन्धदौ ॥
विषपीयूषदृष्ट्यात्तौ मानामानौ सुमुक्तिदौ ॥ ८३ ॥

पीयूषं अमृतं अमृतदृष्ट्या आत्तः स्वीकृतो मानः सुतरां बन्धदो भवति विषदृष्ट्या गृहीतो अमानः अपमानोऽपि बन्धदः अत एव विषदृष्ट्या गृहीतो मानः सुतरां मुक्तिदः अमृतदृष्ट्या गृहीतोऽपमानोऽपि सुमुक्तिद इत्यर्थः ॥ ८३ ॥

( आर्यावृत्तम् )

ममता यत्र तु दुःखं तत्र तु मार्जारभक्षिते स्वशुके ॥
यद्वद् दुःखं न वृके तद्वदहंयोः सदैव सुखदुःखे ॥ ८४ ॥

यत्र मम(ता)तत्र दुःखं मार्जारभक्षिते स्वशुके यद्वद् दुःखं तद्वत् मार्जार भक्षि(ते)वृके उंदुरे न दुःखं एवमहंयोरहंकारवतः सदैव सुखं दुःखं च ॥ ८४ ॥

(आर्यावृत्तम्)

**ममताहंता त्यक्ता येनास्य तु मुक्तता ततः सुमते ॥**
**त्यज ते तत्त्यागः सुमदलनात्सुकरोऽपि साररसदृक्के॥८५॥**

ममताहंता च येन त्यक्ता तस्य मुक्तता। ततस्तस्मात् हे सुमते ते उभे त्यज हे साररसदृक् हे ब्रह्मज्ञ ते तव तत्त्यागः सुमदलनादपि सुकरः ॥ ८५ ॥

(अनुष्टुप्)

**सिद्धयोत्रान्तरायस्ता जहि यद्यप्युपस्थिताः ॥**
**ततः समाधिसिद्धिस्ते ततो भूयो भ्रमो न ते ॥ ८६ ॥**

अत्र यद्यप्युपस्थिताः सिद्धयो भवन्ति तथापि ताः अन्तरायो मोक्षविघ्न एवातस्ता उपस्थिता अपि जहि ततः सिद्धित्यागात्ते समाधिसिद्धिः ततः समाधिसिद्धे(द्धौ) भूयस्ते भ्रमो न भविष्यति ॥ ८६ ॥

(आर्यावृत्तम्)

**जीवन्मुक्तिः प्रत्यगभिन्नपरमात्मतत्त्वविज्ञानात् ॥**
**सुतरां मनोविनाशादत्रैव त्रिविधवासनाहानात् ॥ ८७ ॥**

प्रत्यगभिन्नपरमात्मतत्त्वानुभवात् अत्यन्तं मनोभंगात् देहवासना शास्त्रवासना लोकवासना चेति त्रिविधवासनाक्षयाच्चात्रैव जन्मनि ते जीवन्मुक्तिः ॥ ८७ ॥

स्वप्रकाशज्ञानस्वरूपो नित्य एक एवात्मा तस्य कर्तृत्वादिधर्मा देहोपाधिकास्तद्व्यतिरिक्तं सर्वमनित्यं मायामयं चातः सर्वतो विरक्तः सन्नात्मज्ञानेन मुच्यत इति श्रुतिसमन्वयेनोपदिष्टोऽलर्कः निवृत्या कृतार्थोऽभूदिति। ननु चैवं जैमिनीयमतम्–'अहंप्रत्ययविज्ञेयो ज्ञातव्यः सर्वदैव हि'

इत्युक्तोऽहंप्रत्ययाविज्ञेय एवात्मा प्रतिशरीरं भिन्नः कर्तृभोक्तृरूपश्च न तु तत्स्वरूपभूतो निर्विकार एकः परमात्मास्ति। तस्य च स्वर्गादिभोगानामनित्यत्वे, भोगकालस्य वा, तदुपायकर्मबोधकागमस्य वा, भोक्तुरात्मनो वाऽनित्यत्वे वैराग्यं स्यान्न त्वेतदस्ति। मायामयत्वेन भोग्यविच्छेदेऽपि न वैराग्यं। स्रक्चन्दनवनितादिभावानां प्रवाहरूपेण स्थितिर्हि नित्या। 'न कदाचिदनीदृशं जगत्' इत्युक्तेः। ततः कर्ता कश्चिदीश्वरोऽपि नैव। न चात्मस्वरूपभूतं नित्यमेकं ज्ञानं। तच्च घटाद्याकारेण जायते भिद्यते चातो न नित्यज्ञानरूपवानात्मा किन्तु ज्ञानपरिणामवान् विकारित्वेऽपि तस्यानित्यत्वं न। 'विक्रिया ज्ञानरूपास्य न नित्यत्वे विरोत्स्यत' इत्युक्तेरतो मुक्तिदशायामिन्द्रियादिरहितस्य तस्य परिणामासंभवाज्जडत्वेन तत्प्राप्तेरपुरुषार्थत्वात्कुतः प्रेयसीं प्रवृत्तिं त्यक्त्वा निवृत्त्या कृतार्थोभूदत उच्यते–

**एवं श्रीगुरुणा यथावच्छिक्षितस्य देहाद्युपाधिकमात्मनो नानात्वं कर्तृत्वं भोक्तृत्वं च लोककालागमात्मानित्यत्वं च भोग्यभावानां भगवन्मायामयत्वं च गुरुप्रसादाद्विजानतो विरतस्य प्रशान्तस्य तस्य युगपत्त्रिकाभ्यासवशादपरोक्षसाक्षात्कारदार्ढ्यमभवत् ॥ ८८ ॥**

एवं पूर्वोक्तप्रकारेण श्रीगुरुणा दत्तात्रेयाचार्येण यथाशास्त्रं शिक्षितस्य आत्मनो नानात्वं देहाद्युपाधिना नानाघटजलवशाच्चन्द्रस्येव न स्वतः 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति श्रुतेः। एवं तार्किकमतं कर्तृत्वं, सांख्यमतं भोक्तृत्वं न तात्विकं आत्मनोऽकर्तृत्वादविकारित्वाच्च। सांख्यतार्किकयोर्मीमांसकस्य च मताश्रयेऽद्वैताऽसिद्धिः। तथा लोकाः पुण्योपभोग्याः स्वर्गादयः, कालो भोगकालः, आगमः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं' 'अपाम सोमममृता अभूम' इति प्राशस्त्येनार्थवादप्रतिपादकः। आत्मानो जीवाः कर्तृत्वादिलक्षणा एषामनित्यत्वं च भोग्यभावानां स्रक्चन्दन-

वनितादीनां च भगवन्मायामयत्वाच्चैभ्यो हेतुभ्यो गुरुप्रसादान्मुख्य-हेतोश्च गद्योक्तं यथावद्विशेषेण जानतोऽत एव विरक्तस्य ततः प्रशान्तस्य तस्यालर्कस्य युगपदेकसमयावच्छेदेन तत्त्वज्ञानमनोभङ्गवासनाक्षयत्रि-काभ्यासवशादपरोक्षसाक्षात्कारदृढताऽभवत् ॥ ८८ ॥

( पुष्पिताग्रावृत्तम् )

**गुणरचितनृदेहसंसृतिघ्नीं परपरमात्मविदं स्वशिष्यलब्धाम्॥ द्रुतमिह विदुषोऽस्य सावकाशाण्डचयभृतो जठरे ममुर्मुदो नो**

ईश्वराधीनमायागुणरचितनृदेह एव संसृतिः संसारस्तां हन्तीति तथा तां। कर्मानुबन्धित्वान्नृदेहग्रहणं। 'कर्मानुबन्धीनि मनुष्यलोके' इति-स्मृतेः। परा चासौ परमात्मविच्च तां द्रुतं झटित्येव शिष्येणालर्केण लब्धां विदुषो जानतः सावकाशं यथा तथा ब्रह्माण्डनिचयभृतोस्य श्रीदत्तस्येह जठरे मुद आनन्दा नो ममुः किन्तु बहिरेव निर्गताः ॥ ८९ ॥

( वसन्ततिलकावृत्तम् )

**गुर्वाज्ञयाग्रजमुपेत्य स आह बन्धो गुर्वाप्तराज्यमिदमस्तसु-दुःखसिन्धो॥ त्वं स्वीकुरुष्व सुहृदे तव यच्छ वा स्वत्वं स्वीकृतं परिहृतं प्रभुतामुपास्व ॥ ९० ॥**

ततः श्रीदत्ताज्ञया सोलर्कः अग्रजं सुबाहुं उपेत्य प्राह ज्ञानमहिम्ना अस्तः सुतरां दुःखमेव सिन्धुर्येन तत्संबुद्धौ हे बन्धो इत्युपकारकवाचक-त्वेन भातृदृष्टिं त्यक्त्वा संबोधयतीति गम्यते। गुरुः पिता तस्मादाप्तमिदं राज्यं त्वं स्वीकुरुष्वाथवा तव सुहृदे काशिराजाय प्रयच्छ। यदज्ञानेन मया स्वत्वं पूर्वं स्वीकृतं तदद्य परिहृतं ततस्त्वं प्रभुत्वं अस्य राज्यस्या-धिपत्वं उपास्व ॥ ९० ॥

**सुबाहुरालिंग्य तमाह बन्धो कारुण्यसिन्धोः कृपयास्तबंधो॥ कृतार्थता ते समभागता नः कृताद्य दैवेन भवैकतानः ९१**

एवं वदन्तं सुबाहुरालिंग्याह–अन्नदानादिनोपकृतत्वात् हे बन्धो। बध्नातीति बन्धुर्माया अस्ता बन्धुर्येन तत्संबुद्धौ हे अलर्क कारुण्यसिंधो-र्दत्तात्रेयस्य कृपया ते कृतार्थता जाता अद्य दैवेन विधिना सर्वदैवत-भूतेन श्रीदत्तात्रेयेण सा नः चतुर्णामपि सोदर्याणां समभागता कृता। अहो भाग्यं अथातः ज्ञानदार्ढ्यायैकतानोऽनन्यवृत्तिर्भव॥ ९१॥

( उपजातिवृत्तम् )

**स्वस्त्यस्तु ते काशिप गच्छ यामि वनं कृतार्थोऽद्य न कामकामी तं काशिराजोऽप्यवदत्किमाप्तं तन्नैव जाने वद मां तवाप्तम् ९२**

एवमलर्कमुक्त्वा काशिपमाह सुबाहुः हे काशिप गच्छ स्वपुरमिति शेषः ते स्वस्ति अस्तु कृतः सहजोद्धाररलक्षणोर्थो येन तादृशोऽहं वनं यामि। कुतो लब्धं राज्यं जहासीत्यत आह अहं कामान्कामयतेऽसौ कामकामी तथाभूतो न। अपरोक्षसाक्षात्कारेण पर्याप्तकामत्वात्। श्रुतिश्च 'कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामा' इति। एवं वदन्तं तं काशिराजोऽप्यवदत् त्वया किमाप्तं तत् अहं नैव जाने त्वया यदाप्तं तन्मां वद अथवा तवाप्तं हितकारिणं मां वद॥ ९२॥

( पू० इन्द्रवज्रा० उत्त० वंशस्था )

**योगी जगौ मान्यसतीसुता वयं भोगी जजानर्षभवत्क्षितावयम्॥ भवत्सहायात्समतात्रिजेक्षयाभवत्सगर्भ्यस्य च शान्तिरक्षया॥ ९३॥**

पृष्टस्योत्तरमाह योगी सुबाहुः तं जगौ हे काशीश वयं मान्यसती-सुताः अस्माकं मध्येऽयं एकः क्षितौ ऋषभवत् वृषवत् भोगी जजान ततो भवत्साहाय्यात् पराजितस्यास्य जाता यात्रिजेक्षा श्रीदत्तात्रेयकृपादृष्टिः तयाद्य सगर्भ्यस्यालर्कस्यास्माभिः सह समता जाता तथा चाक्षया शान्तिरपि जाता॥ ९३॥

( हरिणीवृत्तम् )

स तमथ जगौ स्वत्वान्यत्वे न ते करुणानिधे
निरुपमदयाक्लिन्नस्वान्तोऽसि सद्गुणशेवधे ॥
अभवमधुना दैवात्तेहं सुसाप्तपदीनभा-
क्कथमपि ततो मां शाधि स्यान्न येन पुनर्भ्रमः ॥ ९४ ॥

एवं श्रुत्वाथ स काशिराजा तं सुबाहुं जगौ हे करुणानिधे हे सद्गुणनिधे स्वत्वं अन्यत्वं च ते तव न। यतस्त्वं निरुपमदयाक्लिन्नचित्तोऽसि अहं चाधुना दैवात्ते साप्तपदीनभाक् अभवं। साप्तपदीनं सख्यमिति खः। 'सतां साप्तपदी मैत्री पुनात्युरुतरादघात्' इत्युक्तेः ममाप्यधिकारित्वं ततस्तस्मात्कथमपि केनापि प्रकारेण मां शाधि शिक्षय येन शासनेन पुनर्भ्रमो न स्यात् ॥ ९४ ॥

( मन्दाक्रान्तावृत्तम् )

एवं दीनं प्रणतमथ तं खिन्नचित्तं नितान्तं
प्रोचे नो चेन्नरवर महासंपदार्या इहाहुः ॥
यां तत्त्वज्ञाः परमहितदां साधनाख्यामृते तां
नो बोधाप्तिर्भवति भवतो नास्त्यसावाश्रयैताम् ॥ ९५ ॥

अथैवं दीनं यथा तथा प्रणतं नितान्तं खिन्नचित्तं तं प्रोचे सुबाहुरिति शेषः। इह मोक्षोपाये तत्वज्ञा आर्याः यां परमहितदां साधनाख्यामाहुः सा महासंपत् नो चेत्तर्हि हे नरवर तामृते। चांद्रव्याकरणतो द्वितीया। बोधाप्तिर्नो भवति यतो भवतोऽसौ संपन्नास्ति तत एतां साधनसंपदमाश्रय ॥ ९५ ॥

( गद्यम् )

तदनु महानुभावसेवया षड्लिंगैस्तात्पर्यावधारणलक्षणेन श्रवणेन युक्त्या संभावितत्त्वानुसंधानलक्षणेन मननेन ताभ्यां

**निःसंशयेऽर्थे स्थापितचित्तस्य विजातीयानात्मप्रत्ययानन्तरितसजातीयात्मप्रत्ययप्रवाहीकरणलक्षणेन निदिध्यासनेन ध्यातृध्यानभावरहितसुस्थिरध्येयाकारान्तरस्थितिलक्षणेन समाधिना कृती भव ॥ ९६ ॥**

तदनु साधनसंपत्प्राप्त्यनन्तरं 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति श्रुतेर्महानुभावसेवयोपक्रमोपसंहारादिषड्विधलिङ्गैः सर्ववेदान्तानामद्वैते ब्रह्मणि तात्पर्यावधारणलक्षणेन संशयहारिणा श्रवणेन तथा परापरात्मनोर्युक्त्या एकरूपसंभावितत्वानुलक्षणेनासंभावनाहारिणा मननेन तथा ताभ्यां श्रवणमननाभ्यां निःसंशयेऽखंडैकरसेऽर्थे देशादिसंबंधेन स्थापितचित्तस्य देहादिविजातीयानात्मप्रत्ययवर्जितनित्यशुद्धबुद्धमुक्तपरमानंदाद्वयास्थूलादृश्यादिलक्षणसजातीयात्मप्रवाहीकरणलक्षणेनासंभावनाहारिणा निदिध्यासनेन ध्यातृध्यानभावत्रिपुटीरहितसुस्थिरध्येयाकारान्तःकरणलक्षणेन समाधिना कृती कृतकृत्यो भव । अत्र प्रमाणान्याकरतोऽवगन्तव्यानि विस्तरभयान्नेह प्रतन्यते ॥ ९६ ॥

( उपजातिवृत्तम् )

**यद्यप्यलर्को विषयात्तचित्तः स्वांबाप्रसादेन हि येन दत्तः**
**गुरुर्गुरूणां भगवानुपात्तस्ततः स मुक्तोस्तसमस्तवित्तः ॥९७॥**

नन्वेवंभूतोऽलर्कः कदा जात इति चेद्बाढं यद्यपि अलर्को विषयासक्तचित्तोऽभूत्तथापि स्वमातृप्रसादेन येन गुरूणां ब्रह्मादीनां गुरुः । 'यो ब्रह्माणं विदधाति' इति श्रुतेः भगवान् श्रीदत्तः शरणत्वेनोपात्तः ततस्तत्प्रसादादस्तं समस्तं मानुषं दैवं च वित्तं येन स वशीकारसंज्ञकवैराग्ययुक्तः सोऽलर्को मुक्तोऽभूत् ॥ ९७ ॥

( स्वागतावृत्तम् )

**कोटिजन्मसुकृतादपि लाभो दुर्लभोऽस्य समभूदिह लाभः ॥**
**यद्दृशा वितिमिरोऽयमलर्कः शेषयेत्किमुदितोऽन्धमिशार्कः ९८**

अहो कोटिजन्मार्जितसुकृतादपि यस्य लाभो दुर्लभोऽपि मातृप्रसादादस्यालर्कस्येह जन्मनि अस्य श्रीदत्तात्रेयस्य साक्षात् लाभः समभूत् तस्य दत्तात्रेयस्य दृष्ट्या दर्शनेन वाऽयमलर्कः वितिमिरः आवरणभूतहार्दतमोरहितोऽभूत् अर्थांतरेण दृढयति इह लोके उदितः सूर्योऽन्धं अन्धकारं शेषयेत्किं अपि तु न ॥ ९८ ॥

( शार्दूलविक्रीडितम् )

**इत्युक्त्वानुजमाह याहि विपिनं राज्यं कुरुष्वाथवा**
**यास्येऽहं त्विति सोऽगमत्तदनुगः काश्योऽपि सोऽगाद्गतिं**
**पुत्रन्यस्तभरोऽप्यलर्क उदरामत्रो वनं पावनं**
**गत्वात्यन्तिकबुद्धिलब्धपरमानन्दो जगौ पावनम् ॥ ९९ ॥**

इति काशिपमुक्त्वाऽनुजमलर्कमाह भो भ्रातः विपिनं याहि अथवा राज्यं कुरुष्व उभयत्रापि ते लेपो न अहं तु वनं यास्ये न राज्यमिति हार्दं तुशब्दस्य। इति उक्त्वा स सुबाहुरगमत् वनमिति शेषः। काश्यः काशिराजोऽपि पुत्रे न्यस्तो राज्यभरो येन स तदनुगः सुबाहोः पृष्ठतो गत्वा सोऽपि काशिराजोऽपि तत्प्रसादाद्गतिं मुक्तिमगात्। पुत्रन्यस्तभर इति देहलीदीपन्यायेनोभयत्राप्यन्वेति पुत्रन्यस्तभरोऽलर्कोऽपि उदरमेवामत्रं भिक्षासंचयपात्रं यस्य स पावनं वनं गत्वा। ज्ञानिनो विद्वत्संन्यासाधिकारित्वेपि 'मुखजानामयं धर्मो यद्विष्णोर्लिंगधारणं। बाहुजातोरुजातानामयं धर्मो न विद्यत' इति स्मरणादस्य क्षत्रियत्वाद्वनगमनमेव समीचीनं। बुद्ध्या लब्धश्चासौ परमानंदश्च तथोक्तः आत्यन्तिकः बुद्धिलब्धपरमानन्दो यस्य सः। 'सुखमात्यंतिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्' इति स्मृतेः श्रोतुर्वक्तुश्च पावनं जगौ ॥ ९९ ॥

**अहहाऽभेदेनायं भवहाप्तो मे निर्मायं ॥ ध्रु० ॥ अत्यर्थं यस्य तु सदयं भक्त्यर्थं मृदुलं हृदयं। युक्त्यर्थं भाविकहृदयं मुक्त्यर्थं**

संसृतिहृदयं॥ (अन्यारीतिः) तममेयं श्रुतिगणगेयं हृतमायं मुनि-विज्ञेयं। अद्वयं ह्यत्रेस्तनयं भावये दत्तात्रेयं॥ १॥ तृष्णायां सत्यां स्त्र्याद्यं यल्लोके तन्नैकस्य। तृप्तिदं विषयसुभोगस्तृप्तयेऽप्यत्र तु कस्य॥ (अन्यारीतिः)॥ तृष्णायां नष्टायां मे भोगेच्छा शिष्टा का मे। श्रीदत्तेऽत्रात्मारामे सुतरां मे तस्थौ हृदयं॥२॥ आगमापायीन्द्रियजं सोपाधिकमकसंभिन्नं। आगमान्यदृशा दृष्टं यत्सुखं स्वस्माद्भिन्नं (अन्यारीतिः) मौर्ख्यं तत्सम्विदमेवं दग्ध्वा योगेन कुभावं प्राप दत्तेनैकीभावं वासुदेवेनैवामायम्॥ ३॥

अहहेऽत्यद्भुते मे मया अभेदेनाखंडैकरसत्वेन मायारहितं यथा तथाऽयं भवनिवर्तकः श्रीदत्त आत्मत्वेन आप्तः॥ भक्त्यर्थं स्वभाक्ति-प्रयोजनाय भक्तिं प्रथयितुं स्वभक्तेषु यस्यात्यर्थं सदयं मृदुलं च हृद् हृदय-मस्ति। हृत् अयमिति पदच्छेदः कार्यः। युक्त्यर्थं योगासिद्ध्यर्थं भावि-कस्य हृदि अयतेऽसौ भाविकहृदयः तथा भक्तानां मुक्त्यर्थं अयं भगवान् संसारहृत् ईदृक् यस्तं अमेयं प्रमाणाविषयं। तर्हि कथं तत्प्राप्ति-रिति चेच्छ्रुतिद्वारेत्याह श्रुतिगणैरतद्व्यावृत्त्या विधिमुखेन च गेयं। हृता परिहृता भक्तमाया येन। तं श्रुतिगणगेयत्वेऽपि श्रुतिद्वारैव मुनिभिः मनन-शीलैः विज्ञेयं। कथं अद्वयं मायाविद्योपाधिकृतद्वैतशून्यं। हि प्रसिद्धं लोकोद्धारार्थं स्वेच्छया स्वां प्रकृतिमधिष्ठायोर्जितसत्वेन लीलया जातमिवा-त्रेस्तनयं दत्तात्रेयं भावये॥१॥ तृष्णायां सत्यां स्त्र्याद्यं यल्लोके तन्नैकस्य तृप्तिदं भवति अत्र विषयभोगः कस्यापि तृप्तये भवति किं अपि तु नैव। 'न जातु कामः कामानां भोगेनैवोपशाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धत' इत्युक्तेः। तृष्णायां नष्टायां सत्यामद्य मे भोगेच्छा का शिष्टा न कापि अतो विक्षेपाभावात् अत्रात्मारामे श्रीदत्ते मे हृदयं सुतरां तस्थौ॥२॥ आगमापायि उत्पत्तिनाशशीलं इन्द्रियजन्यं सोपाधिकं

दुःखसंभिन्नं आगमान्यदृशा लौकिकदृष्ट्या दृष्टं स्वस्माद्भिन्नं अनात्मलक्षणं च। ईदृशं गुणबुद्ध्या यद् दृष्टं तन्मौर्ख्यं अबुद्धत्वात्। 'ये हि संस्पर्शजा भोगा' इति स्मृतेः। इदं त्वपरोक्षं तृष्णाक्षयानन्तरं श्रीदत्तात्रेयप्रसादादाप्तं अतीन्द्रियं बुद्धिग्राह्यं आत्यन्तिकं सुखं तु सत् सत्यं अबाधितत्वान्नित्यत्वान्निरतिशयत्वान्निरुपाधिकत्वाच्चेति भावः। एवं गानं कृत्वा योगेनाग्निधारणया कुभावं देहादिं दग्ध्वा अमायं यथा तथा स्वस्मिन्भूतानि वासयति भूतेषु वसतीति वा वासुः स चासौ देवः कर्मेन्द्रियचालको ज्ञानेन्द्रियभासकश्च स तथा तेन श्रीदत्तेनैव एकीभावं प्राप्नोति ॥ ३ ॥

॥ द्वितीयस्तबकटीका समाप्ता ॥

---

# अथ त्रितीयस्तबकः

अथ संक्षेपतः प्रल्हादानुग्रहमाह मालिन्या—

मधुकृदजगराप्तौ प्राह वैराग्यतोषौ
स्वजपिहितजलाभं यः स्वसौख्यं सशेषे ॥
मृगजलविषयात्प्रल्हादमूचे विरक्तं
निजगतिमनुपाधिं तं च निन्ये स्वभक्तम् ॥ १ ॥

कदाचित्पर्यटता प्रल्हादेन सह्यसानौ कावेर्यां स्थितं भोगसाधनरहितमपि पुष्टांगं तमवधूतं दृष्ट्वा भोगाभावे कथं भवतो देहः पुष्टः कुतो वेदं परमं सौख्यमिति पृष्टं तस्मै भगवानिदमाह–मधुकृदिति । मधुकृत्सरघा चाजगरो महासर्पश्च ताभ्यां आप्तौ हेयोपादेयलक्षणशिक्षणेन लब्धौ यथाक्रमं वैराग्यतोषौ दानोपभोगरहितमधुद्रव्यपालननिमित्तेन प्राप्ताकस्मिकमृत्युलक्षणदोषदर्शनजन्यवैराग्यं मधुकरात्प्राप्तं । दैववशादप्रार्थितोपस्थितभोगनिर्वाहरूपः संतोषोऽजगरात्प्राप्तः तौ प्रल्हादं यः प्राह तथा स्रक्चन्दनवनितादिलक्षणशेषेण सहितः सशेषः तस्मिन्सशेषे शेषिणि आत्मनि विद्यमानं स्वरूपभूतं सौख्यं निरतिशयं निरुपाधिकं नित्यं च सुखं परमानन्दः स्वजपिहितजलाभं स्वस्माज्जातं स्वजं शैवालं तेन पिहितं तिरोहितं च तज्जलं च तस्यामेवाभा यस्य तत्तथाभूतं मृगजलमिव विषयः जातावेकवचनं, शब्दादिविषयास्तेभ्यो विरक्तं संजातवैराग्यं प्रल्हादं ऊचे । यथा तृषार्तो नरः समीपस्थं शैवालाच्छन्नं जलं त्यक्त्वा मृगतृष्णां दृष्ट्वा तत्र तत्र परिभ्रमन् जलबिन्दुमपि न प्राप्नोति स च विवेकतोऽत्र पुनरुपेत्य शैवालं दूरीकृत्य जलं प्राप्नोति तथा स्वाज्ञानविजृंभितोपाधितिरोहितमिव स्वरूपभूतसौख्यं त्यक्त्वा सुखबुद्ध्या सुखाभासरूपान्विषया-

न्धावति तत्र दुःखमेवानुभवति स च विषयदोषदर्शनादिना विरक्तस्ततः परावृत्य परमसौख्यं विन्दतीति तात्पर्यार्थः । नन्वीदृक्कैवल्यसौख्यं तच्च ज्ञानादेव लभ्यते इत्यत आह अनुपाधिं स्थूलसूक्ष्मकारणाख्यव्यष्टिसमष्टि-देहत्रयरूपोपाधिरहितां निजगतिं स्वरूपज्ञानं च ऊचे । तर्हि तदेव श्रवणं परोक्षज्ञानं तत्तु कथमपरोक्षसंसारभ्रमनिवर्तकमत आह चापरं तं स्वभक्तं गुरूपदेशाच्छ्रुतियुक्त्यनुभवपूर्वकं श्रवणमनननिदिध्यासनद्वारोपाधिमपाकृत्य निरुपाधिं सर्वोपाधिविवर्जितां निजगतिं वैष्णवपदाख्यां पुनरावृत्तिरहितां निन्ये एवं सति ईश्वराभिन्नगुरुप्रसादादेव मोक्षः सुकरः नान्यथा । श्रुतिश्च 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्'इति । स्मृतिश्च 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि न चिरात्पार्थ मय्यावेशित-चेतसाम्'इति । ननु प्रह्लादो नृसिंहभक्तः कथं स्वभक्तमित्युक्तं नायं दोषः नृसिंहोऽपि भगवदवतारान्तरमेव ॥ १ ॥

अथानुष्टुभा यदुराजानुग्रहमाह—

पञ्चविंशतिभूम्यादिगुरुप्राप्तं स्वशिक्षणं ॥
योन्वीक्षणं यदुं प्रोचे हेयोपादेयलक्षणम् ॥ २ ॥

पञ्चविंशतिसंख्याकगुरुभ्यः प्राप्तं हेयोपादेयलक्षणं बहिःप्रवृत्ताक्ष-गणस्य शनैः प्रत्यक्प्रवाहेणान्वीक्षणं स्वशिक्षणं यदुं प्रति प्रकर्षेण यः भगवानूचे ॥ २ ॥

अन्येषामप्यनुग्रहं संक्षिप्याह योगिन्या—

धृतिसत्यशमादिसाधनैः सकुसंगोत्सृतिभिर्मरुद्धनैः ॥
अहिपिंगलसाध्यदेवता गतिमूचे य इज्ञानताविता ॥ ३ ॥

'तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वांगानि सत्यमायतनम्' इत्यादिश्रुतेः धृतिः सात्विकी सत्यं यथार्थभाषणं शमोन्तःकरणोपरमः

तदादिभिः साधनैः कुसङ्गः खलपामरादिसङ्गस्तस्योत्सृतिस्त्यागस्तत्सहितैः मरुद्धनैर्दैवधनैर्दैवीसंपदेति यावत् अहिपिङ्गलः पिङ्गलाख्यनागश्च साध्यदेवताश्च ताः प्रति इहास्मिन्लोके अनतानामविता त्राता यः भगवान्गतिं सद्गतिं ज्ञानं वोचे ॥ ३ ॥

( उपजातिवृत्तम् )

**आत्रेयदत्तो विधिविष्णवजात्मा स मे परात्मा गुरुदेवतात्मा ॥**
**यो नोऽनसूयात्रिसुतोऽधिपुण्यादिहोपलब्धः सुरतो महात्मा॥४॥**

विधिविष्णुशिवात्मकः अत्रेरपत्यं पुमानात्रेयः स चासौ दत्तश्च स मे मम गुरुदेवतात्मा गुरुदेवतारूपः परात्मा परमात्मा कोऽसौ यः सुरतः कृपालुः महात्मा स्वात्मनोऽपि दातृत्वादुदारः अनसूयात्रिकृताधिपुण्यात् नोऽस्माकं उपलब्धः अत्रिसुतोधिपुण्यादिति पाठे नोऽस्माकमधिपुण्यादनसूयात्रिसुत इहोपलब्धः ॥ ४ ॥

अत्रिवरदोऽप्यस्माकं मोक्षदोऽयमभूदित्याह पृथ्वीवृत्तेन—

**अनन्यगतिचातकं घन इहाभिवर्षत्यलं**
**तथापि सकलासुधारिपरितृप्तयेऽलं जलं ॥**
**तथा करुणयावतीर्ण इह योऽनसूयासुतो**
**महर्षिवरदोऽपि नोऽत्र परदोऽभवत्सद्गतिः ॥ ५ ॥**

'महीनिपतितं तोयं चातकानां रुजाकरम्' इत्युक्तेः इह अनन्यगतिचातकं अभिलक्ष्य घनः अलं जलं वर्षति तथापि सकलाश्च तेऽसुधारिणो जीवाश्च तेषां परितृप्तये जलं अलं भवति एवं यथा तथा इहावतीर्णः यः अनसूयासुतः महर्षिवरदोऽत्रिवरदोऽपि सद्गतिः सः नोऽस्माकं परदोऽभवत् ॥ ५ ॥

( स्वागतावृत्तम् )

**चातकस्य कियती तृडपोऽस्मै यो ववर्ष किमलं न परस्मै ॥**
**तास्तथापि न चिरस्थितयोऽयं नित्य एष भगवान्वरदोऽयं ६**

चातकस्य तृट् पिपासा कियती अत्यल्पजलापेक्षैव । यो मेघः अस्मै जलं ववर्ष तत् परस्मै इतरजीवायालं पर्याप्तं न किं अपि तु पर्याप्तमेव तथापि ता आपश्चिरस्थितयो न भवन्ति । अयं वरदो भगवान्श्रीदत्तः नित्य एवातो मेघनिदर्शनं न समीचीनमिति भावः ॥ ६ ॥

( उपजातिवृत्तम् )

**भगीरथो यत्नत आनयद्गां गंगां स्वमुक्त्यै न इहापि मुक्त्यै ।**
**साऽयं तथैवापि च सैकदेशेऽयं स्मर्तृगामी सकलप्रदेशे ॥ ७ ॥**

भगीरथः स्वेषां बन्धूनां मुक्त्यै तपोरूपाद्यत्नतः गंगां गां भुवमानयत् सा गंगा इह भूलोके नोऽस्माकमपि मुक्त्यै अभूत् तथैवापि तेन प्रकारेणापि महायत्नादित्यर्थः अयं भगवान्दत्तात्रेयोऽत्रिणा स्वमुक्त्यै गां आनीतोऽवतारितोऽपि नो मुक्त्यै अभवत् तर्ह्युपमा घटत इति चेन्नेत्याह सा च गंगा एकदेशे उत्तरविषयैकप्रदेशे विद्यते अयं भगवान्दत्तात्रेयस्तु स्मर्तृगामी अत एव सकलप्रदेशे उपलभ्यते ॥ ७ ॥

( इंद्रवंशावृत्तम् )

**तोयैकदानो घन आगतः क्वचिद्गंगाघभंगा स्थिरकल्पपादपः॥**
**संकल्पितं रात्यघतापपापहाऽसंकल्पितं यश्चरकल्पपादपः ॥ ८ ॥**

कदाचित्क्वचिद्देशमागतोऽपि घनः मेघः तोयमेव एकं दानं यस्य सः नान्यद्दातुं समर्थ इति भावः । पूर्वोक्ता या गंगा सा अघभंगैव । तर्हि कल्पितदः कल्पवृक्षोऽत्र दृष्टान्तत्वेनोदाहरणीय इत्यत आह स्थिरश्चासौ कल्पपादपश्च स संनिहितेभ्यः संकल्पितं राति यो भगवान्दत्तात्रेयः स अघपापतापहा सन् चरकल्पपादपोऽस्ति अतः स्थिरकल्पवृक्षात्संकल्पितमात्रदानाच्चास्य व्यतिरेक उक्तः ॥ ८ ॥

अस्य लीलाविग्रहस्य दिनचर्यामाह शार्दूलविक्रीडितेन—

**निद्रा मातृपुरेऽस्य सह्यशिखरे पीठं मिमंक्षा पुरे**
**काश्याख्ये करहाटकेऽर्घ्यमवरे भिक्षास्य कोलापुरे ॥**

पाञ्चाले भुजिरस्य विठ्ठलपुरे पत्रं विचित्रं पुरे
गन्धर्वे युजिराचमः कुरुपुरे दूरे स्मृतो नान्तरे ॥९॥

अस्य निद्रा मातृपुरेऽस्ति। अस्येति प्रत्येकमनुषज्जते। सह्यशिखरे पीठं आसनं। काश्याख्ये पुरे मिमंक्षा स्नानं। करहाटके पुरेऽर्घ्यं अर्घ्योपलक्षितप्रातःसंध्यावन्दनं। अवरे श्रेष्ठे कोलापुरेऽस्य भिक्षा। पाञ्चाले पुरेऽस्य भुजिर्भोजनं। विठ्ठलपुरेऽस्य विचित्रं पत्रं तिलकं। गन्धर्वे पुरे युजिर्ध्यानयोगः। कुरुपुरे आचम आचमनं। एवं पर्यटनशीलोऽपि भक्तैः स्मृतो न दूरे वर्तते किन्तु अन्तरे साक्षाद्धार्दाकाश एव वर्तते ॥९॥

( उपजातिवृत्तम् )

तमत्रिजातं श्रुतिजातगीतं वदान्यवित्तं प्रथितं हि दत्तं
सह्याचले चन्द्रकुलोत्थ आयूराजा शरण्यं शरणं जगाम ॥१०॥

श्रुतिसमूहगीतं वदान्येषु दानशौण्डेषु वित्तं विश्रुतं। हि यस्मात्प्रथितं लोक इति शेषः। शरणे साधुं सह्याद्रौ वर्तमानं अत्रिजातं तं दत्तं चन्द्रकुलोत्थः सोमवंशीय आयूराजा पुत्रकामः सन् शरणं जगाम ॥ १० ॥

( वसंततिलकावृत्तम् )

स्वच्छांबुपूर्णसरसीसरसीरुहान्तश्चक्रेऽत्र केलिकलहं कलहंसजातं ॥
तस्मिन्रुडाद्युपरमे परमे निविष्टं देवं ददर्श वरदं वरदंडहस्तम् ११

स्वच्छांबुना पूर्णा चासौ सरसी च तस्यां सरसीरुहाणि कमलानि तेषामन्तर्मध्ये कलहंसानां जातं वृन्दं कर्तृ अत्र यस्मिन्पर्वते केलिकलहं चक्रे। रुट् क्रोधः तदादयः रागद्वेषादयस्तेषां उपरमे(मो)यस्मिन्तस्मिन्परमे सह्यपर्वते निविष्टं वरदण्डधरं वरदं देवं श्रीदत्तं ददर्श। आयुरिति शेषः ॥ ११ ॥

( भुजंगप्रयातवृत्तम् )

चिरोपोषिताक्षीष्टसत्पारणेव चिरभ्रान्तचित्तभ्रमावारणेव ॥
कृपेक्षेच्छुनाजस्य मूर्तिर्मुदेव नृपेणेक्षिता तस्य मूर्ता मुदेव ॥१२॥

दर्शनलालसया चिरं बहुकालं उपोषिते च ते अक्षिणी च तयोरिष्टाभीष्टा सत्पारणेव चिरभ्रान्तचित्तभ्रमावरणभूतेव। तस्य जन्मादिविकाररहितस्य दत्तात्रेयस्य मूर्तिर्लीलाविग्रहः कृपाकटाक्षेच्छुना नृपेण मुदेव आनन्देनेव। तस्य भगवतो मूर्तिः। मूर्ता मूर्तिमती मुदेव ईक्षिता दृष्टा। मुदेत्यत्र आपं चैव हलंतानामित्यादिना आप्॥ १२॥

( योगिनीवृत्तम् )

**स तमागतमात्मतुष्टये धुतमानं नतमात्मदृष्टये॥**
**निजगौरवभृत्सुमर्षणो निजगौ मत्त इव स्वमर्षणः ॥१३॥**

आत्मनः स्वस्य तुष्टये धुतः त्यक्तः मानो येन सः। आत्मदृष्टये स्वस्य दर्शनार्थं। नतं नम्रं आगतं तं भूपं। निजानां भक्तानां गौरवं बिभर्तीति निजगौरवभृत्। सुमर्षणः अत्यन्ततितिक्षुः ईदृगपि बहिर्मत्तः सुतराममर्षणः क्रोधन इव श्रीदत्तात्रेयः निजगौ॥ १३॥

तदेवाह शार्दूलविक्रीडितेन—

**रे रे मूढ विरूढदर्प कुपथारूढातिगूढाश्रमे**
**कस्मात्त्वं भ्रमसीत आशु न यदा यास्यस्यरं तेऽश्रमं॥**
**निःशेषभ्रममूलकृंतनमिह द्राक्कारयिष्येऽधुना**
**स्त्रीवक्त्राद्गलता समेन मधुनाशुद्धोऽस्म्यहं सीधुना ॥१४॥**

रे रे इत्यधिक्षेपसंबोधनार्थं। रे मूढ मोहग्रस्त। रे विरूढदर्प प्रादुर्भूतावलेप। हे कुपथारूढ कुमार्गाश्रित। अस्मिन्नतिगूढाश्रमे कस्मात्त्वं भ्रमसि इत आश्रमात् आशु शीघ्रं यदा यर्हि न यास्यसि चेत्तर्हि अश्रमं श्रमरहितं यथा तथा ते तव निःशेषभ्रमस्य सर्वभ्रमणस्य मूले मूलभूते पदे तयोः कृंतनं छेदनं इहात्रैव कारयिष्ये यतोऽधुना सांप्रतं स्त्रीवक्त्राद्गलता मधुना क्षौद्रेण समेन तुल्येन सीधुनाऽहं अशुद्धोऽस्मि इति बाह्यार्थः। आभ्यन्तरार्थस्तु हे अमूढ विवेकिन् रूढदर्पकुपथारूढेभ्यो विशिष्टस्तत्सं-

बुद्धौ हे विरूढदर्पकुपथारूढ । अश्रमं योगादिश्रमरहितं यथा तथा भ्रमो मिथ्यामतिः तन्मूलं मूलाज्ञानं तस्य नितरां कृन्तनं नाशं । स्त्री अमृतस्राविणी नाडी मादकत्वात्सीधु आनन्दहेतुत्वान्मधुतुल्यं अमृतं तेन शुद्धोऽस्मि। उक्तं च 'गोमांसं भक्षयेद्यस्तु पिबेदमरवारुणीं । कुलीनं तमहं मन्य इतरे कुलघातका' इति ॥ १४ ॥

(अनुष्टुप्)

भर्त्सितस्ताडितोऽप्येवं पतितोऽग्रे स नीतिमान् ॥
दयालो मा कुरूपेक्षां पाहि मेत्याह भक्तिमान् ॥ १५ ॥

मा मां पाहि रक्ष इति छेदः । अन्यत्सुगमम् ॥ १५ ॥

(अनुष्टुप्)

प्रणतं प्राह भगवानसि त्वं मयि भक्तिमान् ।
मद्यं सास्रामिषं देहि हृद्यं तोषोऽन्यथा न हि ॥१६ ॥

सास्रामिषं रक्तमांससहितं हृद्यं मनोहारि । शेषं स्फुटम् ॥ १६ ॥

(अनुष्टुप्)

तथेति साक्षात्स पशुसोमबुद्ध्याण्डयोनये ॥
यथेष्टं संस्कृतं रुच्यं तथादाच्छास्त्रयोनये ॥ १७ ॥

तथेत्युक्त्वा स राजा अण्डयोनये ब्रह्माण्डहेतवे शास्त्रयोनये वेदोत्पादकाय वेदप्रमाणाय वा । 'जन्माद्यस्य यतः' 'शास्त्रयोनित्वात्' इत्याद्यधिकरणन्यायात् । ईदृशाय श्रीदत्तात्रेयाय । साक्षात् 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठत' इत्यादिव्यवधानानपेक्षत्वात् प्रत्यक्षमेव मांसदानेन पशुयागसिद्धिर्मद्यदानेन सोमसिद्धिरिति बुद्ध्या यथेष्टं आतृप्तिपर्यन्तं न तु स्रुच्यादिना संकुचितं पदार्थान्तरेण संस्कृतं रुच्यं रुचिकरं मद्यं मांसं च यथा याचितं तथा तेन प्रकारेणाऽदात् दत्तवान् ॥ १७ ॥

(रुचिरावृत्तम्)

**इतीश्वरः क्षितिपतिना प्रसादितो मतीश्वरः स च रुचिरां प्रमोदतः जगौ गिरं वरय वरं मदर्चको न चेतरं पुनरिह याचितुं क्षमः १८**

मतीश्वरः बुद्धिप्रकाशकः इति उक्तप्रकारेण क्षितिपतिना राज्ञा प्रसादितः ईश्वरः समर्थः दत्तात्रेयः प्रमोदत आनंदेन रुचिरां शोभनां गिरं वाणीं जगौ उक्तवान्। तामेवाह हे राजन् मदर्चको मत्पूजक इह लोके पुनरितरं अन्यं नीचं वा। इतरस्त्वन्यनीचयोरित्यभिधानात्। वरं याचितुं न क्षमः एवं मनस्यानीय वरं वरय ॥ १८ ॥

( असंबाधावृत्तम् )

**भूपस्तं नत्वाहासुरसुरनरजेतारं शूरं दातारं सुरवर सुतमुत्तारं ॥ देहीत्याहेशं विधिहतमतिरेवायू रंकायैकोलं भवति जगत्यूर्णायुः**

भूपः आयुः तं दत्तात्रेयं नत्वा आह हे सुरवर असुरसुरनरजेतारं शूरं क्षात्रधर्मोपेतं दातारं दानशीलं उत्तारं पितॄणामुद्धारकं ईदृशं सुतं देहीत्याह। ननु किं नश्वरेण पुत्रेण कैवल्यं कुतो न याचितमित्यत आह आयूराजा विधिना दैवेन हता मतिर्यस्य स विधिहतमतिरेवाभूत्। अर्थान्तरन्यासेन दृढयति तथाहि जगति वदान्याग्रतोऽपि तुषं याचमानो रंकोऽप्यन्यदधिकं वरयेति वदान्येन प्रोत्साहितोऽपि ग्रामादीन्नाधिकांक्षते यतः जगति रंकाय एक ऊर्णायुः मेषोपि अलं पर्याप्तो भवति ॥ १९ ॥

( अपराजितावृत्तम् )

**प्रभुरपि च तथाविधात्मजलब्धये फलमिनपतये ददौ स्वविभूतये। स्वहृदि सकलं निधाय स भावि शं मृडयति मृदिभैर्नृपोऽपि हि बालिशम् ॥ २० ॥**

प्रभुर्दत्तात्रेयोऽपि च एवार्थे तथाविधात्मजलब्धये तथाविधपुत्रप्राप्तय एव स्वस्य विभूतिभूताय। 'नराणां च नराधिपम्' इति स्मृतेः। इनपतये राजपतये फलं ददौ किं कृत्वा स प्रभुर्दत्तः नृपस्य सकलभावि शं कल्याणं हृदि निधाय। नन्वेतदनुचितमित्यतोऽर्थान्तरन्यासः हि

यस्मात्साक्षाद्गजादिवैभववान्नृपोऽपि मृदिभैर्मृन्मयहस्तिभिः स्वबालिशं मृडयति सुखयति ॥ २० ॥

( प्रहरणकलितावृत्तम् )

**स निजपुरमगात्फलमिदमदात्स्त्रिय इयमपि गर्भमथ वरमधात् दिगधिपलवजं दिगिव जलधिजं निजपतिरतितः प्रभुफलबलतः**

स राजा निजपुरं ययौ तत इदं दत्तात्रेयदत्तं फलं स्त्रियै इन्दुमत्याख्यमहिष्यै अदात् इयमपि महिषी प्रभुदत्तफलबलात् च पतिरतिप्रसंगेन। एतेन 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति भगवद्विभूतित्वेन कामसेवनं दर्शितं । श्रुतिश्च 'प्रजातिरमृतमानंद इत्युपस्थ इति प्रज्ञयोपस्थमारुह्य' इत्यादिका । जलधिजं चन्द्रं दिगिव दिगधिपा इंद्रादिलोकपालास्तेषां लवेभ्यो मात्राभ्यो जातं 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृप' इति वचनादिगधिपलवजम् । गर्भं अधात् । अत्र स्त्रीकर्तृकं श्रौतं गर्भधारणमुक्तं । श्रुतिश्च ' यथेयं पृथिवी मह्युत्ताना गर्भमादधे । एवं तं गर्भमाधेहि दशमे मासि सूतव' इति ॥ २१ ॥

( गद्यम् )

**तदनु श्यामसुन्दरपरपुरुषेण क्षीरपूर्णशंखेनाभ्युक्ष्य मौक्तिकमात्मने दत्तमिति राज्ञ्येन्दुमत्याऽऽवेदितस्वप्नस्य श्रीदत्तप्रसादजन्यो हुण्डासुरघ्नः प्रतापी पुत्रो जनिष्यत इति शौनकोदितं भाविफलं चारणमुखाच्छ्रुतं हुण्डासुराय तत्कन्याऽऽवेदयामास ॥ २२ ॥**

स्फुटम् ॥ २२ ॥

( वसन्ततिलकावृत्तम्– )

**तप्तुं तपो नृप इतो यदि तर्हि शूरो हुण्डासुरो जितसुरोऽत्र चरोपरीशः॥ जातः स देवगदितं स्वमृतं सुतातः श्रुत्वैत्य वीक्ष्य च तथा विमना हि जातः ॥ २३ ॥**

यदि यदा नृपस्तपस्तप्तुं इतः गतः । तर्हि तदा जिताः सुरा येन सः शूरः हुण्डासुरः अत्र धरोपरि ईशो राजा जातः । सः चारणदेवगदितं स्वस्य मृतं मृतिर्नपुंसके भावे क्तः । सुतातः दुहितुः सकाशाच्छ्रुत्वा प्रत्यार्थं विलीयायूराजगृहमेत्य तथा वीक्ष्य च विमनाः दुर्मनाः जातः ॥ २३ ॥

ननूदरस्थं सूक्ष्मगर्भं कथं दृष्टवानित्यत आहानुष्टुभा—

**अन्योन्यगौरवस्पर्धिकुचास्ये नीलतार्पिता ॥**
**गर्भेण केवलं राज्ञ्या नासुरास्येऽपि सार्पिता ॥ २४ ॥**

राज्याः अन्योन्यगौरवं स्पर्धेते इति अन्योन्यगौरवस्पार्धिनौ तौ च तौ कुचौ च तयोः प्रत्येकमास्ये मुखे चूचुक इति यावत् गर्भेण केवलं नीलता कृष्णत्वमार्पितमिति न किन्तु असुरस्य मुखेऽपि सा नीलतार्पिता यथा स्तनाग्रे कृष्णे जाते तथा मरणाभिया हुण्डासुरस्य मुखमपि कृष्णं जातं इदमेव गर्भस्य बहिर्ज्ञापकं लक्षणं यदाह वाग्भट्टः—'क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचनं । जृंभाप्रसेकः सदनं रोमराज्याः प्रकाशनं ॥ अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ' इति ॥ २४ ॥

( अनुष्टुप् )—

**तद्गर्भं हन्तुमासुर्या गुप्त एत्य स मायया ॥**
**ददर्श दष्टदशनो ज्वलत्तत्र सुदर्शनम् ॥ २५ ॥**

दष्टाः दशना दन्ता येन शेषं स्फुटम् ॥ २५ ॥

( अनुष्टुप् )

**दुष्प्रधर्षात्स भीतोऽस्यै दुःस्वप्नानि व्यदर्शयत् ॥**
**त्रयीतनुमनुष्ठाय सा तद्भयमनाशयत् ॥ २६ ॥**

दुःखेन धर्षयितुमशक्यात्सुदर्शनाद्भीतोऽसुरः अस्यै इंदुमत्यै गर्भनाशसूचकानि दुःस्वप्नानि व्यदर्शयत् तदा सेन्दुमती नारायणोपनिषदुक्तप्रकारेण त्रयी वेदत्रयी तनुर्यस्य सः सूर्यस्तं अनुष्ठाय उपस्थाय तद्भयं अना-

शयन् तथा च मंत्रौ ' अद्यानो देव सवितः प्रजावत्सावीः सौभगं । परा-दुष्ष्वप्न्य ऽ सुव ॥ विश्वानि देवसवितर्दुरितानि परासुव ॥ यद्भद्रं तन्म आसुव' इति ॥ २६ ॥

(अनुष्टुप् )

ततः सुतमसूतासौ काले तुङ्गगषड्ग्रहे ॥
महेशः किं नृपगृहेऽवतीर्णो दैत्यनिग्रहे ॥ २७ ॥

ततो गर्भरक्षानन्तरं काले दशमे मासि ' दशमे मासि जायत ' इति श्रुतेः । कथंभूते काले तुङ्गान्स्वस्वोच्चान्गताः प्राप्ताः अनस्तंगताः षड्ग्रहा यस्मिन्तस्मिन्काले । सूर्यादीनां तूच्चस्थानान्याह वराहः 'अजवृषमृगांगना-कर्किमीनवणिजांशकेष्विनाद्युच्चाः । दशशिख्यष्टाविंशतितिथींद्रियत्रिघन विंशानाम् ॥ १ ॥ उच्चान्नीचं सप्तमः' इत्यादि । तथा च ' त्रिप्रभृतिभि-रुच्चस्थैर्नृपवंशं (श) भवा भवन्ति राजान' इत्यादि । पञ्चग्रहेषूच्चगेषु तु चक्रवर्तित्वं षट्सु तूपरिष्टाल्लोकस्याप्याधिपत्यत्वं सूर्यो (र्य) स्योच्चं मेषः बुधस्य तु कन्यात एवैककालीना सप्तग्रहोच्चता न संभवति दैवशालिनो नहुषस्यैकस्य तु जन्मनि षड्ग्रहोच्चयोगवशात्तेनैव देहेनैन्द्रपदारोहणमिति। सुतं पुत्रं असूत । कथंभूतः महेशः साक्षान्महादेवः दैत्यनिग्रहे विषये नृपगृहेऽवतीर्णः किमित्युत्प्रेक्षा ॥ २७ ॥

(अनुष्टुप् )

आनन्दो भूपतेः पूर इवाब्धेरब्जवीक्षणात् ॥
नान्तः स्थातुं समर्थोऽभूत्पुत्रसद्रत्नवीक्षणात् ॥ २८ ॥

पुत्र एव सद्रत्नं तस्य वीक्षणादवलोकनात् आनन्दो भूपतेरन्तःशरीरे स्थातुं न समर्थोऽभूत् किन्तु बहिर्निर्गत एव । कस्येव पुत्ररूपी योऽब्ज-श्चन्द्रस्तस्योदयकालीनप्रत्याह्निकवीक्षणात् आनन्दोऽब्धेर्महोदधेरन्तः स्थातुं न समर्थ इव सोपि तदा पूररूपेण बहिर्निर्गच्छतीति लोकप्रसिद्धिः॥२८॥

( अनुष्टुप् )

**मुदाप्लुतोऽभ्यर्च्य देवान्स पितॄन्मुक्तबन्धनः ॥**
**धनाद्यदाद् द्विजातिभ्यो जातकृत्ये महाधनः ॥ २९ ॥**

मुदा आनन्दाश्रुभिः प्लुतः यद्वा पुत्रोत्पत्तिकाले शीतोदस्नानस्य (उदकस्योदः सं.) विहितत्वान्मुदा आनन्देन आप्लुतः स्नातः महद्‌-परिमितं धनं यस्य स महाधनः स राजा जातस्य शिशोः कर्तुं योग्यं कृत्यं जातकर्माख्यसंस्कारविशेषो नालछेदनात्पूर्वं विहितः। उक्तं आश्वलायनेन 'कुमारं जातं पुरान्यैरालंभात्सर्पिर्मधुनी हिरण्यनिकाषं निरण्येन प्राशयेत्' इत्यादि। तस्मिन्जातकृत्ये देवान्पितॄनभ्यर्च्य स्वस्तिवाचनपूर्वकं वृद्धिश्राद्धं कृत्वेत्यर्थः। मुक्तं पितृणाख्यबन्धनं येन स मुक्तबन्धनः सन् तथा च श्रुतिः 'ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति। पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्' इत्यादि। द्वे जाती उत्पत्ती येषां ते द्विजातयः विप्राः स्मृतिश्च 'जन्मना जायते शूद्रः संस्काराज्जायते द्विज' इति तेभ्यः धनादि आदिशब्दाद्गोभूवासोन्नादीनि ग्राह्याणि अदाद्दत्तवान् ॥ २९ ॥

(अनुष्टुप्)

**मायामाराध्य मायावी गत्वारिष्टं स दानवीं ॥**
**मायामुद्भाव्य तं पोतं सुप्तेभ्योऽहरदद्भुतम् ॥ ३० ॥**

मायास्ति यस्य स मायावी। अस्मायेति विनिः। सोऽसुरः तामसीं मायां आराध्योपास्य दैवयोगाद्बहिरागतायाः कस्याश्चिद्दास्या अंगं प्रविष्टः सन् अरिष्टं सूतिकागृहं गत्वा तत्र प्रस्वापिन्याख्यां दानवीं मायां उद्भाव्य कल्पयित्वा 'स्वप्न स्वप्नाधिकरणे सर्वं निष्वापयाजिनं। आसूर्यमन्यान्स्वापय व्यू'ष्टहंजाग्रियादहम्' इति मंत्रशक्तिमुपन्यस्येत्यर्थः। ततः सुप्तेभ्यो मात्रादिभ्यः सकाशात् अद्भुतं आश्चर्यकारकं तं पोतं अहरत्। ननु स्वापात्पूर्वं लोकैः कथं स न ज्ञात इति चेन्मायावीत्यनेन सर्वनिर्वाहः। मायाविनां तु 'य आस्ते यश्च चरति यश्च पश्यति नो जनः। तेषां

संहन्मो अक्षाणि' इति मंत्रशक्त्या सर्वेन्द्रियान्तःकरणशक्तिमोषणसामर्थ्यमस्त्येवातो नाश्चर्यम् ॥ ३० ॥

ननु तदा दत्तात्रेयोऽपि मायायाः भीतः किमित्यत आहानुष्टुभा—

शक्तो दत्तोऽप्यदान्मंत्रशक्त्यै मानं स दानवः॥
नवपाकं स्त्रियै दत्वा तत्पाकं कर्तुमादिशत् ॥ ३१ ॥

मायानिवारणे शक्तोऽपि दत्तः मंत्रशक्त्यै मानं दत्तवान् स दानवः हुंडासुरः नवो नूतनश्चासौ पाकोऽर्भकश्च नवपाकस्तं 'पोतः पाकोर्भको डिंभ' इत्यमरात्। स्त्रियै स्वभार्यायै दत्वा तस्य पाकं पक्तिं 'पाकौ पक्तिशिशू' इत्यमरः कर्तुं आदिशत् आज्ञापितवान् ॥३१॥

तं वीक्ष्य चकिता सा प्राह तनुमध्यया—

सा प्रेक्ष्य सनालं सास्राक्ष्यपि बालं ॥
प्राहैष न वध्यः प्राज्ञायममेध्यः ॥ ३२ ॥

साऽसुरस्त्री सनालं नालसहितं बालं प्रेक्ष्यापि अस्रं नेत्रोदकं तेन सहिते सास्रे अक्षीणि यस्याः सा सास्राक्षी। स्वांगाच्चेति ङीप्। स्रवन्नेत्रा सतीत्यर्थः प्राह पतिमिति शेषः। हे प्राज्ञ पण्डित भर्तः एष बालः त्वया न वध्यः यतः हे प्राज्ञ अयं सद्यो जातो बालः अमेध्यः न मेध्यः पवित्र अमेध्यः अस्माकं नरादानामपि भक्षणानर्हः। पूतं पवित्रं मेध्यं चेत्यमरः। अतो न वध्य इति भावः ॥ ३२ ॥

तच्छ्रुत्वाऽसुरो वक्ति तनुमध्यया—

प्राज्ञापि स बालः प्राप्तो मम कालः॥
भक्ष्योऽद्य दुरात्मा रक्ष्योयमिहात्मा ॥ ३३ ॥

सोऽप्यसुरः प्राह हे मूढे अयं बालः देवनिर्मितो मम कालः मत्प्राणहारकः महाकष्टेन मया प्राप्तः तद्रक्षणं नास्मद्धितकरमिति भावः अतः अद्य दुरात्मायं कालरूपिबालो मया भक्ष्यः यतः इह जन्मनि अयं देह-

रूप आत्मा रक्ष्यः रक्षणीयः । 'आत्मानं सततं रक्षेद्दारैरपि धनैरपि । पुनर्दाराः पुनर्वित्तं न शरीरं पुनः पुनः' इत्युक्तेः विरोचनाख्यास्मद्गुरु-मते तु देहातिरिक्तोऽन्य आत्मा नेति राद्धान्तः अतोऽकार्यशतमपि कृत्वा रक्षणीय इति भावः ।। ३३ ।।

( अनुष्टुप् )

तथेति दुष्टधीः सादात्सैरन्ध्र्यै च स्वयं ह्यदात् ।।
सा च तं बल्लवकरे सोऽस्त्रं हन्तुं दधौ करे ।। ३४ ।।

भर्तुरुपदेशाद् दुष्टा धीर्यस्याः सा तथेत्युक्त्वा बालं आदाज्जग्राह गृहीत्वा च सा स्वयं तं बालं हन्तुं सैरन्ध्र्यै अदात् सा च । सैरंध्री परवेश्मस्थेत्यमरः। स्वधर्मनियमेनापदि परवेश्मस्था सैरन्ध्री तं बालं हन्तुं बल्लवकरे अदात् सोऽपि बल्लवस्तं बालं हन्तुं विशसितुं करेऽस्त्रं दधौ ।। ३४ ।।

( उपजातिवृत्तम् )

सुगुप्तचक्रोपरि तच्छितास्त्रं भग्नं तथान्यत्प्रहृतं शितास्त्रम् ।।
ग्राव्णीव खड्गं परभक्तिसारविप्रे प्रयुक्तोऽपि यथाभिचारः।।३५।।

दत्तात्रेयेण सुतरां गुप्तः सुगुप्तः सुगुप्ते बाले चक्रं सुदर्शनं तस्योपरि यद्वा सुतरां गुप्तं लोकानामप्रत्यक्षत्वेन रक्षितं च तच्चक्रं च तदुपरि तत् बल्लवेन प्रहृतं शितास्त्रं तीक्ष्णशस्त्रं भग्नं। तथान्यद्द्वितीयं प्रहृतं शितास्त्रं तथा तेनैव प्रकारेण भग्नं किमिव ग्राव्णि पाषाणे प्रहृतं खड्गमिव भग्नं अपरो दृष्टान्तः परः परमः विष्णुः 'अग्निर्वै देवानामवमो विष्णुः परम' इति श्रुतेः तस्य परस्य भक्तिरेव सारं बलं यस्य परभक्तिसारः यद्वा ज्ञानो-त्तरकालीना भक्तिः परा ' समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' इति श्रुतेः ' सा परानुरक्तिरीश्वर 'इति शाण्डिल्येन सूत्रितत्वात् परभक्तिरेव सारं बलं यस्य तस्मिन्विप्रे प्रयुक्तोऽभिचारो यथा निष्फलस्तथास्त्रमपि निष्फलं सद्भग्नम् ।। ३५ ।।

(अनुष्टुप्–)

तदा क्रूरापि सैरन्ध्री द्रुतचित्ताऽऽह बल्लवं ॥
न जह्येतं शिरस्यस्य देवोऽधात्करपल्लवम् ॥ ३६ ॥

स्फुटं ॥ ३६ ॥

( उपजातिवृत्तम् )

तथेति पोतं स च तं वसिष्ठद्वारे निधायैककुरङ्गपोतं ॥
हत्वा ददौ तत्पलमासुराय हुण्डाय धूर्तः कुधियेऽचिराय ॥

तथेत्युक्त्वा स च बल्लवः तं पोतं बालं वसिष्ठर्षिद्वारे निधायैकं कुरङ्गपोतं मृगशावं हत्वा पक्त्वा च तत्पलं तन्मांसं कुधिये दुष्टबुद्धये हुण्डायासुराय ददौ । ननु हुण्डेन कथं न ज्ञातमित्यतो बल्लवं विशिनष्टि धूर्त इति तर्ह्येवं करणे कालविलंबो जात इत्यत उक्तं अचिरायेति ॥ ३७ ॥

( उपजातिवृत्तम् )

ततः प्रभाते विदुषां वरिष्ठो दृष्ट्वा सुतं दिव्यदृशा वसिष्ठः ॥
दत्तप्रसादं सुतमायुषस्तं विज्ञाय चादाय निनाय पस्त्यम् ॥ ३८ ॥

ततः प्रातःकाले ज्ञानिनां मध्ये वरिष्ठः वसिष्ठः सुतं प्राकृतदृष्ट्या प्रथमं दृष्ट्वा दिव्यदृष्ट्या दत्तप्रसादभूतं आयुषो राज्ञः सुतं विज्ञाय ज्ञात्वा दयया कराभ्यां तमादाय च पस्त्यं स्वसदनं निनाय ॥ ३८ ॥

(इन्द्रवज्रावृत्तम् )

दत्तप्रसादोऽयमिहायुषोऽर्भो दत्तः प्रसादो विधिनेति सोऽदात्
पत्न्यै महापूरुषलक्षणं तं प्रेम्णापि साऽपात्कमलेक्षणं तम् ॥ ३९ ॥

हे पत्नि अयं बालः दत्तप्रसादभूत आयुषो राज्ञोऽर्भः शिशुः इहास्मिन्स्थाने विधिनास्मद्दैवेन दत्तः अहो भाग्यमिति स वसिष्ठः पत्न्यै अदात् साप्यरुन्धती 'वसिष्ठस्याप्यरुन्धती' इति श्रुतेः महापुरुषस्येव लक्षणानि करपादगतानि चिह्नानि यस्य तं कमले इवाक्षिणी यस्य तं बालं प्रेम्णा स्नेहेनाऽपात् अरक्षत् ॥ ३९ ॥

( अनुष्टुप् )

ददौ डिंभायाभिधानं करिष्यत्यरिबन्धनम् ॥
अत्यर्थं हीति नहुष इत्यर्थज्ञर्षिमारिषः ॥ ४० ॥

हि यस्मात् अत्यर्थं अरीणां शत्रूणां बन्धनं करिष्यति असौ बाल इति शेषः इति हेतोः अर्थं शब्दार्थं जानातीत्यर्थज्ञः स चासौ ऋषिर्मारिषश्च वसिष्ठः डिंभाय बालाय नह बन्धन इत्यस्माद्धातोः सिद्धं नहुष इत्यभिधानं ददौ ॥ ४० ॥

( अनुष्टुप् )

दिने दिने स ववृधे शशिवच्छशिवंशजः ॥
तपनर्षिकरस्पर्शात्परेशानुग्रहादपि ॥ ४१ ॥

शशिवंशजः सोमवंशजः स नहुषः। स्वधर्मेण तपतीति तपनः स चासौ ऋषिर्वसिष्ठश्च तस्य लालनादिना करस्पर्शाद्धेतोः परेशस्य दत्तात्रेयस्यानुग्रहाद्धेतोरपि दिने दिने प्रतिदिनं नित्यवीप्सयोरिति वीप्सायां द्विर्वचनं। शशस्तदाख्यकलंकविशेषोस्यास्तीति शशी चन्द्रस्तेन तुल्यस्तद्वत्। तेन तुल्यमिति वतिः। शशी अपि; तपतीति तपनस्तापजनकः सूर्यः स एव ऋषति गच्छति सर्वं जानातीति वा ऋषिः 'पूषन्नेकर्षे यम सूर्य' इति श्रुतेः तस्य करस्पर्शात्किरणानुप्रवेशात्परेशस्यान्तर्यामिणोऽनुग्रहादपि शुक्ले पक्षे दिने दिने वृद्धिं याति 'सलिलमये शशिनि रवेर्दीधितयो मूर्छिता' इत्याद्यागमात् ॥ ४१ ॥

( अनुष्टुप् )

उपनीतः स मुनिना विनीतः शिक्षितोऽमुना ॥
विद्याकलासु निष्णातः स्ववेदे च विशेषतः ॥ ४२ ॥

अमुना मुनिना वसिष्ठेन निष्णातः शिक्षितः स्ववेदे धनुर्वेदे स्पष्टमन्यत् ॥ ४२ ॥

( अनुष्टुप् )

**राज्ञी बुद्ध्वाथ सुमतिः प्राज्ञी सेन्दुमती सती ॥**
**अरिष्टेऽर्भमपश्यन्ती मूर्छिता पतिताऽधृतिः ॥ ४३ ॥**

अथात्र तु सुमतिः प्राज्ञी सती सेन्दुमती राज्ञी बुद्ध्वा जागरिता भूत्वा अरिष्टे सूतिकागृहेऽर्भं शिशुं अपश्यन्ती ततः अधृतिः धैर्यरहिता मूर्छिता सती पपात भूमाविति शेषः ॥ ४३ ॥

( तनुमध्यावृत्तम् )

**उत्थाय च बुद्ध्वा बालं निजबुद्ध्या ॥**
**अन्वेष्य रुरोदार्ता सा तनुमध्या ॥ ४४ ॥**

सेन्दुमती बुद्ध्वा उत्थाय च निजबुद्ध्या स्वबुद्धिपरिणामावधीत्यर्थः इतस्ततो बालमन्वेष्य तनुर्मध्यः कटिप्रदेशो यस्याः सार्ता सती रुरोद वृत्तमपि तनुमध्या 'सूच्यार्थसूचनान्मुद्रा' इति मुद्रालङ्कारः ॥ ४४ ॥

( कुमारललितावृत्तम् )

**कुमारललितां मां व्यधात्क्षणमपीमां ॥**
**विधिः सकलपालः स किं खलु न बालः ॥ ४५ ॥**

इमामपि वन्ध्यां मां क्षणं क्षणमात्रं कुमारललितां व्यधादकरोद्यः स सकलपालः विधिर्ब्रह्मा बालः किं न खलु अपि तु बाल एव मुग्धचेष्टितत्वात् ॥ ४५ ॥

( माणवकाक्रीडितकं वृत्तम् )

**माणवकाक्रीडितकप्रायविचेष्टो हि स कः ॥**
**प्राक्तनदुष्कर्मवशात्प्रादुरभूत्किं कुदशा ॥ ४६ ॥**

आक्रीडितमेवाक्रीडितकं माणवकस्याल्पबुद्धेराक्रीडितकप्रायाः विविधाश्चेष्टा यस्य तथाभूतः सः कः प्रजापतिरस्तीति शेषः । हीति स्वानुभवप्रसिद्धं । अथवा किं तच्छापेन ममैव प्राक्तनदुष्कर्मवशादियं कुदशा पुत्रशोकरूपा प्रादुरभूत्किं अपि तु सैव ॥ ४६ ॥

( चित्रपदावृत्तम् )

चित्रपदार्थसुचौर्याच्चित्रमभूत्किमिहार्या ॥
एहि कुरु स्तनपानं देहि सुदर्शनमानम् ॥ ४७ ॥

चित्रा विचित्रा ये पदार्थाः धनरत्नप्रभृतयः तेषां सुतरां चौर्यादिहेदं चित्रं अकस्मात्पुत्रनाशनलक्षणमद्भुतमभूत् किं? अस्तु नाम तथा हे आर्या ३ हे महाकुलप्रसूता ३ दूराध्दूते प्लुतिः एहि आगच्छ स्तनपानं स्तनरसपानं कुरु मह्यं शोभनदर्शनलक्षणं मानं सत्कारं देहि ॥ ४७ ॥

( विद्युन्मालावृत्तम् )

विद्युन्मालातुल्यो योगः स्वानां यद्यप्येषोऽयोगः ॥
सोढुं शक्यो नैवातीव प्राप्तं कष्टं दुष्टं देव ॥ ४८ ॥

यद्यप्येषः स्वानां स्वजनानां योगो विद्युन्मालातुल्यः क्षणभङ्गुरोऽस्ति तथाप्येषामयोगः योगाभावो विरहः सोढुं न शक्यः विवेकाभावात् अत एव हे देव दत्तात्रेय अतीव दुष्टं कष्टं प्राप्तम् ॥ ४८ ॥

( भुजगशिशुभृतावृत्तम् )

भुजगशिशुभृता रोषः कृत इह मयि तत्तोषः ॥
प्रणतिमखत एवास्तु प्रभुरथ स मुदं यातु ॥ ४९ ॥

अङ्गुलिमुद्रात्वेन करशाखादिषु भुजगशिशून्बिभर्ति धारयतीति तथा तेन शंकरेण दत्तात्रेयेण आपत्स्वेव मां स्मरति नानन्दकाले इति मत्वा रोषः कोपः कृतः । अतः प्रणतिर्नमस्कार एव मखस्तत एव इहापराधवत्यां मयि तत्तोषोऽस्तु भवतु अथ मन्नमस्कारानन्तरं स प्रभुर्मुदं प्रीतिं यातु यतः श्रूयते ' यो नमसा स्वध्वर इति नमस्कारेण वै खल्वपि न वै देवा नमस्कारमति यज्ञो वै नम इति हि ब्राह्मणं भवति ' इति ॥ ४९ ''

( अनुष्टुप् )

आयुरप्याकुलप्राणवायुरत्यार्त एत्य तां ॥
मूर्छितां वीक्ष्य वनितां मूर्छितोऽगादचेष्टताम् ॥ ५० ॥

अतिशयेनार्तः पीडितः अत एवाकुला व्याकुलाः प्राणवायवो यस्य स आयूराजाऽपि अरिष्टं एत्य मूर्छितां तां वनितां वीक्ष्य स्वयं मूर्छितः सन् अचेष्टतामगान् ॥ ५० ॥

( उपेन्द्रवज्रावृत्तम् )

**स लब्धसंज्ञोऽवनिपोऽथ दैवप्रलब्ध आह प्ररुदन् तदैव ॥**
**सदैव रक्षार्थमिहार्चिता ये मुदैव तेऽप्यप्रभवस्त्वपाये॥५१॥**

अथ दैवप्रलब्धः प्रारब्धेन वञ्चितः सोऽवनिपः राजा लब्धा संज्ञा चेतना येन स तथाविधः तदैव प्ररुदन् प्राह इह ये रक्षार्थं सूतिकाबाल-रक्षार्थं सदैव देवब्राह्मणादयोऽर्चिताः पूजिताः भृत्यादयोऽर्चिताः वस्त्र-धनदानादिना सत्कृताः ते च मुदैव न तु सङ्कटेन ते सर्वेऽपि अस्मिन्न-पाये तु अप्रभवोऽसमर्था अभवन् ॥ ५१ ॥

( अनुष्टुप् )

**धिक्प्राकारान्सपरिखान्धिक्प्रासादांश्च साररान् ॥**
**धिग्बलं मंत्रजालं च धिग्धर्मं कोऽपि न प्रभुः ॥ ५२ ॥**

साररान्सकपाटान्। स्पष्टमन्यत् ॥ ५२ ॥

( इन्द्रवज्रावृत्तम् )

**वन्ध्यं तपोऽभूदपि कृच्छ्रसाध्यं वन्ध्यं जपाद्यं च सुयत्नसाध्यं॥**
**साध्यं किमेभिर्यदि वामदैवमाध्यंचितोऽत्र त्वभवं सदैव॥५३॥**

कष्टसाध्यं तपो वन्ध्यं निष्फलमभूत् सुयत्नसाध्यं जपाद्यं च वन्ध्यमभूत् यदि यर्हि वामदैवं प्रतिकूलं दैवं जातं तर्हि एभिः पूर्वोक्तैः किं साध्यं न किमपि अत्रास्मिन्जन्मनि तु पुत्रलाभात्पूर्वं तपआदिना अधुना पुत्रवियोगेन चैवं सदैव आध्यंचितो मानस्या व्यथया व्याप्तोऽभवम्॥५३॥

( उपजातिवृत्तम् )—

**दुर्दर्श ईशोऽपि मयात्रिजातः संपूजितो येन वरोऽपि दत्तः ॥**
**दत्ताभये तत्पदि मेऽस्ति चित्तं दत्ताश्रयं तं प्रणमामि दत्तम्५४**

दैवहतकानां दुर्दर्शोऽपि अत्रिजातः आत्रेय ईशः दत्तः मया पूजितः येन दत्तेन वरोऽपि दत्तः दत्तं अभयं येन तस्मिन् तत्पदि तच्चरणे मे चित्तं संलग्नमस्ति दत्त आश्रयो येन तमीदृशं दत्तं प्रणमामि ॥ ५४ ॥

( योगिनीवृत्तम् )

**भगवन्किमु मामुपेक्षसे मघवन्मान्य सकृापि नेक्षसे ॥**
**चरितं किमु दुष्कृतं मया चरितं वाग उतेश ते मया ॥ ५५ ॥**

हे भगवन्मां भक्तं उपेक्षसे किमु ममोपेक्षा नोचितेति भावः। हे मघवन्मान्य सहैकवारमपि मां नेक्षसेऽपि अपिः प्रश्ने ईदृशं दुष्कृतं मया किमु चरितं आचरितं हे ईश वाथवा उतापि आगोऽपराधः मयाचरितं वद ॥ ५५ ॥

( योगिनीवृत्तम् )–

**प्रणमामि विभो प्रसीद मे प्रणतेऽपीश धृते महादमे ॥**
**शरणं क परं परेश नश्चरणं तेऽभयदं गतिर्हि नः ॥५६॥**

हे विभो त्वां प्रणमामि मे प्रसीद हे ईश त्वया प्रणतेऽपि मयि महादमे महादण्डे धृते सति हे परेश त्वत्तः परमन्यन्नोऽस्माकं शरणं क न कापीत्यर्थः अतः प्रसीद हि यस्मात्कारणादभयदं ते चरणं नोऽस्माकं तव भक्तानां गतिरस्ति नेतोऽन्या गतिरिति सत्यमेव ॥ ५६ ॥

( शालिनीवृत्तम् )

**पुत्रार्थं त्वाराध्य लब्ध्वापि कान्तं पुत्रार्थं ते सत्प्रसादादकान्तं॥**
**नेक्षेऽद्यार्तो नष्टपुत्रः सुरेश वीक्षे त्वत्तोऽन्याश्रयं नो परेश ५७**

हे दत्त पुत्रार्थं त्वा त्वामाराध्य ते प्रसादात् कान्तं मनोहरं पुत्ररूपं अर्थं लब्ध्वापि अकान्तं दुःखनाशं नेक्षे हे सुरेश हे दत्त नष्टः पुत्रो यस्य सः अत एवाद्यार्तः सन् त्वत्तोऽन्यमाश्रयं नो वीक्षे त्वमेवास्माकमाश्रय इति तत्त्वम् ॥ ५७ ॥

( योगिनीवृत्तम् )

इति विक्कवितं निशम्य तन्मतिवित्क्लिन्नमना मनागपि ॥
सदकासहनो मनोजवं मुनिमेवेरयितुं स्म वाञ्छति ॥ ५८ ॥

इति तत् नृपकृतं विक्कवितं निशम्य श्रुत्वा मतिवित् भक्तमतिज्ञः क्लिन्नमार्द्रं मनो यस्य सः मनागपीषदपि सदकासहनः साधुदुःखासहनः मनसो जव इव जवो यस्य तं मुनिमेव नारदमेव ईरयितुं नृपसंनिधौ प्रेरयितुं वाञ्छति स्म ॥ ५८ ॥

( अनुष्टुप् )

अर्थार्थी पूर्वमप्यार्तो भक्तोऽनुग्राह्य एव मे ॥
इति देवर्षिमात्रेयो मतिदेवः समीरयत् ॥ ५९ ॥

पूर्वं प्रथमतः पुत्ररूपार्थार्थी अपि भक्तोऽयमधुना पुत्रनाशेनार्तोऽस्ति अतो वर्धितद्विगुणभक्तिरयं भक्तो मे मयानुग्राह्य एवेति मतिदेवः बुद्धिप्रकाशकः श्रीदत्त आत्रेयः देवर्षिं नारदं सम्यगीरयत् प्रेरयत् ॥ ५९ ॥

( अनुष्टुप् )

विष्वक्प्रसारिधामाधः पतन्सूर्य इवापतत् ॥
रणद्वीणो हरिं गायन्नारदो दिव्यदर्शनः ॥ ६० ॥

विष्वक् अध ऊर्ध्वं तिर्यक्चेत्येवमासमंतात् प्रसरणशीलं धाम तेजो यस्य स तथा सूर्य इवाधः पतन् कुशलशिल्पिनिर्मिता स्वयमेव रणन्ती वीणा यस्य सः संसारभयं हरतीति हरिः विष्णुस्तं गायन्दिव्यमलौकिकं दर्शनं दृष्टिर्ज्ञानं वा यस्येदृशो नारदः आपतत् । रणन्ती वीणा यस्येति स्वयमेव वादनसूचनात्कोऽपि लोकातिक्रान्तो यः शिल्पसौष्ठवातिशयो विणायास्तेनातिशयः । पतत्पतंग इत्यत्र पतंगस्य सूर्यस्य पतनासंभवादभूतोपमेति प्राञ्चः । अप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकाः । विष्वक्प्रसारिधामेत्यत्र सूर्यस्य धाम्नस्तिर्यग्गतित्वं वह्नेश्चोर्ध्वगतित्वं प्रसिद्धमाभ्यां मुनिधाम्नो व्यतिरेकः विष्वक्प्रसरणशीलत्वात् ॥ ६० ॥

( उपजातिवृत्तम् )

**तदोर्ध्वमुत्क्रामत आत्मनोऽसून्मुदोत्थितोस्याश्वभिवादनेन ॥**
**भूयो यथावत्प्रतिपाद्य पाद्यपूर्वैः स आनर्च सुरर्षिमाद्यम् ॥६१॥**

तदा नारदागमनकाले मुदा उत्थितः स राजा उर्ध्वमुत्क्रामत आत्मनोऽसून् प्राणानाशु शीघ्रं अस्य नारदस्याभिवन्दनेन । 'वामोपरि करं कृत्वा दक्षिणं नाम चोच्चरेत् ॥ जानुप्रभृति पादान्तं विमृज्य पदयोर्नमेत्' इत्युक्तलक्षणेन भूयो यथावत्प्रतिपाद्य निधाय पाद्यपूर्वैरुपचारैः आद्यं सुरर्षिं नारदं आनर्च पूजयामास । ऊर्ध्वमुत्क्रामतोऽसूनित्यत्र स्मर्यते । 'ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते ॥ प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यत ' इति ॥ ६१ ॥

( उपजातिवृत्तम् )

**भक्त्या विधाय प्रणतीरुदंतं विज्ञाप्य दुःखं पुरतो रुदन्तं**
**हसन् तमाश्वास्य स चारुवाचमृषिः स्मरन्नत्रिजमित्युवाच॥६२॥**

भक्त्या प्रणतीः कृत्वा उदन्तं पुत्रनाशलक्षणवृत्तान्तं तद्विरहजं दुःखं च विज्ञाप्य पुरतः रुदन्तं तं राजानं आश्वास्य अत्रिजं दत्तं स्मरन् देवभक्तोऽप्ययं रोदितीति हसन्नृषिर्नारदः इति उक्तप्रकारां वाचं उवाच ॥ ६२ ॥

( उपजातिवृत्तम् )

**कथंचनापि स्मरणेन यस्य सद्यो भवान्तो भवतीह तस्य ॥**
**पदं चिदानन्दमयात्मलोकं भजंश्चिरान्नापि जहासि शोकम् ६३**

कथंचनापि पुत्राद्यर्थार्थित्वेनापि यस्य स्मरणेन सद्यो भवान्तो भवति इहास्मिन्लोके लोक्यत इति लोकः आत्मैव लोक आत्मलोकः।चिदानन्दमयश्चासौ आत्मलोकश्च तद्रूपं पदं चिराद्भजन्नपि शोकं न जहासि चित्रमेतत् ॥ ६३ ॥

ननु 'तरति शोकमात्मवित्' इत्यात्मज्ञानाच्छोकतरणं तत्कथं दत्त-भजनादित्यत आह—

( अनुष्टुप्- )

**विधूतरागपङ्कं हि श्रेयोयनमुपेयुषः ॥**
**निरपायाश्रयानन्ता प्राप्यासौ वसुधा मता ॥ ६४ ॥**

विशेषेण धूतः रागो विषयाभिलाष एव पङ्को यस्य तत् । श्रेयसो मोक्षस्यायनं मार्गं उपेयुषः प्राप्तवतः । उपेयिवानिति क्वसुप् निपातः । तस्य मुक्तस्य भगवद्भक्तस्य असौ भगवान्दत्तः । निरपायः पुनरावृत्ति-रहित आश्रयः प्राप्तिर्यस्याः सा 'न स पुनरावर्तत' इति श्रुतेः । अनन्ता परिच्छेदरहिता ईदृशी प्राप्या भक्तैः प्राप्तुं योग्या वसुधा प्राप्यस्थानं । मता उपनिषदामिति शेषः 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेयनाय'इति श्रुतेः ॥ ६४ ॥

ननु प्रकृतिपुरुषविवेचनान्मुक्तिरित्यत आह उपजात्या—

**अध्यात्मदृष्ट्या प्रकृतेः परस्ताद्बहिर्विकारं पुरुषं महर्षिः ॥**
**यं वा उदासीनमनाद्यनन्तं शशंस सोऽस्मात्क इहापरोपि ॥६५॥**

महर्षिः कपिलः । निगृहीतान्तःकरणद्वारा आत्मन्यधीत्यध्यात्मं । विभक्त्यर्थेऽव्ययीभावः । अध्यात्ममेव दृष्टिर्ज्ञानं तयोपलभ्यं उदासीनं प्रकृतौ स्वार्थं प्रवृत्तायामपि स्वयमस्पष्टं अतो बहिर्विकारं षोडशविकारे-भ्यो बहिः बहिर्विकारं । अपपरिबहिरिव्ययीभावः । प्रकृतेः विकार-मूलकारणभूतायाः परस्तात् भिन्नं अत एवानाद्यनन्तं पुरुषपदवाच्यं यं शशंस प्रतिपादयामास । तथा हि 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त॥ षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष' इति स पुरुषः अस्माच्छ्रीदत्तादपरः इह कोऽपि न कोऽपीत्यर्थः ॥ ६५ ॥

( उपजातिवृत्तम् )

**स एव तप्त्वा तप आत्मनोदः स्वाभिन्नशक्त्यासृजदप्रमेयः ॥ सद्धर्मगुप्त्यै मुनिजोऽवतीर्णः कस्तद्गुणान्सद्गतिदान्वितीर्णः ६६**

स एव पूर्वोक्तः अप्रमेयः दत्तः तपस्तप्त्वा पर्यालोचनं कृत्वा 'यस्य ज्ञानमयं तपः' 'स तपस्तप्त्वा इद ९ सर्वमसृजत'इति श्रुतेः अनिर्वचनीयया स्वाभिन्नशक्त्या कृत्वात्मनोभिन्ननिमित्तोपादानरूपात्स्वस्माददः विश्वं असृजत् स्वयमेव जगदभूदिति भावः। 'तदात्मान ९ स्वयमकुरुत' इति श्रुतेः। पुनश्च सतां धर्मस्य च गुप्त्यै अवतीर्णः मुनिजोऽत्रिपुत्रोऽभूत्सद्गतिदान्मोक्षदान् तद्गुणान्को वितीर्णः न कोऽपि गुणानामानन्त्यात् ॥ ६६ ॥

(इन्द्रवज्रावृत्तम्)

**तस्मात्प्रसन्नात्तु शुगास्पदः सुतः प्राग्याचितः सद्गतिदाद्विमोहतः ॥ योऽजायमानः पितरौ पुरा चिरात्संक्लेशयेच्च प्रसवात्ततः परम् ॥ ६७ ॥**

**जातो ग्रहार्तेः परतोऽपि मौर्ख्याद् व्रती त्वविद्योविबुधोऽविवाहात् ॥ युवौपपत्यात्सुतवांश्च नैस्व्यात्पुत्रेण किं शर्म सदार्तिदेन ॥ ६८ ॥**

प्रसन्नात्तस्माच्छ्रीदत्तात्सद्गतिदात् विमोहतस्त्वया प्राक्पुरा शोकास्पदः सुतः याचितः यः पुत्रः अजायमानोऽपि कृच्छ्रजपादिना पितरौ क्लेशयेत् ततः परः गर्भतोऽपि प्रसवाच्च क्लेशयेत् ॥ जातोऽपि ग्रहार्तेर्निमित्तात्परतश्च बाल्ये मौर्ख्यात्। व्रती सञ्जातव्रतबन्धोऽपि अविद्यश्चेत्क्लेशयेत् अबुधो मूर्खः अविवाहात्। युवा औपपत्याज्जारकर्मतः सुतवान् च नैस्व्याद्दारिद्र्याच्च क्लेशयेदेवं सदार्तिदेन पुत्रेण किं शर्म न किमपीत्यर्थः। अभियुक्तोक्तिश्च। 'अजायमानस्तनयः पितरौ क्लेशयेच्चिरं। लब्धोऽपि

गर्भपातेन प्रसवेन च बाधते ।। १ ।। जातस्य ग्रहरोगादिः कुमारस्य च मूर्खता । उपनीतेप्यविद्यत्वमनुद्वाहश्च पण्डिते ।। २ ।। यूनश्च पारदारादि दारिद्र्यं च कुटुंबिनः ।। पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन् म्रियते तदा ।। ।। ३ ।। एवं विविच्य पुत्रादौ प्रीतिं त्यक्त्वा निजात्मनि । निश्चित्य परमां प्रीतिं वीक्षते तमहर्निशम्'इति। तस्मात्सूक्तं सदार्तिदेन पुत्रेण किं शर्मेति। वंशस्थवृत्तं अनन्तरोदीरितलक्ष्मभाजावित्युक्तलक्षणात् ।। ६७-६८ ।।

ननु 'आत्मा वै पुत्रनाम'इति श्रुतेः कथं पुत्रस्य नात्मत्वमित्यत आह प्रहर्षिण्या—

**गौणात्मा नृहरिरिवात्र पुत्रसंज्ञो मिथ्यात्मा घट इव चात्र गात्रसंज्ञः ।। मुख्यात्मा परतरचित्स एष दत्तः सख्या युग्भव खलु तेन चाप्रमत्तः ।। ६९ ।।**

ना हरिः सिंह इवेतिवत्पुत्रसंज्ञो गौणात्मा न मुख्यः । अत्र गात्रसंज्ञः देहसंज्ञकः घट इव मिथ्यात्मा जडत्वात् । देहाद्यहंकारेभ्यः परतरचित चैतन्यं मुख्यात्मा स एष दत्त एवाबाधितत्वात् । स एव सदा परमोपकारकत्वात्सखा । 'द्वा सुपर्णा सयुजा सखाया' 'सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखाय' इति च श्रुतेः । त्वं खलु निश्चयेन तेन सख्या युज्यत इति युग्युक्तो भव तदर्थं चाप्रमत्तो भव स नान्यथाप्यत इति भावः ।। ६९ ।।

भवतु नाम पुत्रस्य गौणात्मत्वं तथापि प्रेमास्पदत्वाच्छोको दुर्वार्य इत्यत आह भुजंगप्रयातेन—

**यतो यावदिष्टं ततः प्रेम तावत्सदा प्रेयसि त्वात्मनि प्रेम शश्वत् अतश्चान्यतः संविविच्य प्रियत्वं विधेह्याशु दत्तात्मनि क्षत्रिय त्वम्**

यतः पुत्रदारादेः यावत्कालं इष्टं भवेत्तावत्कालपर्यंतं ततोऽनुकूले पुत्रादौ प्रेमावाप्तिः प्रतिकूले त्विष्टत्वाभावाद्दुःखमेवातः प्रेम्णो न निरतिशयत्वं व्यभिचारापत्तेः । प्रेयसि निरतिशयप्रेमास्पदे आत्मनि तु शश्व-

त्प्रेमैव मां धिगित्यादि तु दैहिकादिदुःखोपलब्धिनिमित्तं। 'मा न भूवं हि भूयासमिति प्रेमात्मनीक्ष्यत' इत्युक्तेः। तस्मादतः पुत्रादेरन्यतश्च देहादेः आत्मानं सम्यग्विविच्य पृथक्कृत्य हे क्षत्रिय दुःखादात्मतारक। त्वं आशु देहपातात्पूर्वं शीघ्रं दत्तात्मनि प्रियत्वं विधेहि कुरु तद्बोध एव प्रियत्वं। श्रुतिश्च'इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः। ततः सर्गेषु लोकेषु शरीरत्वाय कल्पत इति॥ ७०॥

प्रियत्वाख्यबोधलक्षणं तत्फलं चाहेन्द्रवज्रया—

**तत्रात्मनीदं जगदत्र चात्मेत्येवंविदो नैव हि शोकमोहौ॥**
**एवं विचार्य त्यज राजवर्य शोकं कुरु स्वीयमवश्यकार्यम् ७१**

तत्र परोक्षे दत्ताख्ये आत्मनि इदं प्रत्यक्षादिप्रमाणगोचरं भूतभौतिकाख्यं विश्वं जगत्। अत्र चापरोक्षे स्वरूपभूते साक्षिणि प्रत्यगात्मनि च स दत्त आत्मा तयोरभेदात्। 'सूक्ष्मात्सूक्ष्मतरं ब्रह्म तत्त्वमेव त्वमेव तत्' इति श्रुतेः 'प्रत्यक्ता नात्मनोऽन्यत्र प्रतीचोन्यत्र नात्मता'इत्याभियुक्तोक्तेश्च। एवंविदः शोकमोहौ नैव इति श्रुतिप्रसिद्धं श्रुतिश्च ' तत्र को मोहः कः शोक एकत्वमनुपश्यत'इति। हे राजवर्य एवं विचार्य शोकं त्यज अवश्यं स्वीयं कार्यं भगवद्भजनं कुरु ततः कृतार्थतेति भावः॥ ७१॥

( अनुष्टुप्- )

**हुण्डासुरेण नीतोऽपि सुतस्ते दत्तरक्षितः॥**
**गेहेऽस्ति कस्यचिदृषेः स तं दैत्यं हनिष्यति॥ ७२॥**

स्फुटार्थः॥ ७२॥

**तं पश्यस्यचिरेणेति निवेद्य मुनिपुंगवः॥**
**नृपस्य पश्यतस्तत्र विद्युद्वत्स तिरोदधे॥ ७३॥**

स्फुटार्थः॥ ७३॥

( स्वागतावृत्तम्- )

नारदेन गदितं गतशोकः शारदेन्दुवदनः सविवेकः ॥
वल्लभां स पुनरुक्तमिवोचे सापि हापितशुगात्तमुदूचे ॥७४॥

शारदः शरत्कालीनः स्वच्छः स चासौ इन्दुश्च तद्वद्वदनं मुखं यस्य सः विवेकेन सहितः सविवेकः अत एव गतशोकः स राजा नारदेन गदितं पुत्रवृत्तांतादि सर्वं पुनरुक्तमिव वल्लभां प्रियां इन्दुमतीं प्रत्यूचे हापिता त्यक्ता शुक् शोको यया सा आत्ता स्वीकृता मुत् आनन्दो यया तथाभूता सा इन्दुमती ऊचे वक्ष्यमाणमिति शेषः ॥ ७४ ॥

तदाह भुजंगप्रयातवृत्तेन—

नमस्तेऽकहंत्रे समस्तेष्टदात्रे विहस्तेष्टकर्त्रे समस्तेडितात्रेः ॥
प्रियायाः प्रभावात्तवेहोपलब्धिः क्रियाहीन ते मेऽर्पिताद्यो-
पलब्धिः ॥ ७५ ॥

हे समस्तेडित ऋषियोगिमुनिसुरासुरनरस्तुत । अकहंत्रे दुःखहंत्रे । समस्तेष्टदात्रे सकलाभीष्टार्थदात्रे । विहस्तेष्टकर्त्रे व्याकुलजनेष्टसंपादकाय ते नमः प्रह्वीभावोऽस्तु । अत्रेः प्रियाया अनसूयायास्तपःप्रभावादस्माकं तवोपलब्धिर्जाता । हे क्रियाहीन कर्मासंस्पृष्ट चतुर्विधक्रियाफलशून्येति वा । अद्य ते त्वया मे मह्यं उपलब्धिः सद्बुद्धिः। प्रेक्षोपलब्धिश्चित्संविदिति कोशात्। अर्पिता समर्पिता स्वविषयकज्ञानं वा दत्तं अहो भाग्यमिति भावः । स्मृतिश्च 'तेषामेवानुकंपार्थम्'इत्यादिः ॥ ७५ ॥

सदैव तेंध्र्यंबुजपञ्जरेऽद्य मुदैव मे मानसहंस ईड्य ॥
अकंपमास्त्वित्यधिपं ननाम सकंपरोमाञ्चयुगाह नाम ॥७६॥

हे ईड्य स्तुत्य मे मम मानसमेव हंसः मुदैवानन्देनैव ते तवांध्र्यंबुजपञ्जरे सदैव सर्वदैवाकंपं निश्चलं यथा तथास्तु भवतु इत्येवं प्रकारेणाधिपं श्रीदत्तं ननाम । राज्ञीति शेषः । कंपेन सहितः सकंपः स चासौ रोमाञ्चश्च तेन युज्यत इति सकंपरोमांचयुक् । सात्विकाष्टभावयुक्ता

राज्ञी दत्तात्रेय दत्तात्रेयेति नामाह प्राह । प्रेमभरातिरेकेणोच्चैर्भगवन्नामघोषं चक्र इति भावः ॥ ७६ ॥

ततो नृपोऽपि स्तौत्युपेन्द्रवज्राभ्यां—

**जगौ नृपालोऽखिलहेतुभूत विगौरवाद्याखिलसेतुभूत ॥**
**अभूतपूर्वा इह तेऽनुवेलं लीला विभांत्याधिहरा इहालम् ७७**

इन्दुमतीकृतस्तवानन्तरं नृपाल आयुः जगौ उवाच हे अखिलहेतुभूत सर्वकारण । हे आद्य स्वतःकारणहीन । ' न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्' इति श्रुतेः । हे विगौरव सर्वहेतुत्वेऽप्यभिमानरहित । हे अखिलसेतुभूत सर्वधर्मरूप । ' एष सेतुर्विधरण ' इति श्रुतेः ईदृश श्रीदत्त इह लोके ते लीलाः अनुवेलं अभूतपूर्वा इव भान्ति ताः इहास्मासु अलमत्यर्थं आधिहराः मानसीव्यथानिवारकाः सन्तु ॥ ७७ ॥

**योगीक्षते योगवशीकृतेन चित्तेन यत्सत्तव देव धाम्नः ॥**
**जिज्ञासुरस्मीश्वर धीरतं त्वां भक्त्या मुमुक्षुः शरणं प्रपद्ये॥७८॥**

हे देव तव यत् सत् निर्बाधं तव धाम योगश्चित्तवृत्तिनिरोधस्तेनावशमपि वशत्वेन संपादितं योगवशीकृतं वशीकाराख्यवैराग्यपूर्वकाभ्यासेन स्वाधीनीकृतेन चित्तेन योगी ईक्षते अपरोक्षीकरोति 'मनसैवानुद्रष्टव्यम् ' इति श्रुतेः । तस्य तव धाम्नः स्वरूपस्य जिज्ञासुर्ज्ञातुमिच्छुरस्मि । तच्च गुरूपसदनाज्जिज्ञासितव्यमित्यत आह धियं ईरयतीति धीरस्तत्संबुद्धौ हे धीर हे ईश्वर सर्वगुरूणामपि गुरो अहं मुमुक्षुः सन् तं त्वां शरणं प्रपद्ये । एतेन जिज्ञासुभक्तत्वं क्रमप्राप्तं दर्शितं । ' यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । त ९ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य' इति श्रुतेः ॥ ७८ ॥

( अनुष्टुप् )

इति संप्रार्थ्य देवेशमतिसन्तुष्टमानसः ॥
भगवत्कीर्तनप्रेमनिर्वृतोऽभूत्सदैव सः ॥ ७९ ॥

स्फुटार्थः ॥ ७९ ॥

( अनुष्टुप् )

नहुषस्त्वेकदारण्ये शुश्राव मृगयां चरन् ॥
आकाशवाण्या स्वोदन्तं गुरवे स शशंस तम् ॥ ८० ॥

स्वोदन्तं स्ववृत्तान्तं । शशंस कथयामास । शेषं स्पष्टम् ॥ ८० ॥

( अनुष्टुप् )

वसिष्ठोप्यादितः सर्वं निवेद्य सुरदुर्हृदाम् ॥
वधायाज्ञापयत्सोऽपि प्रतस्थे चिन्तयन्गुरुम् ॥ ८१ ॥

सुरदुर्हृदां देवशत्रूणां वधं कर्तुं । स्फुटमन्यत् ॥ ८१ ॥

प्रस्थानमाहोपजातिवृतेन—

धीसारथिर्देहरथोर्थवाहो हृत्प्रग्रहो ज्ञानिवदेक एव ॥
महाबलानां हतये प्रतस्थे सुरद्विषां देवगुरूक्तिशक्तिः ॥८२॥

धीर्निश्चयात्मिका सारथिः सहायभूता यस्य । देह एव रथो यस्य । अर्था इन्द्रियाणि वाहाः यस्य । हृत्संकल्पात्मकं मनः प्रग्रहो रश्मिर्यस्य । स एक एकाक्येव देवाभिन्नगुरूक्तिरेव शक्तिर्यस्य स नहुषः । महाबलानां सुरद्विषां दैत्यानां हतये वधाय दैत्यान्हन्तुमित्यर्थः प्रतस्थे किंवत् ज्ञानिवद्विवेकीव स च धीः प्रवृत्तिं च निवृत्तिं चेत्यादिलक्षणा सात्त्विकी बुद्धिः सारथिर्यस्य । तपःकृच्छ्रादिना शोषितो देह एव रथो यस्य । अर्थाः प्रत्याहृतेन्द्रियाण्येव वाहा अश्वा यस्य प्रशान्तं हृन् मनः प्रग्रहो यस्य एवंभूतो ज्ञानी विवेकी यथा दुर्जयत्वान्महाबलानां सुरद्विषां शमादयो एव सुरास्तान्द्विषन्ति ते रागद्वेषदंभदर्पादयोऽसुरास्तेषां हतये निर्दलनाय यथा

तथा प्रतस्थे सोऽप्येकाकी । यदुक्तं 'वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि । एक एव चरेत्तस्मात्कुमार्या इव कंकणम्' इति । स च देवगुरुक्तिशक्तिः श्रुतिश्च 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मन' इति ॥ ८२ ॥

( उपजातिवृत्तम् )

**आजानुबाहुं शरचापहस्तं पभ्द्यां चरन्तं निजकार्यसक्तम् ॥**
**दृष्ट्वेव रामं मघवा ससूतं तस्मै रथं प्रेरयदाशु सास्त्रम् ॥ ८३ ॥**

आजानुबाहुं दीर्घबाहुं शरचापौ लौकिकौ हस्तयोर्यस्य तं पभ्द्यां चरन्तं पादाभ्यां गच्छंतं निजकार्ये देवकार्ये दैत्यवधे सक्तं राममिव दाशरथिमिव दृष्ट्वा ससूतं ससारथिं सास्त्रं सशस्त्रं रथं तस्मै नहुषायाशु शीघ्रं मघवा प्रेरयत् रामोऽप्याजानुबाहुः शरचापहस्तः पभ्द्यां चरन्निजकार्यसक्त इति दृष्ट्वा मघवा रावणयुद्धे तस्मै ससूतं सास्त्रं रथमाशु प्रेरयदिति रामायणे प्रसिद्धं ॥ ८३ ॥

( अनुष्टुप् )

**उग्रायेव रथं तस्मै भूरथाय स मातलिः ॥**
**सोपस्करं रथं प्रादात्सन्नद्धः सोऽपि चारुहत् ॥ ८४ ॥**

भूरेव रथो यस्य सः पादचारीत्यर्थः तस्मै नहुषाय उग्रायेव उग्रो रुद्रः सोऽपि त्रिपुरासुरसंग्रामसमये भूरथो जात इत्यादि शैवस्कान्दादौ प्रसिद्धं । स इन्द्रप्रेरितः मातलिः सारथिः सोपस्करं रथं प्रादाद्दत्तवान् । सोऽपि नहुषोऽपि च 'आत्वाहार्षमन्तरे धीति पश्चाद्रथस्यावस्थाय जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत्' इत्यादिना सन्नद्धः कवचादिना मंत्रपूर्वकं बद्धः सन् । 'रथमारोक्ष्यन्नाना पाणिभ्यां चक्रे अभिमृशेत्' इत्यादिक्रमेणारुहत् आरुरोह रथमिति शेषः ॥ ८४ ॥

( अनुष्टुप् )

**तत्साहाय्याय सन्नद्धाः स्वयं देवाः समागताः ॥**
**तत्कोलाहलमाकर्ण्य चकितोऽभून्महासुरः ॥ ८५ ॥**

नहुषसहायार्थं सन्नद्धाः सन्तो देवाः स्वयमेव समागताः तेषां देवानां कोलाहलं श्रुत्वा हुण्डासुरः कोऽयं शत्रुः ससंभ्रमं प्राप्त इति चकितोऽभूत् ॥ ८५ ॥

( गद्यम् )

**तदनु दनुजायायुःपुत्रो युद्धायागच्छतीति श्रुतवते पूर्वदत्तोऽर्भो हतो न वेति शश्वत्पृच्छते हुण्डाय स्वप्राणपरीप्सया भार्यादयो हत एवेति मृषा प्रतिपादयामासुः ॥ ८६ ॥**

तदनंतरं आयुःपुत्रो नहुषो युद्धाय युद्धं कर्तुमागच्छतीति श्रुतवते वधार्थं पूर्वदत्तोऽर्भः बालः भवद्भिर्हतो वा न वेति शश्वत्पुनः पुनः पृच्छते दनुजाय हुण्डाय हुण्डभार्यादयः स्वप्राणरक्षणेच्छया हत एवेति मृषा कथयामासुः ॥ ८६ ॥

( गद्यम् )

**अत्रांतरे हुण्डकारारुद्धयाऽशोकसुन्दर्या शुककन्यया प्रेरितां रंभां दैत्यवधोत्तरं देव्या दर्शनं भविष्यतीति नहुषो निवर्तयामास**

अत्रांतरेऽस्मिन्नवसरे हुण्डासुरेण कारायां बन्धनालये रुद्धया निरुद्धया ऽशोकसुन्दरीनामिकया शुककन्यया मां मोचयेति कथयितुं प्रेरितां प्राप्तां रंभां दैत्यवधोत्तरं देव्या अशोकसुंदर्याः दर्शनं भविष्यतीति नहुषस्तां निवर्तयामास परावर्तयामास ॥ ८७ ॥

**हुण्डोसुरोऽपि संशुष्यत्तुण्डोऽसुरबलं वली ॥**
**चतुरं राजपुत्राय चतुरंगमचोदयत् ॥ ८८ ॥**

बली बलवान् हुण्डोऽसुरोऽपि संशुष्यन् तुण्डं यस्य तथाभूतः सन् चतुरं युद्धदक्षं चत्वार्यंगानि यस्य तच्चतुरंगं। हस्त्यश्वरथपादातिसेनांगं स्याच्चतुष्टयमित्यमरः। ईदृशं बलं सैन्यं राजपुत्राय नहुषाय अचोदयत् प्रेरयत् ॥ ८८ ॥

( सिंहोन्नतावृत्तम् )

दैत्याः समेत्य रणसीम्न्यमृतानवेक्ष्य
मर्त्यं ह्युपेक्ष्य सहसारिहृदोभिलक्ष्य ॥
बाणांस्तरां खरतरान्मुमुचुः कृतान्त-
प्राणापहारकुशलान्युयुधुर्नितान्तम् ॥ ८९ ॥

हुण्डासुरेण प्रेरिताः दैत्याः रणं समेत्यागत्य तत्र रणसीम्नि रणमूर्धनि मृतं मृतिर्नपुंसके भावे क्तः । न विद्यते मृतं येषां तेऽमृताः देवाः तान् अवेक्ष्य दृष्ट्वा मर्तुं योग्यो मर्त्यः मरणधर्मा नहुषस्तमुपेक्ष्य सहसा अरीणां हृदो हृदयस्य कर्मणि षष्ठी । देवहृदयं देवहृदयान्यभिलक्ष्य तरां अत्यन्तं खरतरान् तीक्ष्णतरान् कृतान्तप्राणहरणकुशलान्बाणान्मुमुचुः नितान्तं तुमुलं युयुधुः ॥ ८९ ॥

( योगिनीवृत्तम् )

नहुषोऽसुरपीडितान्सुरानवलोक्याथ जघान सोऽसुरान् ॥
पतिताः कतिचिद् द्विधा कृता भुवि कृत्ता दितमस्तका मृताः

स नहुषः असुरपीडितान्सुरान् अवलोक्य अथ तदनन्तरं असुरान्जघान । तदाह । कतिचिद्दैत्याः द्विधा कृताः भुवि पतिताः। कतिचित्कृत्ताः भुवि पतिताः । कतिचित् दितानि छिन्नानि मस्तकानि येषां ते दितमस्तका एवं दैत्या मृताः ॥ ९० ॥

( वंशस्थवृत्तम् )

क्षणेन सैन्यं चतुरंगमोजसा रणे हतं मत्तमतीव तेजसा ॥
पलायिताः केऽपि हताश्च केऽपि तान्मलाद्विलोक्यापतदाशु
हुण्डकः ॥ ९१ ॥

नहुषेणातीव तेजसा मत्तं चतुरंगं सैन्यं रणे क्षणेन ओजसा हतं । केऽपि वीराः पलायिताः केऽपि हताश्च । हुण्डकः हुण्डासुरः तदा स्वसैन्यं

पराभवकाले विलोक्य तान्पतितान् दृष्ट्वा बलात् आशु शीघ्रं आप योद्धुं प्राप ॥ ९१ ॥

( इन्द्रवज्रावृत्तम् )

**हुण्डासुरः प्राह मनुष्यपोत ज्ञातं न ते मे बलमल्पचित्त ॥**
**प्राप्तोऽस्मि कालो यदि जीवनेहा चेन्मां गतास्त्रः शरणं व्रजेह९२**

हुण्डासुरः नहुषं प्राह हे मनुष्यपोत हे मनुष्यार्भक । ते त्वया मे बलं न ज्ञातं । हे अल्पचित्त हे बालबुद्धे ते तव कालः प्राप्तोऽस्मि । यदि ते जीवनेहा जीवनेच्छास्ति चेत्तर्हि इह रणे गतास्त्रः सन्मां शरणं व्रज॥९२॥

( हरिणीवृत्तम् )

**हसितवदनो बालो दीनो जगौ खलु मे शृणु**
**प्रहर कुचर त्वं मां कामं दयामिह मा कुरु ॥**
**न हि शशिकुले जातः कश्चिन्नरः शरणं गतो**
**जनुषि विरहं पित्रोः कर्तुस्तवास्म्यसुहागतः ॥ ९३ ॥**

अदीनः अत एव हसितवदनः बालो नहुषः हुण्डासुरं जगौ उवाच हे दुष्ट त्वं मे मत्तः खलु निश्चयेन शृणु हे कुचर कुत्सिताचरण त्वं मां कामं यथेष्टं प्रहर प्रहारं कुरु इह मयि दयां मा कुरु हि यस्माच्छशिकुले सोम-वंशे जातः कश्चिन्नरः प्रतिभटं न हि शरणं गतः जनुषि जन्मकाले मे पित्रोः विरहं वियोगं कर्तुः तवासुहा प्राणहरः काल आगतोऽस्मि॥९३॥

( शार्दूलविक्रीडितम् )

**इत्युक्त्वा निजघान बाणनिचयैर्हुण्डं स मायाविनं**
**मायां तस्य विधूय देवगुरुपद्ध्यानप्रभावाच्च तम् ॥**
**हत्वान्हाय जयश्रिया सह तदाऽशोकान्वितां सुन्दरीं**
**वव्रे गुर्वनुमोदितोऽपि च सुरान्स्वर्गाय स प्रैरयत्॥९४॥**

इत्युक्त्वा स नहुषः मायाविनं बाणनिचयैर्जघान तेन कल्पितां बहुरूपां मायां विधूय च देवगुरुपदध्यानप्रभावतः तं हुण्डासुरं हत्वा तदान्हाय शीघ्रमेव विजयश्रिया सह अशोकान्वितां सुन्दरीं अशोकसुन्दरीं पूर्वोक्तां गुरुणा वसिष्ठेनानुमोदितो वव्रे अपि च स नहुषः युद्धे सहायार्थं आगतान्सुरान्स्वर्गाय स्वर्गं प्रति गन्तुं प्रैरयत् ॥ ९४ ॥

(शिखरिणीवृत्तम्–)

**वसिष्ठेनाज्ञप्तः सह वनितयोपेत्य विनयी**
**जयी पित्रोः पादान्विधिवदभिवाद्याह न मयि ॥**
**विधेयाऽसूया स्वाचरणगुणबद्धो हि जनिमान्**
**परेशाधीनोऽसौ कुहकगुणबद्धेध्मनरवत् ॥ ९५ ॥**

त्वं पितृदर्शनार्थं गच्छेति वसिष्ठेनाज्ञप्तः वनितया भार्यया सह उपेत्य समीपमागत्य विनयी विनयवान् जयी प्राप्तविजयश्च सः विधिवद्यथाविधि पित्रोः पादौ अभिवाद्य आह भवद्भिर्मयि असूया गुणवत्यपि दोषारोपो न कर्तव्यः कुतः हि यस्मात् जनिमान् जन्ममरणादियुक्तः नरः स्वाचरणं स्वकर्म विविधं अत्यागिविहितं तदेव गुणः रज्जुस्तेन बद्धः । स्मृतिश्च 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलं । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्' ॥ 'अयुक्तः कामकारेण फले सक्तो निबध्यते'इति अत एवासौ जीवः परेशाधीनः कर्मफलदातृपरमेश्वराधीनः 'फलमत उपपत्तेः'इति न्यायाऽधिकरणात् । किंवत् कुहकेन सूत्रधारेण गुणबद्धो य इध्मनरः काष्ठनिर्मितनरस्तद्वत् । 'यथा कृत्रिमनर्तक्यो नृत्यन्ति कुहकेच्छया'इत्यादिवचनात् ॥ ९५ ॥

**जननी नवनीतकोमलं सुविशालं सुतवर्ष्म मञ्जुलम् ॥**
**परिरभ्य मुमोद साप्यलं खलु मातुर्यदु चन्द्रशीतलम् ॥९६॥**

जननी नहुषस्य माता सापि नवनीतमिव कोमलं मृदुलं मंजुलं सुतरां

विशालं सुतस्य वक्ष: परिरभ्यालिंग्य अलं मुमोद। यदु यदेव सुतालिंगनं खलु निश्चयेन सानु: इंदु: कर्पूरश्च चन्द्र इव शीतलं अस्ति ॥ ९६ ॥

( उपजातिवृत्तम् )

प्रभोर्वरं नारदवाक्यमायुः स्मृत्वा पुनर्नष्टसुताप्तिमोहः ॥
मुमोद नालं सकलं मृषेति विद्वान्विरक्तः स गृहाश्रितोऽपि ९७

प्रभो: श्रीदत्तस्य वरं नारदस्य वाक्यं च स्मृत्वा आयु: पुनर्नष्टसुतस्याप्तित: प्राप्त्यापि अलं न मुमोद कुत: गृहाश्रितोऽपि स: सकलं मृषेति विद्वान् अत एवालं न ननन्द ॥ ९७ ॥

(आर्यावृत्तम्—)

जरसा पलितत्वेन श्रुतिमेत्यावेदितान्तकोपगमः ॥
पुत्रन्यस्तमहीधूः सस्त्रीकोऽगाद्वनं वृतावगमः ॥ ९८ ॥

जरसा वृद्धत्वेन पलितं जरसा केशशौक्ल्यं तस्य भावस्तत्वं तेन पलितत्वेन श्रुतिं कर्णमूलदेशं एत्यागत्याऽऽवेदितो निवेदितोन्तकस्य मृत्यो: उपगम: समीपदेशप्राप्तिर्यस्मै स: अत एवौरसे पुत्रे नहुषे न्यस्त: महीधू: भूभारो येन स तथोक्त: सस्त्रीक: स्त्रियेन्दुमत्या सहित: वृत: स्वीकृत: अवगमो बोध: ज्ञानमात्मविषयकं येन तथाभूतो राजा वनमगात् वानप्रस्थाश्रमं स्वीचकारेत्यर्थ: तावतैव क्षत्रियस्य कृत्यकृत्यता तुर्याश्रमस्वीकारे नाधिकार: यदुक्तं 'मुखजानामयं धर्मो यद्विष्णोर्लिंगधारणम्। बाहुजातोरुजातानामयं धर्मो न विद्यते' इति ॥ ९८ ॥

( रथोद्धतावृत्तम् )

तत्र विप्रधन आत्मभौ प्रभौ लब्धभक्तिरथ योगविद्विभौ।
लीन आस सुतरां स विद्विषड्डिण्डिमोपममहोक्तिरद्विषत् ॥९९॥

तत्र वने विप्रस्य ब्राह्मणस्य धनमिव धनं यस्य स विप्रधन:। ब्राह्मणधनं सनत्सुजातीये उद्योगपर्वण्युक्तं धर्मश्च सत्यं च दमश्चेत्यादि। प्रभौ

भक्तानुग्रहसमर्थे दत्तात्रेयविषये लब्धा प्राप्ता भक्तिर्येन सः पूर्वं तस्य गौणीभक्तिरासीत् अधुना तु ज्ञानोत्तरकालीनपराभक्तिः 'सा परानुरक्ति-रीश्वर' इति भक्तिमीमांसाकृच्छाण्डिल्यः । स्मृतिश्च 'बुद्धया विशुद्धया युक्त' इत्युपक्रम्य मद्भक्तिं लभते परामित्यन्ता । ईदृगाबभौ अत्यन्तं शुशुभे अथानन्तरं योगावित्प्राप्तयोगः प्राप्तजीवब्रह्मात्मैक्यलक्षणयोग इति यावत् । विद्विषत् विगतकामादिरिपुः यद्वा विशिष्टाः द्विषट् द्वादशसंख्याकास्स्वस्वविषयेभ्य इन्द्रियव्यावृत्या प्रत्यक्तत्वाधिगमहेतवो धर्मादयो यस्य स आयू राजा विभौ व्यापके दत्ताख्ये परे ब्रह्मणि सुतरां लीन आस नामरूपोपाधिपरित्यागेन पुनरावृत्तिरहितं ब्रह्मभावं गतः 'न स पुनरावर्तत' इति श्रुतेः । 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्वतः । ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्' इति स्मृतेः । एवं च सति डिण्डिमोपममहोक्तिः 'ज्ञानादेव तु कैवल्यमिति शास्त्रस्य डिण्डिमः' इति महतामुक्तिः अद्विषत् अप्रतिपक्षभूता निर्बाधेति यावत् । बभूवेति शेषः । यद्वा 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति' इति महतो भगवत उक्तिः अद्विषत् निःपक्षपातरूपा बभूवेति । अत्र द्विषडित्यत्रैवं महाभारते बंद्यष्टावक्रप्रश्नप्रतिवचनानि स्मर्यन्ते । बन्दुवाच । एकादशैकादशिनः पशूनामेकादशैवात्र भवन्ति यूपाः । एकादश प्राणभृतां विकारा एकादशोक्तो दिवि देवेषु रुद्राः ॥ १८ ॥ अत्रोत्तरमष्टावक्र उवाच । संवत्सरं द्वादशमासमाहुर्जगत्याः पादो द्वादशैवाक्षराणि । द्वादशाहः प्राकृतो यज्ञ उक्तो द्वादशादित्यान्कथयन्तीह धीराः ॥ १९ ॥ अत्र नीलकंठी टीका । एकादशेति । प्राणभृतां पशूनां जीवपशूनां एकादशिन एकादशेन्द्रियाणि' येषु ते विषयाः शब्दादयः ते एकादशैव संख्याताः त एव सर्वेऽपि प्रत्येकं यूपा बन्धका रागादयः नैषां कश्चिदप्यबन्धकोऽस्तीति वक्तुं पुनरेकादशग्रहणं अतोऽत्राविमृष्टविधेयांशता दोषो नास्तीति ज्ञेयं शब्दादिग्रहजाः हर्षविषादास्त एव ते दिवि स्वर्गेऽपि रुद्रा रोदयितारो देवानामपि सन्ति किमुत मनुष्याणां । तथा च सति आत्मनोऽसंगत्वं कथं स्यात्

प्रत्यक्षेण दुःखानुभवादाक्षेपः । रुद्रा एकादशोक्ताः स्वारीति सुरपशूत्रोद्यन्तीन्द्रियाणि तेषामेकादशार्था नृपशुनिगडने यूपभूता भवन्ति । रागद्वेषद्वयानि प्रतिविषयममी तद्युजां स्युर्विकारास्तद्वंतस्तेऽपि चैकादश यदि हि सिनोत्येक एकैवमेषां ॥ १८ ॥ दृष्टान्तमुखेनैव दार्ष्टान्तिकं निर्दिशन्परिहरति अष्टावक्रः यद्यप्यत्र संवत्सरजगत्यौ मासाक्षरेभ्योऽनतिरिक्ते एवं संघातादन्यः शुद्धश्चेतनो मूढानामप्रसिद्धस्तथापि आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इति श्रुतेर्यथाहर्गणानां द्वादशाह एवं संघातस्य कृत्स्नस्य शुद्धं ब्रह्मैव प्रकृतिः एतदेव कुत इत्यपेक्षायां चित्तशुद्ध्यैकगम्योऽयमर्थो न शुष्कतर्कगम्य इत्याह द्वादशादित्यानिति । धीराः ध्यानवन्तो योगिनः आदित्यान् आददते इन्द्रियाणि स्वस्वविषयेभ्यो व्यावर्तयन्ति तद्द्वारा प्रत्यक्त्वमधिगमयन्ति तान्द्वादशसंख्याकानाहुः सनत्सुजाताद्या उद्योगादौ । धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षानसूया । यज्ञश्च दानं च धृतिर्यमो महाव्रतानि वै द्वादश ब्राह्मणस्येति । बन्धप्रत्यक्षमेतद्दृढमथ जगतीवर्षवद्वर्णमासात्संघातात्प्रत्यगात्मानाधिक इति यद्यप्यस्ति लोके तथापि । वागारभ्यो विकारः प्रकृतिरविकृतिर्द्वादशाहादिवत्कोऽप्यस्त्येषां भान आत्मा शमिभिरधिगतो वैकृता नैवमीयुः इति । तस्माद्विशिष्टशमादियुक्तो विभौ सुतरां लीन आसेति सुस्थितम् । न केवलं स एव विभौ लीन आस किन्त्वन्योऽपि कश्चन क्रमादवाप्तभक्तिवैभवो यदा भवति तदा सोऽपि विभौ सुतरां विलयमेष्यतीत्यपि वेदितव्यं गम्यत एतच्च काठके मृत्युप्रोक्तां०त्ममेवेति ॥ ९९ ॥

ग्रंथालंकारं शालिन्याह—

**या सारात्रेरात्मजस्येयमत्रेरुक्ताराात्रेर्दिव्यलीला मयात्रेः ॥**
**सात्रेयस्य प्रीतिदास्त्वीरकस्य प्रेम्णोत्सृष्टा शालिनीयं परस्य ॥**

सारात्रेरावेरत्रेरात्मजस्य या मयोक्ता दिव्यलीला प्रेम्णा मयोत्सृष्टा दत्तपदे अर्पिता सेयमात्मज्ञानदानेन शोभत इति शालिनी दिव्यलीला

बुद्ध्यादेः परस्येरकस्य प्रेरकस्यात्रेर्मायिकगुणत्रयतत्कार्यातीतस्यात्रेयस्य दत्तात्रेयस्य प्रीतिदास्तु। ननु सारात्र्याद्यत्रिविशेषणैः कोऽर्थः प्रत्येतव्य इति चेत्'स यदिदं सर्वं पाप्मनो त्रायत यदिदं किञ्च'इत्यादिश्रौतार्थः प्रत्येतव्यः भारतेऽप्यानुशासनिकपर्वण्यत्रिणा स्वयमेवोक्तं 'अरात्रिरत्रिः सारात्रिर्या नाधीते त्रिरद्य वै। अरात्रिरत्रिरित्येव नाम मे विद्धि शोभनं'इति ८६ नीलकंठोक्तात्रटीकाऽरात्रिरिति 'स यदिदं सर्वं पाप्मनो त्रायत यदिदं किंच तस्मादत्रय'इति श्रुतौ पाप्मनस्त्राताऽत्रिरित्यत्रिशब्दस्य निर्वचनं तदेव शब्दान्तरेण प्रदर्शयति यातुधानीं मोहयिष्यन् अरयः कामादयः सन्त्यस्मिन्नित्यरं तस्मात् त्रायत इत्यरात्रिः अरशब्दाल्लुप्तपंचमीकात्परस्य त्रायतेरुपरि क्विप्प्रत्ययः। अरिशब्दान्मत्वर्थीयेर्शआद्यचि यस्येतीकारलोपेऽरमिति सिद्ध्यति यस्मादरात्रिस्तस्मादत्रिः अत्तीत्यद्मृत्युः तस्मात्त्रायत इत्यत्रिरित्यवयवार्थेन पाप्मानं मृत्युमन्ववायानि इत्यादौ मृत्युशब्दस्य पाप्मनि प्रयोगदर्शनाद्धर्मेण पापमपनुदतीति धर्मोऽप्यत्रिः स्यादत आह सारात्रिर्या नाधीते त्रिरद्य वै इति वै इति निश्चितं अद्य वर्तमानकाले यां त्रिस्त्रिवारं नाधीते नाधिगच्छति अतीतस्य हि पुत्रादेः अनुत्पत्तावनागतत्वेनोत्पत्तौ वर्तमानत्वेन नाशेऽतीतत्वेन नान्वेति त्रिरधिगमोऽस्ति तद्यत्र नास्ति सर्वं वर्तमानमेव भवति यत्रावस्थायां सा हार्दाकाशाख्यजगत्कारणप्राप्तिः सर्वपाप्मोच्छेदिका सारात्रिरुच्यते अत्र ह्यतीतानागतं सर्वमस्तीति श्रूयते। यच्चास्येहास्ति यच्च नास्ति सर्वं तदत्र गत्वा विन्दत इति। अत्र हि सर्वे कामाः समाहिता इति च। यस्मादेवमरात्रिरस्मि तस्मादत्रिरेव मम नामेति तस्माद्देहाद्युपाधिपरिच्छेदरहितनिर्विकारब्रह्मात्मत्वापरोक्षसाक्षात्कारवानत्रिः। ईदृशस्य पुत्राद्येषणाभावेऽपि ब्रह्मविदां वरत्वाद्वृत्तिसद्भावाच्च स्वत उत्थानाभावेऽपि परत उत्थानसद्भावाल्लोकसंग्रहार्थं जीवतो वाक्यकरणादितिस्मार्तवचनेन पितृवाक्यपालनपरत्वात्कथंचित्पुत्रैषणा संभाव्यते। भागवतेऽपि 'ब्रह्मणा नोदितः सृष्टावत्रिर्ब्रह्मविदां वरः। सहपत्न्या ययावृक्षं कुलाद्रिं तपसि स्थित'

इति। तथा च शाण्डिल्योपनिषदि 'अथ कस्मादुच्यते दत्तात्रेय इति यस्मान्सुदुष्करं तपस्तप्यमानायात्रये पुत्रकामायातितरां तुष्टेन भगवता ज्योतिर्मयेनात्मैव दत्तो यस्माच्चानसूयामात्रेऽत्रेस्तनयोभवत्तस्मादुच्यते दत्तात्रेय इति। एवं परमात्मनो भक्तानुजिघृक्षयावतारत्वेनात्रिपुत्रत्वं श्रौतमत्र प्रतिपादितं। अत्रिरात्रेय इत्यत्राप्यत्रिपदेन लोकोत्तरज्ञानवत्वं ब्रह्मत्वं च ऋक्शाखीया आमनन्ति। 'यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः। अत्रयस्तमन्वविन्दन्नह्य१न्ये अशक्नुवन्'। सूरिवंद्यः सूर्यः जगत्प्रसवकर्ता वा विवर्ताधिष्ठानभूतः उपलक्षणाज्जगदुत्पत्तिस्थितिलयकर्ता। सूर्य आत्मा तं 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुत्यन्तरात् जगतो जंगमस्य तस्थुषः स्थावरस्य चात्मा सूर्य इति श्रुत्यन्तरार्थः यं सूर्यं परंब्रह्म। स्वर्भानू राहुरूपो मृत्युरविध्यत् व्याप्तवान् केन तमसाऽनात्मबुद्धिरूपाविद्या तमः तेनाविद्ययेत्यर्थः अत्तीत्यत् अविद्या ततस्त्रायंत इत्यत्रयः पूजायां बहुवचनं ते सूर्यमात्मानं अविद्यातत्कार्यसाक्षिणं अन्वविंदन्नपरोक्षीकृतवंतः। अन्येऽत्रिव्यतिरिक्ता ज्ञातुं हि निश्चयेन नाशक्नुवन्। एवमध्यात्मपरोर्थः। अधिदैवतपरोर्थस्तु यममृतपानसमये आत्मानं दर्शयंतं सूर्यमादित्यं स्वर्भानू राहुर्दैत्यविशेषः छिन्नशीर्षोऽपि शिववरदानाप्तसामर्थ्यात्कु (प्र) भामंडलमध्यगतः सन्तमसा आविध्यत् तदा विस्मितानामृष्यादीनां सतां अत्रयस्तं ग्रहं पक्षवर्जितयुतैः षण्मासैः पक्षेण वा ग्रहोयमित आरभ्यानेन प्रकारेण ग्रसितेति स्वयं ज्ञात्वान्येभ्यो ज्ञापयामासुरित्यन्वविंदन्निति क्रियया ज्ञाप्यतेन्ये तु तथा नाशक्नुवन्॥
इति श्रीवासुदेवानंदसरस्वतीकृतश्रीदत्तचंपूटीका समाप्ता दत्तपदेर्पिता च॥

॥ श्रीगणेशदत्तगुरुभ्यो नमः ॥

त्रिशतीकाव्य व श्रीदत्तचंपू यांतील

# वृत्तालंकारविवरण

लेखक—पं. श्रीपादशास्त्री तापस, मुळगुंद जि. धारवाड.

॥ श्रीः ॥

श्रीगणेशदत्तगुरुभ्यो नमः॥

# वृत्तालंकारविवरणम् ॥

सदया[1] गुरुभूधरजा विरजाः पदभक्तिदत्तनानार्था ।
प्रस्तुत-बहुसुचरित्रा त्रिशती त्रिपुराम्बिका चिरं जयति ॥ १ ॥
वृत्तालङ्कृतिकेन्द्रान्[2]नत्वा श्रीवासुदेवयोगीन्द्रान् ।
त्रिशतीवृत्तालङ्कृतिविवृतिं तत्कृतिगतीहया कुर्वे ॥२॥

अथ पूज्यचरणा अकारणकरुणार्णवायमानान्तःकरणाः करणाकरणा[3]तीतसरणिविचरणा अपि लोकसङ्ग्रहणैककारणतपश्चरणा द्रुहिणरमणीनटनचर्याचार्यायितरसनाचणाः श्रीवासुदेवानन्दसरस्वतीगुरुचरणाः, अनेकैरप्यद्वितीयैरुदधिभिरिवात्यगाधैरविद्याग्रन्थिमन्थैरपि पूर्वग्रन्थैरस्मादृशामसूक्ष्मदृशां तादृशमुपकारमपश्यन्तः, पश्यन्तश्च श्रीगुरुभक्तिमेव अविचिकित्सां चिकित्सां मायामयस्यामयस्य, गुरुपरम्पराकिरणतरणेः श्रीदत्तगुरुशिरोमणेः पवित्रैश्चरित्रैः सान्द्रसन्दब्धं विविधोपममपि निरुपमं सितासित[4]महाभेषजमिव बालग्राह्यं मन्दारतरुमिव विबुधकुलसुलभसकलार्थं लघुगात्रमपि बहुपात्रं त्रिशतीं नाम भव्यं काव्यं विधित्सवः, स्मृतिमात्रसुदूरोत्सारितनिखिलप्रत्यूहव्यूहा अपि शिष्टाचारमिवानुबध्नन्तः प्रकृतकाव्यनायकश्रीदत्तगुरुनायकभजनरूपमभिरूपं परममङ्गलं मङ्गलमादौ निबध्नन्ति—सुशङ्करमिति । सु=शोभना एकीभावेन विलसन्तः, शं=शङ्करः, को=ब्रह्मा; रः=रामाभिन्नो विष्णुश्च

१ त्रिशत्यां त्रिपुराम्बिकायां च श्लिष्टानि सर्वाणि विशेषणानि । २ वृत्तं=सदाचारः स एव अलङ्कृतिर्भूषणं येषां ते वृत्तालङ्कृतिकाः; तेषामिन्द्राः श्रेष्ठास्तान् । ३ करणाकरणे = विधिनिषेधौ । ४ सितासितं = शर्करावगुण्ठितम् ।

यस्मिन्स सुशङ्करः तं ब्रह्मविष्णुमहेशरूपमित्यर्थः । सुशं=मोक्षरूपं सुखं ( भक्तेभ्योऽविलम्बेन वितरणार्थं ) करेषु=हस्तेषु यस्य तमिति वा । सु=सम्यक् शम्=ऐहिकमामुष्मिकं च सुखं येभ्यस्तादृशाः कराः=किरणा यस्य तमिति वा । सु=(मनुष्याद्यपेक्षया) अधिकं शं=सुखं येषां ते देवाः सुशम्पदार्थाः, तेऽपि कराः=करप्रदा ( बलिप्रदा ) यस्य तमिति वा । " सर्वेऽस्मै देवा बलिमावहन्ति " इति श्रुतेः । अथवा कोशप्रामाण्याद् अर्कवाय्वादयो, जीवाश्च कपदार्थः । रपदार्थश्च धनादयः । ते सर्वे सुशम्=जनकतयाऽनुभवितृतया वा सुखविशिष्टा भवन्ति येन स सुशङ्करः तम् । " अस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति " इति श्रुतेः । यद्वा सुशं=विश्वकल्याणकरं वेदं काय=ब्रह्मणे राति=ददातीति सुशङ्करः तम् । " यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै " इति श्रुतेः । अथवा शं=त्रिपुरसुन्दरीसमालिङ्गनादिसुखं; कं=शिरःस्थगङ्गारूपजलं करस्थब्रह्मशिरःकपालश्च; रः=ललाटस्थो वह्निः ते सर्वे सु सम्यञ्चः समाना यस्य शिवरूपस्य स सुशङ्करः तम् । 'भीतिर्नास्ति भुजङ्गपुङ्गवविषात्प्रीतिर्न चन्द्रामृतान्नाशौचं नृकपालदामलुलनाच्छौचं न गङ्गाजलात् । नोद्वेगश्चितिभस्मना न च सुखं गौरीस्तनालिङ्गनादात्मारामतया हिताहितसमः स्वस्थो हरः पातु वः' इत्युक्तेः । यद्वा कुरुपुरे कृष्णासारिति विलासिनीभिः समं तरणौ विहरन्तं कश्चिन्न्यञ्चं क्षितिपतिमवलोक्य समुत्पन्ना सु=शोभना 'को देवोऽनेना--

१ " बलिहस्तांशवः कराः" इत्यमरः । २ " शं सुखं शङ्करः श्रेयः" इति, "कः प्रजापतिरुद्दिष्टः कोऽर्कवाय्वनिलेषु च । कश्चात्मनि मयूरे च कः प्रकाश उदाहृतः । कं शिरो जलमाख्यातं कं सुखं च प्रकीर्तितम् । " इति " रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि च " इति चैकाक्षरकोशोऽत्र प्रकरणेऽनुसन्धेयः । शमिति मान्तमव्ययम् । तेन विविधेष्वपि समासेषु मकारलोपो न शङ्क्यः ।

राधितः ? केषां वा सद्गुरूणां चरणावार्चितौ ? येनेत्थं सुखमनुभवति इत्याद्याकारिका शङ्का अनिश्चयो यस्य स सुशङ्कः कुरुपुरवासी श्रीपाद-स्वामिसेवकः कश्चिद्रजकः। तस्मै तदैव तदिच्छानुसारेण साम्राज्यदं वरं राति ददातीति सुशङ्करः श्रीपादश्रीवल्लभः तम्। अनेन श्रीगुरुचरित-नवमाध्यायस्था श्रीपादावतारीया कथा सूचिता। अथवा "किमिदम्? सर्वेऽत्र दण्डधारिणः?, कोऽत्र गरीयान्? को वा लघीयान्? कः श्रीगुरुः? के वा शिष्यादयः?, इत्याद्याकारिकाः सु=अधिकाः शङ्का यस्य स सुशङ्कः=गाणगापुरसन्निहितकुमसीग्रामस्थः श्रीनृसिंहोपासकः श्रीगुरु-निन्दकः त्रिविक्रमभारती, यत्सन्निधौ श्रीगुरुभिर्मायया सर्वेषां नृप-परि-जनादीनां यतित्वमिव प्रादर्शि। तं तादृशं सुशङ्कं निंदकमपि राति=रलयोरभेदान्निजरूपदर्शनदानेनानुगृह्य भक्तत्वेन लाति=स्वीकरोतीति सुशङ्करः श्रीनरसिंहसरस्वती सद्गुरुनाथः तम्। अनेन श्रीगुरु-चरितचतुर्विंशाध्यायकथासारः समुद्धृतः। इत्थमन्येऽपि श्रीदत्तात्रेय-श्रीपाद-श्रीनृसिंहसरस्वतीरूपावतारत्रयसाधारणाः तत्तदवतारासाधारणा-श्चार्था अस्मिन्पदे पदान्तरेषु च यथासम्भवमूह्याः। एवं सति श्लोके ऽस्मिन् श्रीचरणैः (प्रकृतग्रन्थकृद्) कः श्लेषालङ्कारः सम्यक् स्वारस्य-मश्नुत इति भावुकैर्भावनीयम्। श्रीचरणाशयसिन्धोः कश्चिद् बिन्दुर्मया-यमालक्षि। श्रद्धाकृतगुरुभजनो बुध[1]घटजननो मुहुस्तं[2]मतिपिबतु॥ त-देवमत्र श्लोके प्रकृतानामेव श्रीदत्तात्रेयश्रीपादश्रीनृसिंहसरस्वतीगुरू-णामनेकार्थशब्दविन्यासेन कीर्तनात्प्रकृतानेकविषयः श्लेषालङ्कारः। लक्षणं तु श्रीचरणैरुक्तम्। प्रणमत्पुरन्दरमिति महेन्द्रगतश्रीगुरु-विषयकरतिभावस्य कविगतं तं प्रत्यङ्गतया प्रेयोऽलङ्कारश्च। अनयोरर्थालङ्कारयोः श्रीचरणोक्तानुप्रासाख्यशब्दालङ्कारस्य च मिथोऽ-

---

१ सन् सुधीः कोविदो बुधः,. इत्यमराद्विद्वद्रूपी घटजननः=अगस्त्यः।
२ तं सिन्धुम्।

ङ्गाङ्गिभावानापन्नतयाऽवस्थानात्संसृष्टिश्च । "सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः" इति तल्लक्षणात्। इदमत्रावधेयम्–अत्र काव्ये प्रायः प्रतिश्लोकं वृत्त्यनुप्रासो वा लाटानुप्रासो वा स्फुटानुप्रासो वा यमकं वा अन्यो वा शब्दालङ्कारः श्रीचरणैः प्रत्युप्तः । तदेषां प्रायिकत्वात् सुलभ-समन्वयत्वाच्च न पुनः पुनः लक्षणानि समन्वयश्च प्रदर्श्यन्ते, किन्त्वत्रैव सकृत्तल्लक्षणानि सोदाहरणानि जयदेवकविकृतचन्द्रालोकोक्तानि विलिख्यन्ते । तथाहि

स्वरव्यञ्जनसन्दोहव्यूहाः सन्दोहदोहदाः ।
गौर्जगज्जगदुत्सेकाच्छेकानुप्रासभासुरा ॥
आवृत्तवर्णसम्पूर्णंवृत्त्यनुप्रासवद्वचः ।
अमन्दानन्दसन्दोहस्वच्छन्दस्यन्दिमन्दिरम् ॥
लाटानुप्रासभूर्भिन्नाभिप्राया पुनरुक्तता ।
यत्र स्यान्न पुनः शत्रोर्गार्जितं तर्जितं जितम् ॥
श्लोकस्यार्धे तदर्धे वा वर्णावृत्तिर्यदि ध्रुवा ।
तदा मता मतिमतां स्फुटानुप्रासता सताम् ।
उपमेयोपमानादावर्थानुप्रास इष्यते ।
चन्दनं खलु गोविन्दचरणद्वन्द्ववन्दनम् ॥
आवृत्तवर्णस्तबकं स्तवकन्दाङ्कुरं कवेः ।
यमकं प्रथमा धुर्यं माधुर्यं वचसो विदुः ॥ इति ॥

अर्थालङ्कारास्तु यथामति सलक्षणं ससमन्वयं च स्फुटीकरिष्यन्त इति। वंशस्थं वृत्तम्। "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात्। समन्वयश्च—

ज त ज र
सुशङ्क-रंसन्त-मजंगु-रुंपरम् इति। चतुर्ष्वपि पादेषु समानगणक-
ISI SSI ISI SIS

त्वादिदं समवृत्तमित्युच्यते। एवमग्रेऽपि। पादान्ते यतिः (विरामः)।
मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः। जो गुरुमध्यगतो
(SSS) (III) (SII) (ISS) (ISI)
रलमध्यः सोऽन्तगुरुः कथितोन्तलघुस्तः ॥ इति गणलक्षणसङ्ग्रहश्लोकः।
(SIS) (IIS) (SSI)

अत्र "जोऽर्को रुजं मध्यगः" इति मध्यगुरोर्जगणस्य रोगफलकत्वेन काव्यारम्भे प्रयोगो निषिद्धोऽपि मङ्गलवाचकसुशब्दादितया न दोषमावहति। देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वेति भामहोक्तेरिति सर्वं सुस्थमिति दिक् ॥ १ ॥

(श्लो. २) अत्र विकारादिकारणाभावेऽपि आकारादिकार्योत्पत्तेर्वर्णनाद् विभावनालङ्कारः। "विभावना विनापि स्यात्कारणं कार्यजन्म चेत्" इति लक्षणात्। स च पुलस्त्यास्यादिवेति इवशब्दवाच्यया पूर्णोपमया सङ्कीर्णः। उपमावाचकशब्दस्याभावे अर्थादौपम्यस्यार्थत्वे बिम्बप्रतिबिम्बभावसत्त्वे दृष्टान्तालङ्कारः। तद्वाचकशब्दसत्त्वे तूपमालङ्कार इति काव्यप्रकाशटीकादौ स्पष्टीकृतम्। श्रीचरणास्तु अत्र श्लोके दृष्टान्तालङ्कार इत्याज्ञापयन्ति तन्समन्वयः कथमिति न शङ्क्यम्। पुलस्त्यास्यादिवेत्यत्रोक्तरीत्या उपमालङ्कारस्यैव सत्वेऽपि पूर्वार्धे विकारिवद्भवनविमलयशोवाचनयोरार्थौपम्यस्य सत्वेन तत्र तदुक्तदृष्टान्तालङ्कारस्यापि समन्वयसम्भवेनाविरोधात्। शिखरिणीवृत्तम्। "रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति लक्षणात्। रसैः=षड्भिः, रुद्रैः=एकादशभिः, छिन्ना=यति-

य म न स भ लगु
मतीत्यर्थः। समन्वयश्च–विकारा–भावेऽपि–प्रभुर–भवदा–कारिव–दजो
ISS SS S III IIS SII IS
इति। इदमपि समवृत्तम् ॥ २ ॥

(श्लो. ३) अत्र बालाद्युक्तिमिष्टत्वरूपसामान्येन प्रकृतग्रन्थकृदुक्तिमिष्टत्वरूपविशेषस्य समर्थनादर्थान्तरन्यासो नामालङ्कारः। "उक्तिरर्थान्तरन्यासः

स्यात्सामान्यविशेषयोः, इति लक्षणात्। न च "समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्" इति लक्षणलक्षणलक्षितं काव्यलिङ्गमेवात्र किं न स्यादिति वाच्यम्। समर्थ्यसमर्थकयोः सामान्यविशेषभावसम्बन्धेऽर्थान्तरन्यासः, तदितरसम्बन्धे काव्यलिङ्गमित्यालङ्कारिकैर्व्यवस्थापनात्। गीतिर्नाम अर्धसमवृत्तमार्याप्रभेदः। "आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः" इत्युक्तेः। आर्यालक्षणं च–"यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थे पञ्चदश सार्या॥" इति। अस्य मात्रावृत्तत्वान्नातीव गणादरः॥ ३॥

(श्लो.४)अत्रोपमानोपमेययोःसहृदयाह्लादकत्वेन सुन्दरसादृश्यस्य स्पष्टं प्रकाशनादुपमालङ्कारः। "उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः।" इति लक्षणात्। तत्रापि पूर्णोपमेयम्। उपमानयोर्दर्पणमठयोः, उपमेययोः प्रकृतग्रन्थचरितसारयोः, सामान्यधर्मस्फुटप्रेक्षणस्य, उपमावाचकस्य इवशब्दस्य चोपादानात्। अनुष्टुब्वृत्तम्। लक्षणं च "पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः। गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम्॥ इति। एतत्पद्यानुरूपं पद्यं श्रीविद्यारण्यप्रणीते श्रीमच्छङ्करविजये—

यद्वद् घटानां पटलो विशालो विलोक्यतेऽल्पे किल दर्पणेऽपि। तद्वन्मदीये लघुसङ्ग्रहेऽस्मिन्विलोक्यतां शाङ्करवाक्यसारः॥ इति ॥ ४ ॥

(श्लो.५) अत्र गोगन्धर्वपूर्णा, अमरजापरीता, गन्धर्वपूर्वामरमण्डिता, गन्धर्वपूस्तुल्यकुसंसृतिघ्नी, इत्येतैर्विशेषणैः प्रकृतगाणगपुर्याः क्रमेण अर्थधर्मकाममोक्षरूपसकलपुरुषार्थप्रदत्वं ध्वन्यते। इन्द्रवज्राख्यं समवृत्तम्। "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इत्युक्तेः। समन्वयश्च—

त त ज गु. गु.
गन्धर्व - पूर्याप्र - थिताक्षि - तौ गो इति ॥ ५॥
ऽऽ। ऽऽ। ।ऽ। ऽऽ

(श्लो.६)अत्र प्रकृतगाणगापुरस्य चिरार्जितपातकसंहारकत्वाद्युपन्यासो दुष्करविषयत्वात्समर्थनसापेक्षः । तस्य च " शुचिराजेन विराजितम् " इति तत्र पावनसम्राजः श्रीदत्तराजस्य निवासप्रदर्शनेन समर्थनं कृतमिति काव्यलिङ्गालङ्कारः । " समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्" इति लक्षणात् । सुन्दरीनामकमर्धसमवृत्तम् "अयुजोर्यदि सौ जगौ युजोः सभरात्लगौ यदि सुन्दरी तदा " इति छन्दोमञ्जरीवचनात् । श्रीचरणास्तु अत्र योगिनीवृत्तमित्याज्ञापयन्ति । तदेव वाऽभिधानमस्तु । लक्षणं

स स ज गु
तु न भिद्यते। सुचिरा–र्जितपा –तकान्त - कं
। । ऽ । । ऽ । ऽ । ऽ

स भ र ल गु
रुचिरा - गारमि दंह्यका - न्तकम् । इति समन्वयः ।।६।।
। । ऽ ऽ । । ऽ । ऽ । ऽ

(श्लो.७) अत्रापि पूर्ववद्दत्तनिवासेन सत्रसाफल्यादीनां समर्थनात्काव्यलिङ्गम् । वृत्तं पञ्चमश्लोकवत् ।। ७ ।।

(श्लो. ८) वृत्तम् ६ वत् ।। ८ ।।

(श्लो.९)शालिन्याख्यसमवृत्तम्।'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात् । अब्धिभिश्चतुर्भिः, लोकैः सप्तभिश्च यतिरित्यर्थः ।

म त त गु.गु.
सायन्दे-वान्नाग-नाथोऽथ -दे व इति समन्वयः ।। ९ ।।
ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

(श्लो.१०) अत्र सर्वज्ञोऽपि न वेत्सि साक्ष्यपि नेक्षसे इति विरोधः। स च काकाऽऽभासीकृत इति विरोधाभासालङ्कारः। "आभासत्वे विरोधस्य विरोधाभास इष्यते" इति लक्षणात् " पूर्वप्रभो "इति सम्बुद्धिविशेषणस्य " मया परिचर्याऽकरणेऽपि मत्पूर्वजकृतसेवाफलत्वेन मह्यं दर्शनाद्यभीष्टं वितरणीयम् " इत्यभिप्रायगर्भतया " अलङ्कारः परिकरः साभिप्राये

विशेषणे " इति लक्षणलक्षितः परिकरालङ्कारश्च । अद्भवदित्युपमा च । शार्दूलविक्रीडितं वृत्तम् । "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् । " इति । द्वादशभिः सप्तभिश्च यतिः ।

म स ज स त त गु
मांनोवे-त्स्यपिने-क्षसेन-शृणुषे-सर्वज्ञ-साक्षिन्वि-भो।इति समन्वयः॥१०॥
ऽऽऽ ।।ऽ ।ऽ।।।ऽऽऽ।ऽऽ। ऽ

(श्लो. ११) अत्र मालिनीनाम समवृत्तम् । " ननमयययुतेयं मालिनी भोगिलोकैः । " इति तल्लक्षणात् । समन्वयश्च—

न न म य य
द्विजइ तिनुति-मुत्क्वागा-त्समोऽहं-समोहम् । इति ॥ ११ ॥
।।। ।।। ऽऽऽ ।ऽ ऽ।ऽऽ

(श्लो. १२) अत्राद्यपादत्रये उपेन्द्रवज्राया अन्तिमपादे चेन्द्रवज्रायाः सत्वेन जया नाम उपजातिभेदः।"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति लक्षणात् । अनन्तरोदीरिते=इन्द्रवज्रोपेन्द्रवज्रे । तत्रेन्द्रवज्रालक्षणं पूर्वमुक्तम् (५ मश्लोके)। उपेन्द्रवज्रालक्षणं तु "उपेन्द्रवज्रा जतजास्ततो गौ" इति । यथाऽत्रैव श्लोके

ज त ज गु.गु.
ततःप्र-बुद्धःस - तदाप्र - बुद्धम् इति ॥ १२ ॥
।ऽ। ऽऽ। ।ऽ। ऽऽ

(श्लो. १३) वृत्तम् ४ वत् ।

( श्लोक १४ ) अत्र (गुरु) चरित्रमेवामृतमिति विषयिणोऽमृतस्य रूपेण विषयस्य श्रीगुरुचरित्रस्य रञ्जनाद्रूपकालङ्कारः । " विषय्यभेद्ताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तत् " इति लक्षणात् । विषयि=उपमानम्, विषयः=उपमेयम् । वृत्तम् आर्द्राख्य उपजातिभेदः ॥१४॥

( श्लोक १५ ) अत्र गन्धर्वस्थेत्यादिपदैः प्रकृतश्रीगुरोरप्रकृतहेरम्बस्य च वर्णनात्प्रकृतानेकविषयः श्लेषालङ्कारः । "नानार्थसंश्रयः श्लेषो वर्ण्या-

वर्ण्योभयाश्रितः ’’ इति लक्षणात्। स च चिन्तामणिरिवेति धर्मलुप्तो-पमया संसृष्टः। वृत्तम् ३ वत्॥ १६॥

(श्लोक १६) भव एवाम्बुधिरिति रूपकम्। रथोद्धतावृत्तम्। “ रात्परैर्नरलगै रथोद्धता ” इति लक्षणात्। समन्वयः—

र न र ल.गु.
नामधा–रकउ–वाचनो–गुरुः इति।
S I S I I I S I S I S

(श्लोक १७) वृत्तं कीर्तिर्नाम उपजातिभेदः॥ १७॥

(श्लोक १८) अत्र पूर्वार्धार्थस्य श्रीगुरुरोषतोषहेतुकविनाशाभ्युदया-न्यथाकरणाशक्यत्वरूपस्य ब्रह्मवैवर्तपुराणगतकलिकमलासनसंवादेन विनिश्चयात् शब्दप्रमाणमलङ्कारः। यथोक्तं कुवलयानन्दव्याख्यातृभि-राशाधरभट्टैः—“ श्रुत्यादिवाक्यविन्यासान्निश्चयः शब्द उच्यते ” इति। उदाहारि च “ साम्बः शम्भुः परं ब्रह्म कैवल्योपनिषच्छ्रुतेः ” इति। काव्यप्रकाशकृदादयस्तु अलङ्कारत्वजीवातुभूतचमत्कृतिजनकत्वाभावेन ईदृशेषु अलङ्कारत्वं नेच्छन्ति। वृत्तं बाला नाम उपजातिः॥ १८॥

---

(१) अत्र मुद्रितपुस्तके एतत्पद्यव्याख्यानान्ते “ अनुमानालङ्कारः ” इति पाठो दृश्यते। तत्पाठप्रामाण्याय लिखितमूलपुस्तकसंवादः शरणीकर-णीयः। संवादकृतप्रामाण्यावगतौ चात्र श्लोके तदलङ्कारसमन्वयः श्रीगुरु-प्रसादेनासादनीयः। तल्लक्षणं तु “ अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः। इति काव्यप्रकाशेऽभिहितम्। मम तु कदाचिद् अग्रिमश्लोकव्याख्यानान्तेऽयं पाठः स्यादिति भाति। तत्र “ऐहिकतुच्छदुःखवारणाभावे दुःखसमुद्राय-माणसंसारवारणं कथं भवेदित्युक्त्या “ अयं भवमहादुःखसागरवारणाभा-ववान्, तदल्पैहिकदुःखवारणाभावात् ”इति साध्यसाधनवचनस्य कथंचि-च्छक्योपपादत्वात्। परन्तु तत्रापि तस्यालङ्कारत्वे सहृदयहृदयमनुयोक्तव्यम्। अन्यथा वह्निमान् धूमादित्यादावपि तत्त्वं केन दण्डेन वार्येतेत्यलं पल्लवितेन॥

( श्लोक १९ ) अत्रापि पूर्ववच्छद्मप्रमाणालङ्कारः। स्रग्धरावृत्तम्। "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति वृत्तरत्नाकरात्। समन्वयश्च—

म र भ न य य य
काश्यांक–ष्टेनचे–ष्टार्पण–तउत–मुदातं–विशिष्टे–ष्टजुष्टम् इति ॥ १९ ॥
S SS SIS SII III ISS ISS ISS

( श्लोक २० ) अत्र उपमानादिचतुष्टयोपादानेन चारुसादृश्यभानात्पूर्णोपमालङ्कारः। स च सत्वावृतेत्याद्यभङ्गश्लेषानुप्राणितः। वृत्तम् ४ वत् ॥ २० ॥

( श्लोक २१ ) अत्र कैमुत्यन्यायेन श्रीदत्तगुरुमहिमसिद्धेर्वर्णनात्काव्यार्थापत्तिरलङ्कारः। "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" इति लक्षणात्। वृत्तम् १६ वत् ॥ २१ ॥

( श्लोक २२ ) तोटकं नाम समवृत्तम्। "इह तोटकमम्बुधिसैः प्रचितम्" इति लक्षणात्। समन्वयश्च इति—

स स स स
अतनुः–सतनुः–कुतआ–सतनुः ॥ २२ ॥
IIS IIS IIS IIS

( श्लोक २३ ) वृत्तम् १६ वत्

( श्लोक २४ ) लोचनाभ्यां साकं रसं ददतुरित्यत्र "दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह" इत्यादाविव सहोक्तिरलङ्कारः। "सहोक्तिः सहभावश्चेद् भासते जनरञ्जनः।" इति लक्षणात्। वृत्तम् १९ वत्॥२४॥

( श्लोक २५ ) अत्रैतत्पद्यगतप्रमिताक्षराख्यवृत्तस्य प्रकृतार्थपरेण प्रमिताक्षरपदेन सूचनान् मुद्रालङ्कारः। लक्षणं श्रीचरणैरुक्तम्। तद्वृत्तलक्षणं तु "प्रमिताक्षरा सजससैरुदिता" इति। समन्वयश्च—

स ज स स
अथसा–विभून्सु–यशसा–पयसा इति ॥ २६ ॥
IIS ISI IIS IIS

( श्लोक २६ ) अत्र स्वसम्बद्धबालकालकगतकौटिल्यरूपगुणस्य अनसूयाम्बालोचनाभ्यामनङ्गीकृतत्ववर्णनाद् अतद्गुणालङ्कारः । " सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् " इति लक्षणात् । तस्य चानङ्गीकारस्य " सद्दर्शने हि विपर्ययः " इति सामान्येन समर्थनादर्थान्तरन्यासश्च । वृत्तम् १६ वत् ॥ २६ ॥

( श्लोक २७ ) वृत्तम् ९ वत् ॥ २७ ॥

( श्लोक २८ ) प्रहर्षिण्याख्यं समवृत्तम् । त्रिभिर्दशभिश्चाक्षरैर्यतिः । " म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् " इति लक्षणात् ।

म न ज र गु.
योविश्वं–सृजति–चपाति–हन्त्यधी–शो इति सङ्गतिः ॥ २८ ॥
ऽऽऽ ।।। ।ऽ। ऽ। ऽ

( श्लोक २९ ) वृत्तम् १ वत् ।

( श्लोक ३० ) अत्र उत्तरश्लोके च वृत्तम् ४ वत् ॥ ३० ॥ ३१ ॥

( श्लोक ३२ ) इन्द्रवज्रावृत्तम्[1] ।

( श्लोक ३३ ) अत्र तप्ताम्बरीषाक्ष इत्यत्र साधारणधर्मयो रक्तत्वविस्फारितत्वयोरुपमावाचकशब्दस्य चानुपादानाल्लुप्तोपमालङ्कारः । श्रूयमाणेवशब्दस्य समासगोपमायामन्वयाभावात् । अतोऽत्र शप्त्वेवेति भिन्नक्रम इवकारः । साक्षात्परशिवावतारभूतदुर्वासोमहर्षेः स्वाभिन्नविष्णुपरमभक्ताम्बरीषराजर्षिविषये वास्तविककोपशापादेरसम्भवेन, लोकोद्धाराय भगवन्तं दशकृत्वोऽवतारयितुमेव सर्वोऽप्ययं महर्षेः शापाटोपाद्यभिनय इति तद्व्यङ्ग्योऽर्थः । अस्तु । शापरूपकारणस्याम्बरीषगतत्वेन तत्कार्यभूतान्यथात्वस्य च विष्णुगतत्वेन वर्णनादसङ्गत्यलङ्कारश्च । " विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसङ्गतिः । " इति लक्षणात् । वृत्तम् ५ वत् ॥ ३३ ॥

---

१ निर्णयसागरमुद्रितपुस्तकेऽत्र उपजातिरिति लिखितम् । तच्चिन्त्यम् ।

( श्लोक ३४ ) इयं (कथा) नवसुधेति व्यस्तरूपकम्। तत्रापि, नवत्वविशेषणेन प्रसिद्धसुधातो भेदे प्रतीयमान एव तदीयमाधुर्यादिधुर्य-धर्मारोपमात्रपर्यवसितत्वात् ताद्रूप्यरूपकमिदम्। द्रुतविलम्बितनामकं समवृत्तम्। "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात्। सङ्गतिश्च

न भ भ र

नवसु–धावसु–धातल–आहृता इति ॥ ३४ ॥

| | | S | | S | | S | S

( श्लोक ३५ ) अत्र वृत्तम् २५ वत्। अग्रिमश्लोके च ४ वत्॥ ३५, ३६ ॥

( श्लोक ३७ ) अत्र कीर्तेः स्वर्गादिव्याप्तिसम्बन्धाभावेऽपि तत्सम्बन्धवर्णनात्सम्बन्धातिशयोक्तिरलङ्कारः। "सम्बन्धातिशयोक्तिः स्यादयोगे योगकल्पनम्।" इति लक्षणात्। अत्र आदिमचरणद्वये त्रिष्टुभः,अन्तिम-चरणद्वये पङ्क्तेश्च छन्दसः सत्वेन अर्धसमो वृत्तविशेषः। नास्य विशिष्टं नाम छन्दोग्रन्थेषूपलभ्यते। न चात्रोपजातित्वं शङ्क्यम्, विजातीय-च्छन्दोमेलने तत्त्वाभावात्। अन्यथा सर्वेषामप्यर्धसमवृत्तानामुपजातित्व-प्रसङ्गात्। इष्टापत्तौ च अपसिद्धान्तात्।' श्रीचरणास्तु अत्र त्रिष्टुबित्या-ज्ञापयन्ति। तत्पूर्वार्धमालाभिप्रायेणेति भाति ॥ ३७ ॥

( श्लोक ३८ ) वृत्तम्=माला नाम उपजातिभेदः ॥ ३८ ॥

( श्लोक ३९ ) व्रात्योऽप्यव्रात्य इति विरोधस्य अवतारभेदेना-भासीकरणाद्विरोधाभासालङ्कारः। कलाधर इत्युपमा च। वृत्तम्= शालाख्या उपजातिः ॥ ३९ ॥

(श्लोक ४०) अत्र उत्तरश्लोके च श्रीचरणैरेव अलङ्कारस्य सलक्षण-स्योक्तत्वात्समन्वयस्य च स्पष्टत्वान्न पुनः पिष्टं पिष्यते। वृत्तम् = १-४ वत् ॥ ४० ॥

(श्लोक ४१) एतदनुरूपः श्लोको यथा श्रीमच्छङ्करविजये–"आज-न्मनो गणयतो ननु तान्गताब्दान् माता पिता परिणयं तव कर्तुकामौ।

पित्रोरियं प्रकृतिरेव पुरोपनीतिं यद्धयायतस्तनुभवस्य ततो विवाहम् ॥"
वृत्तं पूर्ववत् ॥ ४१ ॥

(श्लोक ४२) अत्र (योगश्रीवरण) भोगश्रीनिराकरणोपन्यासस्य सामान्यतया दुष्करविषयत्वात्समर्थनसापेक्षस्य समर्थनं श्रीपाददेशिकेन्द्रस्य स्वानन्दपरिपूर्णत्वादिप्रदर्शनेन कृतमिति काव्यलिङ्गमलङ्कारः। "न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति" इति भावः। वृत्तमिन्द्रवज्रा। ५ श्लोकवत् ॥ ४२ ॥

(श्लोक ४३) अलङ्कारः श्रीचरणैरेव स्फुटीकृतः। वृत्तं वसन्ततिलका। "उक्ता वसन्ततिलका तभजा जगौ गः।" इति लक्षणात्।

त भ ज ज गु.गु..
उक्त्वात–देतिवि–रराम–सधर्म–सेतु इति प्रकृते लक्षणसङ्गतिः। अस्यैव
SS। S।। ।S। ।S। SS
वृत्तस्य "सिंहोन्नता" उद्धर्षिणी, इति नामान्तरे। अतः श्रीचरणोक्त्या न विरोधः ॥ ४४ ॥

(श्लोक ४४) अत्र वाचि निम्बातिशायितिक्तत्वस्य मोचातिशायिमाधुर्यस्य वाऽभावेऽपि तत्सम्बन्धवर्णनादतिशयोक्तिरलङ्कारः। वृत्तम् ४ वत् ॥ ४४ ॥

(श्लोक ४५) वृत्तम्=प्रेमानामा उपजातिः ॥ ४५ ॥

(श्लोक ४६) अत्र लोकप्रवादस्यानुकरणाद् लोकोक्तिरलङ्कारः (?)। "लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते"। इति लक्षणात्। चरमचरणे लुप्तोपमा च। वृत्तम् = १६ वत्। एतदत्यन्तानुरूपं पद्यं यथा श्रीमच्छङ्करविजये —

"कति नाम सुता न लालिताः कति वा नेह वधूरभुञ्जि हि।
क्व नु ते क्व च ताः क्व वा वयं भवसङ्गः खलु पान्थसङ्गमः॥"इति॥४६॥

(श्लोक ४७) अत्र मातुर्वाञ्छाधिकफलप्राप्तेर्वर्णनात्प्रहर्षणालङ्कारः ?। "वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम्" इति लक्षणात्। स्रग्वि-

णीवृत्तम् । " रैश्चतुर्भिर्युता स्रग्विणी सम्मता । " इति लक्षणात् । सम-

र र र र

न्वयश्च– साम्पराया धिला –मोम्बते– न्यासतः इति ॥ ४७ ॥

S I S S I S S I S S I S

(श्लोक ४८) अत्र एकान्तरितोत्तरश्लोके च श्रुत्यादिवाक्योपन्यासेन पितृपूज्यत्वाद्यर्थस्य विनिश्चयाच्छद्मप्रमाणालङ्कारः । एतदादिश्लोकद्वये वृत्तम्=४ वत् । तदुत्तरपद्ये च १९ वत् ॥ ४८-४९-५०॥ ॥

(श्लो॰ ५१) अत्र अपर्णापक्षेत्रेऽपर्णानामनुरूपाणां निवासवर्णनात्समालङ्कारः । " समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः " इति लक्षणात् । आनुरूप्यं च अपर्णानासमन्तात्पातीति व्युत्पत्त्यन्तरकृतमनुसन्धेयम् वृत्तम् ४ वत् ॥ ५१ ॥

(श्लोक ५२) अत्र कल्पवृक्षस्य श्रीपादकर्तृकलघूकरणाऽसम्बन्धेऽपि तत्सम्बन्धोक्तेः सम्बन्धातिशयोक्तिरलङ्कारः । लक्षणमभिहितचरम् ॥५२॥

(श्लोक ५४) अत्रत्यभुजङ्गप्रयाताख्यसमवृत्तस्य लक्षणम्–' भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ' इति । समन्वयश्च—

य य य य

स्वयंती–र्थरूपोऽ–पितीर्थ–प्रकाशम् इति ॥ ५४ ॥

I S S I S S I S S I S S

( श्लोक ५५ ) यतिरूपोपमेयस्य राजरूपोपमानस्य राजनरूपसाधारणधर्मस्य उपमाचकेवशब्दस्य चोपादानात्पूर्णोपमा । सा च श्रीचरणव्याख्यातरीत्या श्लेषानुप्राणिता ॥ ५५ ॥

( श्लोक ५६ ) कोः = भूमेः सुतं मङ्गलं बुधं (तदाख्यग्रहं) व्यधादिति विरोधः परिहारस्तु श्रीचरणव्याख्याने स्पष्ट एव ॥ ५६ ॥

( श्लोक ५७ ) पुष्पिताग्राख्यार्धसमवृत्तस्य लक्षणम्–'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा'इति । प्रकृते तत्सङ्गतिश्च–

न न र य न ज ज र गु.
सयति-रथभ-वान्तरे-पितस्यै-निजस-दृशोत्त-मपुत्र-लब्धयेऽ-जः
।।। ।।। ऽ।ऽ ।ऽऽ ।।। ।ऽ। ।ऽ। ऽ।ऽ ।
इति ॥ ५७ ॥

(श्लोक ५९) मोह एव दामेति रूपकम् । एकस्यैवः वस्तुनः परमाणुत्वपरममहत्त्वयोरसम्भवात्सम्भवन् विरोधः 'अमितमहिम्ने' इति अचिन्त्यशक्तिमत्त्वप्रदर्शनेन परिहृत इति विरोधाभासालङ्कारः॥ ५९ ॥

(श्लोक ६५) एतदादिश्लोकद्वये व्याजस्तुतिरलङ्कारः श्रीचरणैरेव सलक्षणं स्फुटीकृतः ॥ ६५-६६ ॥

(श्लोक ६८) उपमानभूतभगवत्पदजन्यगङ्गाऽपेक्षया उपमेयभूतधर्मे तन्मुखजन्यत्वोद्धारकत्वरूपोत्कर्षवर्णनाद्व्यतिरेकालङ्कारः 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति । न च विनिगमनाविरहाद्वैपरीत्येनोपमानोपमेयभावं स्वीकृत्य गङ्गान्यूनत्वपर्यवसायी अयं व्यतिरेक इति कुतो न वाच्यमिति वाच्यम् । श्लोकात्स्वरसतस्तथाऽप्रतिभानाद्, अप्रयोजनत्वात् , पूर्वश्लोके धर्मस्यैव प्रकृतत्वाच्च ॥ ६८ ॥

( श्लोक ६९ ) अत्र पूर्वार्धे मन्दमति-मूकणाधिकभगवद्गुणगणनरूपाननुरूपपदार्थघटनावर्णनाद्विषमालङ्कारः। 'विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः' इति । तथा गुणेषु मूकणाधिकसङ्ख्याकत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्च । उत्तरार्धे च गुणवर्णनसामर्थ्यहेतुना, भगवद्दया ( विषयत्व ) रूपसाध्यसाधनाच्छ्रीचरणाज्ञप्तोऽनुमानालङ्कारः । 'अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः' इति लक्षणात् । प्रयोगश्च— '( मन्दमतिः ) अयं जनः भ (ग) वद्दयाविषयः त्व(त)दीयगुणवर्णनसमर्थत्वाद् अन्वये मूकादिकविवद्, व्यतिरेके च पश्वादिवदि'ति। यद्यपि 'इदं भ(ग)वद्गुणवर्णनसामर्थ्यं भ (ग) वद्दयैककारणकं तदितराकारणकत्वे सति सकारणकत्वाद्' इति परिशेषानुमानमपि शक्यवचनम् । अनुगुणं चेदं पक्षत्व-कारणत्वद्योतकयोः 'अर्हता, दयया' इति प्रथमा-

तृतीयाविभक्तिनिर्देशयोः। परन्तु तथा सति दर्शितसाधनतांशः सर्वथा श्लोकबहिर्भूत इति प्रोक्तलक्षणोऽनुमानालङ्कारः स्वरसतो नात्र पदं निदध्यादिति प्रथमप्रकार एव ज्यायानित्यलम् ॥ ६९ ॥

( श्लोक ७१ ) हतानां तस्कराणां शोणितमिव शोणा = रक्ता निभा = नितरां कान्तिर्यस्येति रक्तवर्णत्वे उपमा। सन्मणिवदिति च प्रशान्ततेजस्त्वे ॥ ७१ ॥

(श्लोक ७४) अत्र 'मुधापवादो मुग्धाक्षि त्वन्मुखाभं किलाम्बुजम्' इत्यादाविव श्रीगुरुणोपमीयमानस्याभ्रमुदारस्य स्वल्पतरगुणत्वेनोपमाऽनिष्पत्तेर्वर्णनात्प्रतीपालङ्कारः। 'वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत्' इति प्रतीपप्रकरणे कुवलयानन्दोक्तेः। उदाहरणे अनिष्पत्तिनिमित्तं नोक्तम्, अत्र तु 'एष मितदः' इत्यादिना तदुक्तमित्यन्यत्। स्वागताख्यसमवृत्तस्य लक्षणम्—'स्वागतेति रनभाद्गुरुयुग्मम्'इति। प्रकृते तत्सङ्गतिश्च

र न भ गु.गु.
त्वांविने–तरम–दभ्रमु–दारम् इति ॥ ७२ ॥
S । S । । । S । । SS

( श्लोक ७५ ) अत्र मन्दमति[1]करणकभगवद्गुणगणनरूपे उपमेयवाक्यार्थे पाणिकरणककलानिधिकलनरूपस्य उपमानवाक्यार्थस्याभेदारोपान्निदर्शनालङ्कारः। 'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना' इति। हरिणीनामकसमवृत्तस्य लक्षणम्—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति। समन्वयश्च—

न स म र स ल.गु.
'शतमु - खमुखाः-स्तोतुंयं - त्वांप्रवृ - त्तधियोऽ- पिते' इति ॥७५॥
। । । । । S SSS S । S । । S । S

(श्लोक ७६) 'श्रीपदः श्रीप्रदो नः' इत्यत्र श्रीपद इति विशेष्यं श्रीः पदयोर्यस्येति व्युत्पत्त्या श्रीप्रदानसामर्थ्याभिप्रायगर्भम्। अतोऽत्र 'चतुर्णां

( १ ) मन्दमतिरित्यत्र कर्मधारयः।

पुरुषार्थानां दाता देवश्चतुर्भुजः' इत्यादाविव परिकराङ्कुराख्योऽलङ्कारः 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः' इति । सोऽयं जयदेवाद्यादृतः पन्थाः । प्रकाशानुयायिनस्तु—निर्धर्मकस्य विशेष्यांशमात्रस्य क्वापि साभिप्रायकत्त्वासम्भवात् सर्वत्र विशेषणांश एव साभिप्रायकत्त्वस्य वक्तव्यतया ईदृशस्थलेष्वपि परिकरालङ्कार एवेति प्राहुः । तल्लक्षणं च काव्यप्रकाशे- ' विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ' इति ॥ ७६ ॥

( श्लोक ७७ ) अम्बा=पार्वती, माधवस्य=विष्णोः कान्तासीदिति विरोधाभासः स च चक्रवदित्युपमया संसृष्टः। मन्दाक्रान्ताख्यं समवृत्तम्। 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरूचेत्' इति तल्लक्षणम् ।

म भ न त त गु.गु.
'यापूर्वो- क्ताद्विज - सुवनि- ताविप्र - कन्याथ - जाता' इति च सङ्गतिः
ऽऽऽ ऽ।। ।।। ऽऽ। ऽऽ। ऽऽ
॥ ७७ ॥

(श्लोक ७८) अत्र त्रिदशनर्मसुखस्य तुच्छीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । देवी च देवश्च देवौ=पार्वतीपरमेश्वरौ । ताविवेत्युपमा च । देवपदेन सामान्यत्रिदशपरिग्रहे ' तुच्छीकृतत्रिदशनर्मसुखौ' इति नोपपद्येत। भगवत्याः पार्वत्या एव सर्वमङ्गलात्वात्तद्वल्लभस्य परमेश्वरस्यैव च सदाशिवत्वाद् 'भद्रपात्रौ'इति विशेषणमप्यत्रैव विशेषार्थे स्वारसिकमिति सहृदयैराकलनीयम् ॥ ७८ ॥

---

( १ ) ' योग्यभाजनयोः पात्रम् ' इत्यमराद्, रोपदाधिकारस्य लिङ्गानुशासनाद्, अभियुक्तप्रयोगाच्च पात्रशब्दस्य नित्यनपुंसकतया तस्यात्र पुंस्त्वेन प्रयोगो यद्यपि न साधीयानिव भाति, तथापि, ' अर्धर्चादयः पुंसि च ' इति भगवता पाणिनिनैव अर्धर्चादिगणपठितशब्दानां विभाषया पुंस्त्वस्याप्यभ्यनुज्ञानात्पात्रशब्दस्य च तद्गणे पाठात्साधुरेवायं प्रयोगः । न च तल्लिङ्गस्य शास्त्रसम्मतत्त्वेऽपि तथाऽभियुक्तैरप्रयुक्तत्वाद् ' अप्रयुक्तं दैवतादौ शब्दे

(श्लोक ८० ) अत्र द्वैतवादिनां मुखे भ्रूणकर्तृकनीलिमाधाना-सम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः कुचयोरिवेत्युपमया सङ्कीर्णा। चरमचरणे च सैव श्लेषसङ्कीर्णा। ईदृशमेव शङ्करदिग्विजयस्थपद्यं यथा-

द्वैतप्रवादं कुचकुम्भमध्ये मध्ये पुनर्माध्यामिकं मतं च।
सुभ्रूमणेर्गर्भग एव सोऽर्भो द्रागगर्हयामास महात्मगर्ह्यम् ॥ इति ॥

( श्लोक ८१ ) अत्र विरोधाभासः स्पष्टः। अल्पीयसि गर्भे सर्वव्यापकत्वेन महीयसः परमेश्वरस्याधेयत्ववर्णनाद् अधिकालङ्कारश्च। "आधाराधेययोरानुरूप्याभावोऽधिको मतः' इति लक्षणात् ॥ ८१ ॥

( श्लोक ८२ ) हृदयद्वययोगरूपकारणाभावेऽपि दोहदरूपकार्योत्पत्तिकीर्तनाद्विभावनालङ्कारः। 'विभावना विनाऽपि स्यात्कारणं कार्यजन्मचेत्' इति ॥ ८२ ॥

( श्लोक ८४ ) अत्र क्षणलवचपलत्वादिविशेषणानामायुराद्यस्पृहणीयत्वाभिप्रायगर्भतया परिकरालङ्कारः। लक्षणं तूक्तम्। अत्र श्रीचरणाज्ञप्तं पुष्पिताग्राभिधमर्धसमवृत्तम् उत्तरार्धे सम्यक् सङ्गच्छते।, पूर्वार्धे तु प्रथमचरणे यथोक्तलक्षणसत्वेऽपि द्वितीय-चरणे क्रमेण स-भ-र-याणां गणानां सत्त्वादन्ते च गुरोरसत्वाद् 'युजि च नरौ जरगाश्चेति समपादलक्षणं न समन्वेतीति चिन्तनीयं चिन्तकैः ॥ ८४ ॥

( श्लोक ८५ ) अत्र हेतुमतोः = मोह ( इदम्पदोक्त ) स्त्रीसम्भोगयोरैक्यवर्णनाद् 'लक्ष्मीविलासा विदुषां कटाक्षा वेंङ्कटप्रभोः' इत्यादाविव

---

पुंलिङ्गतादिकम्' इति जयदेवादिदर्शितः काव्यदोषः स्यादेवेति वाच्यम्। प्रयोगस्य सर्वथा शास्त्रसम्मतत्वे, गतानुगतिकतामात्रबीजस्य तद्दोषस्याकिञ्चित्करत्वात्। अत एव अन्यैर्महाकविभिः सम्प्रदायभङ्गैकभिया सुदूरोज्झितमपि अनुशासनसम्मतं पद्मादिब्दानां पुंस्यपि प्रयोगं निर्भीकतया विरचयन् विद्वदौषधनैषधादिप्रणेता कविताकामिनीहर्षः श्रीहर्षः न केनापि विदुषा ईषदपि दूषयितुं शक्य इति विदितमेव तत्कृतिजुषाम् ॥

हेतुरलङ्कारः। 'हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते' इति। पूर्वार्धादौ विषमालङ्कारस्तु न शङ्क्यः। योगामृतगलज्ञालादीनां मिथोऽत्यन्ताननुरूत्वेऽपि तद्घटनाया अवर्णनात्॥ ८५॥

( श्लोक ८६ ) अत्र विरतिभिन्नानां स्त्रीणां दारत्वसम्बन्धे, अभयार्पणभिन्नानां यज्ञ-दानादीनां धर्मत्वसम्बन्धे च सत्यपि तदसम्बन्धकीर्तनादतिशयोक्तिभेदः। 'योगेऽप्ययोगोऽसम्वन्धातिशयोक्तिरितीर्यते' इति ॥ ८६ ॥ (१)

(श्लोक ८७) अपमानोदः सुधात्वादिना रञ्जनाद्रूपकालङ्कारः ॥८७॥

( श्लोक ९० ) अजातो जात इति विरोधाभासः ॥ ९० ॥

( श्लोक ९१ ) अतिशयाधानमलक्षत्यसत्त्वं पूर्णत्वनिरञ्जनत्वाभ्यां समर्थितमिति पदार्थहेतुकं काव्यलिङ्गम्॥ ९१ ॥

( श्लोक ९२ ) मूकवाचालीकरणसमर्थे अर्थात्स्वयं पटुवाचि श्रीगुरौ, सादृश्यमूलको मूकत्वभ्रमो लोकस्य वर्णित इति भ्रान्तिमानलङ्कारः। 'भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने' इति प्रकाशोक्तेः॥ ९२ ॥

( श्लोक ९५ ) उपमा स्पष्टा ॥ ९५ ॥

(श्लोक ९६) अत्र श्रूयमाणतथाशब्दप्रतियोगितया यथाशब्दाध्याहाराद् 'यथा कालोप्तबीजं फलति तथा स्वकाले कृतमुद्वहनादि फलति' इति योजनादुपमालङ्कारः। अत एव वस्तुप्रतिवस्तुभावस्य बिम्बप्रतिबिम्वभावस्य वाऽभावान्न प्रतिवस्तूपमा दृष्टान्तो वा शङ्क्यः। एतच्छ्लोकोत्तरार्धस्य व्याख्यानमिव श्रीमच्छङ्करदिग्विजयकाव्यस्थं पद्ययुगलं यथा—

---

( १ ) अत्र श्लोके यथामुद्रितपुस्तकं 'विरतीतरा हि दाराः' इति पाठस्य प्रामाणिकत्वे 'विरतीतराः इति प्रयोगश्चिन्त्यः। दारशब्दस्य नित्यपुंलिगतया तद्विशेषणस्य इतरशब्दस्यापि तल्लिङ्गत्वावश्यंभावात् सर्वनाम्नस्तस्मात्परस्य जसः शीभावे, विरतीतरे' इति रूपसिद्धेर्दुर्निवारत्वात्। जसि विकल्पितसर्वनामसंज्ञाकेषु पूर्वपरावरादिशब्देषु इतरशब्दस्य पाठाभावाद्विकल्पोऽपि न शक्योद्भावन इति।

कालोप्तबीजादिह यादृशं स्यात्सस्यं न तादृग्विपरीतकालात् ।
तथा विवाहादिकृतं स्वकाले फलाय कल्पेत न चेद् वृथा स्यात् ॥
तत्तत्कुलीनपितरः स्पृहयन्ति कामं
तत्तत्कुलीनपुरुषस्य विवाहकर्म ।
पिण्डप्रदातृपुरुषस्य ससन्ततित्वे
पिण्डाविलोपमुपरि स्फुटमीक्षमाणाः ॥इति॥९६॥

( श्लोक ९९ ) 'नवनीतकोमलम्', 'नवनीहारभम्' इति लुप्तोपमे श्रीचरणाङ्गत्वेन काव्यलिङ्गेन संसृज्येते ॥ ९९ ॥

( श्लोक १०० ) अत्र सर्गान्त्यश्लोके पुनरेकसुतावलोकनकुतूहलिन्या अम्बाया भगवदनुग्रहेण युगपत्सुतयुग्मप्राप्तिरनुवर्णितेति प्रहर्षणालङ्कारः । 'वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम्' इति । उदाहृतं च कुवलयानन्दे—

चातकस्त्रिचतुरान्पयःकणान्याचते जलधरं पिपासया । सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ इति ॥ महाराष्ट्रभाषामयश्रीगुरुचरित्रे च चरमभागेऽयमलङ्कारो रूपकेणापि संयोज्य अतिसुन्दरतया विनिवेशितः—'किं वा सिद्धमुनि बलाहक । नामधारक शिष्य चातक । मुख पसरोनि बिन्दु एक । मागता अपार वर्षला ।(अ.५३ ओ. १०१ ॥ इति ॥ १०० ॥

जननीजनकाधिक तव जननी नीता नृसिंह यमलार्थम् ।
जननीरहमपि मुहुरिह जननी मामपि नयस्व यमलार्थम् ॥

( जनं भक्तजनं नयति परमपदं प्रापयतीति जननीः । तत्सम्बुद्धौ हे जननीः ! । सेनानीशब्दवत्प्रक्रिया । अत एव हे जननीजनकाभ्यामधिक ! । तौ तु न तथा कर्तुं पारयत इति प्रसिद्धमेव । हे नृसिंह गुरो । तव जननी अम्बा त्वया यमलार्थं युग्मपुत्ररूपं फलं नीता प्रापिता । इह संसारे अहमपि मुहुः जननी जननानि (उच्चावचानि ) अस्य सन्तीति

जननी । मुहुरित्यनेन सा सकृदेव जननी अहं तु पुनः पुनर्जननीति व्यतिरेको व्यज्यते । अतः मामपि यमलार्थं=यमाल्लः यमलः यमजन्यं भयम्, तस्य अर्थं=निवृत्तिं नयस्व प्रापय । नरकाद्यनर्थकरविषय-वासनां दूरीकृत्य त्वत्पदं प्रापयेति भावः। 'लो दीप्तौ द्यां लश्च भूमौ भये चाल्हादनेऽपि च' इत्येकाक्षरकोशः । 'अर्थोऽभिधेयरैवस्तुप्रयोजन-निवृत्तिषु' इत्यमरश्च । )

इति प्रथमः सर्गः

---

श्रीगणेशदत्तगुरुभ्यो नमः ।

# अथ द्वितीयः सर्गः ।

दलयसि संशयदोलां गलयसि लौल्यं न लालयसि बाल्यम् ।
अनया गुरुमातस्त्वं तनयासुस्थितिमपीह न हि सहसे ॥१॥

( श्लोक १ ) अत्र भज भजेति वीप्साद्योतितसादरभगवद्भजनस्य, भजनीयगतनैकगण्यगुणोपन्यासमुखेन कृत्स्नश्लोकेन समर्थनं कृतमिति काव्यलिङ्गम् ( वाक्यार्थहेतुकम् । ) तच्च मातेवेत्युपमया, 'कामधुग्' 'दयाब्धिः' इति रूपकाभ्यां च सङ्कीर्णम् ॥ १ ॥

( श्लोक २ ) उपमालङ्कारः स्पष्टः ॥ २ ॥

( श्लोक ३ ) उमा तावच्छङ्करस्य भार्या, रमा च विष्णोः, त्वं तु ब्रह्मविष्णुमहेश्वराणां त्रयाणामपि ( तदात्मकस्य मम ) माता । अतः उमातो रमातोऽप्यधिकपूज्यासीत्युपमानापेक्षयोपमेये गुणाधिक्यवर्णना-व्यतिरेकालङ्कारः 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति ॥ ३ ॥

( श्लोक ६ ) श्रीगुरोः कल्पद्रुमत्वेन सम्भावनादुत्प्रेक्षालङ्कारः । सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना इति लक्षणात् । स च श्रीचरणाङ्गत्वेन व्यतिरेकेण सङ्कीर्णः ॥ ६ ॥

( श्लोक ७ ) विधुन्तुदार्तिदेत्युपमा स्पष्टा । तथा मर्मस्पृग्भाषणरूप-कारणसत्वेऽपि दुरितरूपकार्यस्यानुदयवर्णनाद्विशेषोक्तिश्च । 'कार्याजनि-र्विशेषोक्तिः सति पुष्कलकारणे' इति लक्षणात् ॥ ७ ॥

---

( १ ) व्याजस्तुतिः । हे गुरुरूपे मातः ! इति सम्बोधनम् । लौल्यं चाञ्चल्यं सतृष्णत्वं च । 'लोलश्चल-सतृष्णयोः' इत्यमरः । बाल्यं बालावस्था अज्ञानं च । अनया=लोकप्रसिद्धमातृनीतिविरुद्धा । पक्षे अयो लोहः । भावप्रधाननिर्देशाल्लोहत्वं काठिन्यमित्यर्थः । तन्नास्ति यस्याः सा अनयाः । अत्र पक्षे सान्तोऽयं शब्दः । तनयस्य असूनां स्थितिं जीवनमित्यर्थः पक्षे तनयस्य शिष्यस्य अ-सुस्थितिं दुःस्थितिमित्यर्थः ॥

( श्लोक ११ ) अत्र भृङ्गस्य; शुकास्ये सादृश्यमूलकः किंशुक-कुसुमभ्रमः, शुकस्य च भृङ्गे तादृशो जम्बूफलभ्रमो वर्णित इति भ्रान्तिमान् नाम अलङ्कारः। तल्लक्षणं च काव्यप्रकाशे–'भ्रान्तिमान् अन्यसंवित् तत्तुल्यदर्शने' इति। तथा तयोरेवाभीष्टप्रसूनरसलिप्सया प्रवृत्तयोस्तद्विपरीतक्लेशप्राप्तिरनुवर्णितेति विषमालङ्कारोऽपि। तदुक्तं कुवलयानन्दे विषमाधिकारे–'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्' इति। एवं कृत्स्नपूर्वार्धार्थः उत्तरार्धार्थस्योपमानीकृत इति वाक्यार्थोपमा च ॥ एतच्छ्लोकपूर्वार्धार्थः कुवलयानन्दे भ्रान्तिमत्प्रकरणेऽनुष्टुभाऽभिहितः– 'पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः। सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति' ॥ इति ॥ ११ ॥

(श्लोक १५) अत्र भ(ग)वान्; राम इव सेतुं बध्नात्वित्युपमालङ्कारः स्पष्टः। स च भवेऽब्धाविवेत्यादिभिरङ्गोपमाभिरुपस्कृतः। सेतुमिति शब्दश्लेषश्च ॥ १५ ॥

( श्लोक १७ ) बृहस्पतिधिक्करणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ १७ ॥

( श्लोक १८ ) प्राचामाचार्योऽप्याचार्यमाचकाङ्क्षे, भगवानपि भैक्ष्यं भेज इति विरोधाभासः। आज्ञमेवोपवीतं यस्येति रूपकं च ॥१८॥

( श्लोक १९ ) अत्रोपमालङ्कारः स्पष्टः। न च कपर्दिनः श्रीशिवस्य मुण्डित्वाद्यभावान्न सादृश्योपपत्तिरिति शङ्क्यम्। 'नमः कपर्दिने च व्युप्तकेशाय च' इति श्रीरुद्राध्यायश्रुत्या; कपर्दित्वस्येव व्युप्तकेशत्वापरपर्यायमुण्डित्वस्य; उपलक्षणेन दण्डित्वादीनामपि श्रीशिवे प्रतिपादनेन तदुपपत्तेः। अथवा अत्र 'चण्डीट्'पदेन जगद्गुरुशङ्कराचार्यरूपः शिवो ग्राह्यः। तथा च उपमानेऽपि सर्वाणि विशेषणानि स्वरसतः श्लिष्यन्तीति न काऽप्यनुपपत्तिः। अस्मिन्पक्षे चण्डीडित्यस्य स्वायत्तीकृतमाय इत्यर्थः ॥ १९ ॥

